सरस्वतीभवन-अध्ययनमाला

[ ३४ ]

# आयुर्वेदशास्त्रे भूतविद्यायाः

# संवीक्षणात्मकमध्ययनम्


लेखकः सम्पादकश्च

डॉ० विद्याधरशुक्लः

उपाचार्यचरः,

आयुर्वेदमहाविद्यालयस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी





सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-STUDIES

[ Vol. 34 ]

# ĀYURVEDAŚĀSTRE BHŪTAVIDYĀYĀ SAṀVĪKṢAṆĀTMAKAMADHYAYANAM

*BY*

DR. VIDYĀDHARA ŚUKLA

EX-Reader Āyurveda College

Sampurnanand Sanskrit University

Varanasi



VARANASI

1986

Published by :—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

[ This thesis has been approved for the "Vidyavāridhi" ( P-H. D. ) degree of Sampurnanand Sanskrit University and has been published out of generous grant from University Grants Commission, New Delhi ]

Available at :—
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi–221002.

First Edition :—1000 Copies
Price Rs. 45·00

*Printed by* :—
Gaurishankar Press
Madhyameshvara,
Varanasi.

सरस्वतीभवन-अध्ययनमाला
[ ३४ ]

# आयुर्वेदशास्त्रे भूतविद्यायाः संवीक्षणात्मकमध्ययनम्

लेखकः सम्पादकश्च
डॉ० विद्याधरशुक्लः
उपाचार्यचरः,
आयुर्वेदमहाविद्यालयस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी




वाराणस्याम्
२०४२ तमे वैक्रमाब्दे १९०७ तमे शकाब्दे १९८६ तमे ख्रैस्ताब्दे

प्रकाशकः—
अनुसन्धानसंस्थाननिदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।

[ अनुसन्धानप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'विद्यावारिधिः' (पी-एच्० डी०) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगतो लब्धेनाऽऽर्थिकसाहाय्येन मुद्रापितश्च ]

प्राप्तिस्थानम्ः—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२.

प्रथमं संस्करणम्—१००० प्रतिरूपाणि
मूल्यम् :—४५·०० रूप्यकाणि

मुद्रकः—
गौरीशंकर प्रेस,
मध्यमेश्वर,
वाराणसी ।

# भूमिका

**आयुर्वेदस्य पारम्पर्योपदेशः[1]—**

निखिलप्राणिपीडाप्रतीकारपरायणेन, विश्वानि भूतानि परिपालयितुकामेन, विदिताखिलवेदितव्येन विधात्रा प्रागेव सृष्टेः, धर्मार्थकाममूलम्, सर्वविद्याभ्युदय-निःश्रेयससाधनम्, समस्तप्राणिप्राणयात्राकरमायुर्वेदशास्त्रं लक्षश्लोकमध्यामध्याय-सहस्रमय्यां 'ब्रह्मसंहितायाम्' सन्निबद्धमिति प्रतियन्ति पूर्वे परावरदृशः सुश्रुताचार्यप्रभृतयो महर्षयः।

"अनुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः"

"स्वयम्भुवा प्रोक्तमिदं सनातनम्"—(सुश्रुत०, सूत्र० अ० १)

सर्वविधेषु ज्ञानेषु ब्रह्मणोऽव्याहतबुद्धिप्रसरत्वादासीदस्यायुर्वेदार्थविबोध इति मत्वा चाह पुनर्वसुः—

"त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः।"

(चरकसूत्र०, अ० १)

हेतु-लिङ्ग-औषधज्ञानं त्रिसूत्रमित्युच्यते,' शाश्वतम् इति पदेनायुर्वेदशास्त्रस्याविनाशित्वं नित्यत्वञ्च प्रतिपादितं भवति—

"सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते, अनादित्वात्, स्वभावसंसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वाच्च। न हि 'नाभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा शाश्वतश्चायुषो वेदिता' अनादि च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात्।"

(चरकसूत्र०, अ० ३० )

"तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरं च।"

(सुश्रुतसू०, अ० १)

भगवता काश्यपेन च ब्रह्मणैवायुर्वेदो प्राकाश्यं नीत इति समाख्यातम्—

"स्वयम्भूर्ब्रह्मा प्रजाः सिसृक्षुः प्रजानां परिपालनार्थमायुर्वेदमेवाग्रेऽसृजत्, सर्ववित्, ततो विश्वानि भूतानि" (काश्यप० विमान०)।

एभिश्च सन्दर्भैरायुर्वेदशास्त्रस्य प्राथम्येनोपदेशे 'ब्रह्मा'[2] एव विश्रुतत्वेनोपलभ्यते।

---

१. परम्परया आगतः। "तत आगतः" (अष्टा० ४।३।७४) यत्यण्। "चतुर्वर्णादित्वात्" (अष्टा० ५।१।१२४) इति ष्यञ्। "पारम्पर्यश्चासावुपदेशश्च"— अमरकोषः, रामाश्रमीटीका (२।७।१२)

२. 'बृंहयति=वर्धयति प्रजा इति ब्रह्मा'। "बृहि वृद्धौ' (भ्वा० प० से०) अन्तर्भावितण्यर्थः। "बृंहेतेर्नोऽच्च" इति मनिन्। बृंहयति वर्धते इति वा (अमर०, रामाश्रमी० १।१।११६)।

**आयुर्वेदस्य सम्प्रदायपरम्परा—**

साम्प्रतमुपलभ्यमानासु संहितासु निम्नाङ्कितरूपेणोपदेशपरम्परा दरीदृश्यते—

"ब्रह्मा प्रोवाच, ततः प्रजापतिरधिजगे, तस्मादश्विनावश्विभ्यामिन्द्रः"
(सुश्रुतसू०, अ० १।२०)।

ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः॥
अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम्।
(चरकसू०, अ० १।४-५)

"तं पुण्यमायुर्वेदमनन्तमायुषो वर्धनमाधारमाप्यायनममृतमश्विभ्यां कः प्रददौ, ताविन्द्राय" (काश्यप० विमान०)।

अत्र च 'अश्विभ्यां कः प्रददौ' इत्यत्र 'कः' शब्देन ब्रह्मा तथा प्रजापतिरित्युभावपि यद्यपि गृह्येते, तथापि तन्त्रान्तरसंवादादत्र 'कः'शब्देन ब्रह्मा न ग्राह्यः, अपि तु दक्षः प्रजापतिरेव ग्राह्यः। अस्ति च दक्षप्रजापत्यर्थं 'कः'शब्दप्रयोगो भागवतेऽपि पुराणे दक्षयज्ञविध्वंसप्रसङ्गे ब्रह्मा च विष्णुश्च "न कस्याध्वरमीयतुः" इत्यत्र।

**आयुर्वेदस्य लौकिक आर्ष उपदेशः—**

कृतयुगे पृथिव्यादीनां सर्वगुणसमुदितत्वात् सस्यानि किल अचिन्त्यरसवीर्यविपाक-प्रभाव-गुणसमुदितानि बभूवुः। तदानीञ्च जनाः शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानदानदमयमव्रतोपवासपरायणाः समधातवः, समाग्नयः प्रसन्नात्मेन्द्रियमनसोऽभूवन्।

अपक्रान्ते च कृतयुगे[1] केचन प्राणिनो व्यावृत्तशीलाः, दंदशूकाः सञ्जाताः। ते हि जाठराग्निबलेन महतीमाहारमात्रामाददते स्म। तेषाञ्च शरीरं गौरवभाराक्रान्तमभवत्। गौरवाच्च ते कर्मसु न रतिश्चक्रुः, परिश्रान्ताश्चालस्यमनुभवन्ति स्म। सत्यालस्ये ते जीवनयापनाय समुचितं समस्तमेव सम्भारमेकत्रीकर्तुं प्रायतन्त। सञ्चयाच्च सञ्चितेषूपकरणेषु ममत्वमजायत। ममतापरिगतत्वाच्च लोभोऽपि समजनि।

त्रेतायुगे च लोभो वाहनीचकार मनुजान्। ततश्चाभिद्रोहः पदमाससाद। प्रवृद्धे चाभिद्रोहे जनाः सत्यभाषणे नैव मतिश्चक्रुः। वितथभाषणाच्च क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामपारुष्याभिघातोद्वेगादिभिराक्रान्ता जनाः परिदेवयाञ्चक्रुः। क्रमशश्च पृथिव्यादीनां गुणा ह्रासमवापुः। अधर्माचरणाच्च प्राणिनां सस्यानि न तेषां शरीरोपष्टम्भाय प्राभवन्। क्षीयमाणगुणैश्चाहारैरविहितैश्च विहारैर्न प्राणिनो यथापूर्वमारोग्यमधिजग्मुः। शारीराश्च धातवो वैषम्य-

---

१. चरकसं० विमान० अ० ३।२८-३०।

मभजन्। धातूनाञ्च वैषम्याज्ज्वरादिभिर्व्याधिभिराक्रान्तानि शरीराणि। प्राणिनाञ्चायुषो ह्रासोऽजनि।

तथा चान्तरायभूता रोगनिकराः शरीरिणां प्राणानपीडयन्। विविधैश्च[1] [2]शारीरमानसागन्तुभिर्व्याधिभिर्विविधवेदनाभिर्घातोपद्रवादिभिश्च विचेष्टमानान् मानवानभिसमीक्ष्य महामतयो महर्षयो नगाधिराजस्य हिमवत उपत्यकायां व्याधितानामार्तिप्रशमनाय[2] विमर्शमकार्षुः।

तत्र चानेकविधा महर्षयः समवेता आसन्। यमनियमव्रतपरा ब्रह्मज्ञानिनो वैखानसाः, वालखिल्याः, [3]शालीना यायावराश्च यदाऽऽमयाभिभूता आह्निकेषु कृत्येष्वसमर्थतामनुभवाञ्चक्रुः, तदाऽमराधिपतिगुप्तं शिवं पुण्यमुदारं दिव्यौषधिप्रभवमतिशरण्यं हिमवन्तमुपजग्मुः।

ते चैवमनुचिन्तयन्ति स्म यद् भूतलविधेयतायाः पुरुषार्थचतुष्टयोपलब्धिरेव परमं प्रयोजनम्। व्याधिजराविधुरेण च शरीरेण न तदवाप्तुं शक्यम्। अतोऽभ्युदयनिःश्रेयससाधकस्य शरीरस्य यथा नैरुज्यं भवेत्, तथाऽनुष्ठेयम्। धर्मार्थकाममोक्षमूलस्य चारोग्यस्योपलब्धय उपायश्चिन्त्यतामिति मतिमकुर्वन्। ध्यानावस्थितैस्तद्गतमनोभिश्च तैरधिगतं सर्वासामापदां प्रतीकारपरं पुण्यं शरण्यम्।

ते च ध्यानचक्षुषाऽपश्यन् यदमराधिपती रोगप्रशमनोपायं वक्ष्यतीति, यतो हि स खलु शक्तो वर्तते। अश्विभ्याञ्च[4] भगवान् शक्र आयुर्वेदं प्रतिपेद एव केवलम्, न तु कस्मैचिदायुर्वेदं दत्तवान्। अथ चेन्द्रोऽसंक्रामितविद्यत्वेन शिष्यार्थी, तथा च—"यो हि गुरुभ्यः सम्यगादाय विद्यां न प्रयच्छत्यन्तेवासिभ्यः, स खलु ऋणी गुरुजनस्य महदेनो विन्दति" इति।

अतोऽकृतशिष्यत्वेन शिष्यार्थित्वविशेषयोगाद् ब्रह्मादिभ्यो विशेषेणेन्द्र एव शरण्य इति।

सत्स्वपि जमदग्निवसिष्ठकश्यपादिषु महर्षिवर्येषु प्रवरसत्त्वाद् वीर्यसम्पन्नत्वाद् भरद्वाजः स्वयमेव शचीसम्भोगव्यासक्तमप्युपासितुमात्मनि क्षमत्वं मेने। सहस्राक्षस्य सुराधिपतेः समक्षमुपस्थातुं न सामान्यजनाः प्रभविष्यन्तीति सञ्चिन्त्य ऋषिभिरनुज्ञातो भरद्वाजः शक्रमुपागमत्।

महर्षिवर्यं भरद्वाजञ्च वीक्ष्य सहस्रदृगमरगुरुरिन्द्रो ज्ञानतपोधनाय ब्रह्मविदे महर्षये स्वागतं व्याजहार। महर्षिश्च जयाशीर्भिरमरेश्वरमभिनन्दयामास, प्रोवाच च विनयावनतः—हे अमरप्रभो! सर्वप्राणिभयङ्करा व्याधयो जनान् भृशं पीडयन्ति, तत्प्रतीकारार्थञ्च क उपाय इत्याचक्षस्व।

शतक्रतुश्च प्रतिभावतस्तस्य महर्षेः शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशवतीं विपुलां मतिं समवेक्ष्य, ब्रह्मादिगुरुपरम्परोपदर्शितमविप्लुतागमम्, सुमहद्यशस्विधीरपुरुषासेवितम्, [5]हेतुलिङ्गौषधज्ञानम्, स्वस्थातुरपरायणम्, शाश्वतं

---

१. सुश्रुतसूत्र०, अ० १।४; २. चरकसूत्र०, अ० ११६-२३।

३. चरक० चि० १, ४।३।

४. चरकसूत्र०, अ० ११५—चक्रपाणिः; ५. चरकसूत्र०, अ० ११२४-२५।

पुण्यतममायुर्वेदमल्पैरेव पदैः प्रोवाच । महामतिर्भरद्वाजश्चानन्तपारमायुर्वेदमचिरेणैव कालेन यथावज्जग्राह ।

एवञ्च भुवि भरद्वाज एव प्रथमो महर्षिर्भिषक्तन्त्रप्रवर्तक इति निश्चिनुमः। भरद्वाजश्च सर्वप्राण्युपकारार्थाधीतायुर्वेदजनितधर्मवशात् तत्कालमेवामितमायुर्लेभे ।

'तेनायुरमितं लेभे भरद्वाजः सुखान्वितः'।

( चरकसू०, अ० १।१६ )

सोऽपि स्वाधीतमायुर्वेदं कात्स्न्येन ऋषिभ्यो प्रोवाच—

ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन् ।
ऋषयश्च भरद्वाजाद् जगृहुस्तं प्रजाहितम् ।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः ।।

( चरकसूत्र०, अ० १।२६-२७ )

हारीते चात्रेयगुरुतया भरद्वाज उक्तः, "शक्रादहमधीतवान्[1]" इत्यादिना ।
मत्तः पुनरसंख्येयास्त्रिसूत्रं त्रिप्रयोजनम् ।
अत्र्यात्रेयादिपर्यन्ता विदुः सप्तमहर्षयः ।।
आत्रेयाद्धारीत ऋषिः·················।" इत्यन्तेन ।

इत्थञ्च यद्यप्यात्रेयसम्प्रदायसंहितायां ( चरके ) न साक्षादुक्तं भरद्वाजशिष्यत्वमात्रेयस्य, तथापि समानतन्त्रहारीतसंवादादनुमेयमिति व्याचष्टे चक्रपाणिः ।

**सम्प्रदायद्वयम्—**

करुणापरायणोऽमराधिपतिः शल्यशालाक्यकायचिकित्साद्यष्टाङ्गेषु विभक्तमायुर्वेदं केनाप्येकेनाचार्येण दुरधिगमं मन्वानो मानवचिकित्सायाः सम्प्रदायद्वयं चकार । तत्र शल्यशालाक्यप्रधानमायुर्वेदं धन्वन्तरिपरम्परया, कायचिकित्साप्रधानं च भरद्वाजपरम्परयेति विभजयाम्बभूव ।

**भरद्वाजपरम्परा—**

महर्षिस्तु भरद्वाजो धीधृतिस्मृतिविज्ञानसमृद्धमुदारसत्त्वं पुनर्वसुमात्रेयं समग्रं कायचिकित्साप्रधानमायुर्वेदशास्त्रमुपदिदेश । आत्रेयश्च भगवान् पाञ्चालक्षेत्रे[2] द्विजातिवराध्युषितायां काम्पिल्यराजधान्यां कृताश्रमः सर्वभूतानुकम्पयाऽग्निवेशभेल-जतूकर्ण-पराशर-हारीत-क्षारपाणिनाम्नः षड्भ्योऽन्तेवासिभ्यः समग्रमायुर्वेदं प्रददौ ।

ते चाग्निवेशप्रभृतयः स्वस्वबुद्ध्युत्कर्षानुसारं स्वस्वनामाङ्कितं भेलतन्त्रं जतूकर्णतन्त्रमित्यादिकं निर्मिमिरे । तानि च तन्त्राणि ऋषीणां सन्निधौ श्रावयामासुः ।

---

१. चरकसूत्र०, अ० १।३०-३१ चक्रपाणिटीका; २. चरक० विमान०, अ० ३ ।

बुद्धेर्विशेषस्तत्रासीद् नोपदेशान्तरं मुनेः ।
तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत् ।।
अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।
श्रावयामासुरात्रेयं सर्षिसंघं सुमेधसः ।।

( चरकसूत्र०, अ० १।३१-३३ )

अस्यां च परम्परायामग्निवेशसंहिता, भेलसंहिता, जतूकर्णसंहिता, पराशरसंहिता, हारीतसंहिता, क्षारपाणिसंहिता, खरनादसंहिता, विश्वामित्रसंहिता, अगस्त्यसंहिता, अत्रिसंहिता चेति कायचिकित्साप्रधानतन्त्राणि गवेषणापरायणैराचार्यैर्लब्धपरिचयानीत्यवगम्यते[१] ।

आत्रेयकालीनकायचिकित्साचार्याणां नामानि तु [२]चरके प्रागेवोपन्यस्तानि । कायचिकित्सायां समुपलभ्तमानग्रन्थेषु चरकसंहिता-सुश्रुतसंहिता-अष्टाङ्गहृदयसंहिता मुख्याः । अष्टाङ्गसंग्रह-शार्ङ्गधरसंहिता-भावप्रकाश-वङ्गसेनसंहिता-आयुर्वेदसंग्रह-चक्रदत्त-योगरत्नाकर-योगतरङ्गिणी- भैषज्यरत्नावलीप्रभृतिग्रन्थास्तदुपजीविनः संग्रहमात्राः । निघण्टु-निदानादिग्रन्थास्तु रोगविज्ञानाद्येकदेशपराः । रसरत्नसमुच्चयरसरत्नाकररसेन्द्रचिन्तामणिरसेन्द्रसारसंग्रहादिरसग्रन्थास्तु दैवानुकूल्यादद्यापि चिकित्साकर्मसु महनीयमनुग्रहं विदधति ।

**धन्वन्तरिपरम्परा--**

महेन्द्रो मनीषी शल्यप्रधानमायुर्वेदं धन्वन्तरिपरम्परया प्रवर्तयाञ्चकार । सुश्रुते च "साक्षाद् देवेन्द्राद् धन्वन्तरिरधिजगे" इत्युक्तम् । तथा हि —"इन्द्रादहम्, मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः" (सुश्रुतसूत्र०, अ० १ ,२० ) ।

अत्र चक्रपाणिः—इन्द्रादहमिति इन्द्रस्यासंक्रामितविद्यत्वेन शिष्यार्थितया तत आयुर्वेदग्रहणं धन्वन्तरेः । उच्यते हि–सम्यग् गुरुमुखादधीत्य विद्यां यो न प्रयच्छत्यन्तेवासिभ्यः, स खलु ऋणी गुरुजनस्य महदेनो विन्दति" इति ।

यद्यपि—

तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ।
काशिराजो महाराजः सर्वरोगप्रणाशनः ।।
आयुर्वेदं भरद्वाजात् प्राप्येदं भिषजां क्रियाम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ।।

(हरिवंशे--अ० २९)

इति हरिवंशोल्लेखात् तथा महाभारत-वायुपुराण-ब्रह्माण्डपुराणादिषु भरद्वाजादायुर्वेदाध्ययनं धन्वन्वरेः प्रस्तूयते, तथापि—

अहं धन्वन्तरिर्भूत्वा अधिगम्य महत्त्वतः ।
आयुर्वेदं करिष्यामि मर्त्यलोकं निरामयम् ।। इति ।।

( ग० पु० १।२०४।१ )

---

१.प्रत्यक्षशारीरोपोद्घाते, २३ पृष्ठे । २.चरकसू०, अ० १।८-१६ ।

गारुडोक्तेः सुश्रुतोक्तं धन्वन्तरेरिन्द्रसकाशादध्ययनं सप्रमाणमेवेति। धन्वन्तरिणा स्वयमेवात्मपरिचयो दत्तः—

अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम्।
शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम्॥
(सुश्रुतसू०, अ० १।२१)

स राजर्षिर्दिवोदासो धन्वन्तरिर्निखिलविद्याराजधान्यां वाराणस्यामुषितवान्। सुश्रुत-औपधेनव-औरभ्र-पौष्कलावत-करवीर्य-गोपुररक्षित-भोज-वैतरण-प्रभृतीन् शिष्यवरान् शल्याङ्गमूलमायुर्वेदमध्यापयामास।

ते च स्वस्वनामभिः पृथक् पृथक् तन्त्राणि तेनिरे। अपरे च भालुकि-कपिल-गोतम-प्रभृतयोऽपि तन्त्राणि विरचयामासुरिति समुपलब्धसंहिताग्रन्थानां टीकाकर्तृणां समुद्धरणैः प्रतीयते।

विदेह-निमि-काङ्कायन-गार्ग्य-गालव-सात्यकि-शौनक-कराल-कृष्णात्रेयादिभिश्च शालाक्यतन्त्राणि निर्मितान्यासन्। अपरैश्चाचार्यैरन्येषामप्यायुर्वेदाङ्गानां ग्रन्थरत्नानि निर्मितानि, किन्तु दैवदुर्विपाकाद् बहूनां तन्त्राणां नाम एवावशिष्यते। टीकाकर्तृणां डल्हण-चक्रपाणि-विजयरक्षित-श्रीकण्ठदत्त-भट्टारजेज्जट-गदाधर-शिवदाससेनप्रभृतीनां जीवनकाले च समुपलभ्यमाना ग्रन्थाः शशविषाणायिता एव। टीकाकर्तृभिर्नामोल्लेखनेन च तेषामाचार्याणां तन्त्राण्यासन्नित्यनुमीयते।

स्वनामधन्येन स्वर्गीयगणनाथसेनमहोदयेन स्वकृते "प्रत्यक्षशारीरोपोद्घाते" पञ्चाशत्तन्त्राणां नामोल्लेखनं कृतमास्ते, तेषु बहुतिथानि तु लुप्तप्रायाण्येव।

अस्तु, तावत् पूर्ववर्णितक्रमेण चेदं स्पष्टमेवावसीयते यदमरगुरुरिन्द्रो द्वेधा विभज्यायुर्वेदं कायचिकित्साप्रधानं भरद्वाजपरम्परया तथा शल्यप्रधानमायुर्वेदं धन्वन्तरिपरम्परया भुवि विस्तारयामास।

आयुर्वेदसमुत्थानक्रमो यथोपलभ्यते चरकचिकित्सास्थाने, सोऽपि बुद्धिमतामूहापोहस्वारस्यानुरोधादुद्ध्रियते—

"ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टा नातिकल्याश्च प्रायेण बभूवुः। ते सर्वासामितिकर्तव्यतानामसमर्थाः सन्तो ग्रामवासकृतमात्मदोषं मत्वा पूर्वनिवासमपगतग्राम्यदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममरगन्धर्वकिन्नरानुचरितमनेकरत्नमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभावमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुर्भृग्वङ्गिरोऽत्रि-वसिष्ठ-कश्यपागस्त्य-पुलस्त्य-वामदेवासित-गौतमप्रभृतयो महर्षयः।

"तानिन्द्रः सहस्रदृगमरगुरुरब्रवीत्—स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणाम्। अस्ति ननु वो ग्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यं च ग्राम्यवासकृतमसुखमसुखानुबन्धं च। ग्राम्यो हि वासो मूलमशस्तानां तत्कृतः पुण्यकृद्भिरनुग्रहः प्रजानाम्, स्वशरीरमवेक्षितुं कालः, कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणाम्,

आत्मनः प्रजानां चानुग्रहार्थमायुर्वेदमश्विनौ मह्यं प्रायच्छताम्, प्रजापतिरश्विभ्यां प्रजापतये ब्रह्मा, प्रजानामल्पतपोयमनियमदानाध्ययनसञ्चयं मत्वा पुण्यतममायुः-प्रकर्षकरममृतं शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतुमर्हताथोपधारयितुं प्रकाश-यितुं च प्रजानुग्रहार्थमार्षं ब्रह्म च प्रति मैत्रीं कारुण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति ।

तच्छ्रुत्वा विबुधपतिवचनमृषयः सर्वं एवामरवरमृग्भिस्तुष्टुवुः, प्रहृष्टाश्च तद्वचनमभिननन्दुश्चेति । अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः संक्राम्योवाच—"एतत्सर्वं-मनुष्ठेयम्" (चरकचि०, अ० १, पादः ४,३-६) ।

**पुराणानुसारमायुर्वेदपरम्परा, तत्कालीनग्रन्थाश्च--**

ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थं चैवायुर्वेदं चकार सः ॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः ।
स्वतन्त्रसंहितां तस्माद् भास्करश्च चकार सः ॥
भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम् ।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः ॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च ।
व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय ॥
* [1]धन्वन्तरिर्दिवोदासः[2] [3]काशिराजोऽ[4]श्विनी[5]सुतौ ।
[6]नकुलः [7]सहदेवोऽ[8]र्कि[9]श्च्यवनो जनको[10] बुधः[11] ॥
[12]जाबालो [13]जाजलिः [14]पैलः [15]करथोऽगस्त्य [16] एव च।
एते वेदाङ्गवेदज्ञाः षोडशव्याधिनाशनाः ॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोहरम् ।
धन्वन्तरिश्च भगवान् चकार प्रथमे सति ॥
चिकित्सादर्शनं नाम दिवोदासश्चकार सः ।
चिकित्साकौमुदीं दिव्यां काशिराजश्चकार च ॥
चिकित्सासारतन्त्रं च भ्रमघ्नं चाश्विनीसुतौ ।
तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्दनम् ।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार ह ॥
च्यवनो जीवदानञ्च चकार भगवानृषिः ।
चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥
सर्वसारं चन्द्रसुतो जाबालस्तन्त्रसारकम् ।
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः ॥

---

*अत्र धन्वन्तरि-दिवोदास-काशिराजानां पृथक्त्वमङ्गीकृतमिति वैचित्र्यम्।

पैलो निदानं करथस्तन्त्रं सर्वधरं परम् ।
द्वैधनिर्णयतन्त्रं च चकार कुम्भसम्भवः ।।
चिकित्साशास्त्रबीजानि तान्येतानि हि षोडश ।
व्याधिप्रणाशबीजानि बलाधानकराणि च ।।
मथित्वा ज्ञानमन्थेनैवायुर्वेदपयोनिधिम् ।
ततस्तस्मादुदाजह्रुर्नवनीतानि कोविदाः ।।
(ब्रह्मवैवर्त्तपु०, ब्रह्मखण्डे, अ०१६)

**आयुर्वेदीयसंहितानुसारं सम्प्रदायक्रमः--**




**आयुर्वेदस्य वेदत्वम्--**

समस्ते भारतीये समाजे वाङ्मये च वेदानामतीव महनीयं पवित्रतमं पदमास्ते । वेदा न केवलमस्माकं धर्मग्रन्था एव; अपि तु मानवजीवनस्य सर्वविध-समस्यानां समाधानार्थमपि तेषामुपादेयत्वमङ्गीक्रियते । आप्तवाक्याद् वेदानां प्रामाण्यं स्वीक्रियते । वेदाश्चापौरुषेयाः सर्वशक्तिमतः परब्रह्मणो मुखान्निसृताः पूज्याश्च सन्ति ।

आयुर्वेदोऽपि शाश्वतः, पुण्यतमः; महत्त्वपूर्णोऽभ्युदयनिःश्रेयसप्रदश्च वेदाङ्गो वर्तते । अयं चाथर्ववेदस्योपवेदः । अथर्ववेदे च बाहुल्येनायुर्वेदविषयाः समुपलभ्यन्ते । यद्यपि सर्वेष्वेव वेदेषु वैद्यकविषयाणामुपलब्धिर्भवति, तथाप्यथर्ववेदे

प्रभूतविषयोपन्यासात् तस्यैवोपवेदत्वमायुर्वेदस्य मन्यते । एवाश्चायुर्वेदस्य वेदैः सह घनिष्ठः सम्बन्धो वरीवर्ति । अतश्चायुर्वेदस्य वेदत्वमसन्दिग्धमेव । तथा च—

तस्यायुषो पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितम् ॥

( चर० सूत्र०, अ० १।४३ )

आयुर्वेदलक्षणो वेदः पुण्यतमो वेदविदां च पूजितः । यत ऋग्वेदादयः प्रायः परलोकहितमेवार्थं वदन्ति, तेन ते पुण्याः, पुण्यतमश्चायमायुर्वेदो यद् यस्माद् मनुष्याणामुभयोरपि लोकयोर्यद्धितमायुरारोग्यसाधनं धनसाधनं च । जीवितप्रदातृत्वादायुर्वेदस्य पुण्यतमत्वं बोद्धव्यम् ( चर० सूत्र०, अ० १।४३--चक्रपाणिः ) ।

आयुर्वेदीया आचार्याश्चायुर्वेदस्याथर्ववेदाङ्गत्वमुपवेदत्वं वा स्वीकुर्वन्ति । यथा हि--"इह खल्वायुर्वेदमष्टाङ्गमुपाङ्गमथर्ववेदस्य" ( सुश्रुतसूत्र०, अ० १।६ )

"कं वेदं श्रयति, अथर्ववेदमित्याह । तत्र हि रक्षावलिहोमशान्ति ........ प्रतिकर्मविधानमुद्दिष्टं विशेषेण, तद्वदायुर्वेदे, तस्मादथर्ववेदं श्रयति ।"

( काश्य० विमा० १, अ० १ )

"आयुषः पालनं वेदमुपवेदमथर्वणः" ( अष्टाङ्गसंग्रहः ) ।

"तत्र भिषजा पृष्टेनैवं चतुर्णामृग्यजुःसामाथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या । वेदो ह्यथर्वणो दानस्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहात् चिकित्सां प्राह" ( चर० सू०, अ० ३०।२१ ) ।

अथ च व्यासकृते चरणव्यूहे शङ्करकृते च 'आयुर्वेद'नामके ग्रन्थे न चायुर्वेदः अथर्ववेदस्योपवेदः; अपि तु ऋग्वेदस्योपवेदः स्वीकृत आस्ते । यथा —

"सर्वेषामेव वेदानामुपवेदा भवन्ति' ऋग्वेदस्यायुर्वेद उपवेदः, यजुर्वेदस्य धनुर्वेद उपवेदः, सामवेदस्य गन्धर्ववेद उपवेदः, अथर्ववेदस्य शस्त्रशास्त्राणि" ।

एवं चायुर्वेदस्य वेदत्वप्रतिपादकानि नानामुनीनां वचनान्युपलभ्यन्ते ।

काश्यपसंहितायां त्वायुर्वेदस्य वेदत्वमङ्गीकृतमास्ते । तस्य च सयुक्तिकं पञ्चमवेदत्वं प्रतिपादितम् । तथा च —"एवमेवायमृग्वेदयजुर्वेदसामवेदाथर्ववेदेभ्यः पञ्चमो भवत्यायुर्वेद इति । किं कारणम् ? यथा हि वेदेषु सततं ब्रह्मज्ञैस्त्रिवर्गसंयुक्तं पुरुषनिःश्रेयसं चिन्त्यते । एवमेवास्मिन्नपि वेदे निदानोत्पत्तिलिङ्गारिष्टचिकित्सितैः सततमेव हितसुखकरं त्रिवर्गसारभूतं पुरुषनिःश्रेयसं चिन्त्यते । तद्यथा च विविधविज्ञानज्ञानोपपन्ना भाष्यवचनविदोऽष्टाङ्ग्या बुद्धयोपपन्ना लङ्घनप्लवनस्थानासनगमनागमनसमर्था अपि च नाम मनुष्या अदेशवन्तो नित्यमेव देशज्ञं दैशिकमन्वयुः । एवमेव खलु वेदनासु शिक्षा-कल्प-सूत्र-निरुक्तवृत्तच्छन्दोयज्ञसंस्तर-

ज्ञानसमुच्चयविशेषज्ञा आयुर्वेदमेवानुधावन्ति । तस्माद् ब्रूमः--ऋग्वेद-यजुर्वेद-सामाथर्ववेदेभ्यः पञ्चमोऽयमायुर्वेदः" ( काश्यपविमान०, अ० १ ) ।

अत्र च सन्दर्भे आयुर्वेदस्य वेदत्वं स्पष्टमेव प्रतिपादितं वर्तते । बहुत्र चायुर्वेदशब्दप्रयोगस्थले केवलो वेदशब्द एव प्रयुक्तो वर्तते । तथा हि—

अथातो वेदोत्पत्तिमध्यायं व्याख्यास्यामः (सुश्रु० सू०, अ० १) ।

'प्राणाचार्यं वेदपरं प्रयातम्' (अष्टाङ्गसंग्रहः) ।

स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।
वेदस्यास्य तदर्थं हि वेदोऽयं संप्रकाशितः ॥
(चर० सू०, अ० १, ४७)

महाभारते च (११।१२।३३) आयुर्वेद उपवेदत्वेन वर्णितः । तट्टीकाकारेण नीलकण्ठेन च चत्वार उपवेदा वर्णिताः । आयुर्वेदः, गन्धर्ववेदः, धनुर्वेदः, अर्थशास्त्रञ्चेति ।

ब्रह्मवैवर्त्तपुराणञ्च वर्णयति (१।१६।९-१०) यद् ब्रह्मा चतुरो वेदान् निर्माय पश्चादायुर्वेदं निर्ममे । तथा च—

ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थं चायुर्वेदं चकार सः ॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ पुनः ॥

एवञ्च विभिन्नमतानां पर्यालोचनेन निम्नाङ्कितो निष्कर्षो निःसरति—

१. आयुर्वेदः पञ्चमो वेदः ।
२. आयुर्वेदः पुण्यतमो वेदः । अन्ये च वेदाः पुण्याः ।
३. आयुर्वेदः अथर्ववेदस्योपवेदः ।
४. आयुर्वेदः अथर्ववेदस्योपाङ्गः ।
५. आयुर्वेदः स्वतन्त्रो वेदाङ्गः ।

मतवैभिन्येऽपि वेदस्यास्याथर्ववेदेन सह घनिष्ठः सम्बन्धो दरीदृश्यते । प्रथमस्त्वायुर्वेदोऽथर्ववेदस्य सहायकः (उपाङ्गः) आसीत् । क्रमेण च संवर्धितः सन्नुपवेदत्वेन परिगणितः । शनैः शनैर्यदा सर्वाङ्गीणो जातः, तदा पञ्चमवेदत्वमाप । ऐहलौकिक-पारलौकिकोभयकल्याणकर्तृत्वादारोग्यमूलत्वात् 'पुण्यतमो वेदः' इत्याख्यातः ।

**आयुर्वेदस्य स्वरूपम्—**

आयुर्वेदस्य विविधाः परिभाषा आचार्यैर्वर्णिताः सन्ति । केचन मन्यन्ते यदयं 'जीवनस्य विज्ञानमस्ति' । अतश्चायुषो विषये यत्किमपि ज्ञानमुपलभ्यते, तत् सर्वमत्र समाहार्यम् । यया विद्यया रुग्णानामार्तिनाशो भवेत्, मानवानां च जीवनमारोग्यमयं दीर्घायुष्यं च स्यात्, सा विद्या आयुर्वेदीया विद्या वर्तते ।

एवञ्च चिकित्साजगति यच्चैरन्तनं ज्ञानं जातमास्ते, यच्च नूत्नं रमणीयं जीवनोपयोगिज्ञानं विश्वस्मिन् यत्र क्वापि प्रचलितं दृश्यते, तदत्र सात्मीकृतं स्यात्। ते च—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥

इत्यनुसारं नीरक्षीरविवेकबुद्धया, धैर्येण, परिश्रमेण च यदाधुनिकैरायुर्विषये ज्ञानमाविष्कृतं वर्तते, तदपि नानायुर्वेदीयमित्यामनन्ति।

आयुर्वेदश्चैकमतीव महत्त्वपूर्णं विज्ञानमस्ति। विज्ञानं च सार्वभौमं भवति सार्वजनीनं भवति; न तत्र कस्यापि जातेरधिकारः स्वीक्रियते। एवं चेदमपि निगदितुं शक्यते यत् 'कृतानि पुत्रैरकृतानि पूर्वैः' अर्थाद् ह्यो यदविदितमासीत्, तदद्य ज्ञायते, अद्य वा यदविदितमस्ति, तत् श्वो ज्ञातुं शक्यते। विज्ञानस्य बुद्धेश्च सीमाङ्कनं नैवास्ति। विज्ञानविषये चाहर्निशं गवेषणा बोभवीति। अतश्च ते प्राच्यचिकित्साविज्ञानस्यात्याधुनिकस्य च चिकित्साविज्ञानस्य सामञ्जस्यं विदधति।

ज्ञानं च पवित्रतमं वस्तु, तदाहरणे च सततं प्रयतितव्यम्। "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते"। एनमेव राद्धान्तमङ्गीकृत्य आयुर्वेदे युगानुसारिणी प्रगतिर्दृश्यते। इदं च विज्ञानं शाश्वतं सत्यं सनातनं विश्वजनीनं सर्वप्राणिहितकरं सार्वभौमं विज्ञानमस्ति। न चात्र रूढिग्रस्तता परिलक्ष्यते।

दृश्यते किल यद् वैदिके काले या चिकित्सापद्धतिरासीत्, सा चरकसुश्रुतादिकाले विकासमाप।

औषधविज्ञानस्य रूपं परिवर्तितम्, नवीना चिकित्साप्रक्रिया, तदङ्गानां विविधाश्चाभिनवाः प्रयोगाः प्रावर्तन्त। संहिताकालिकी च चिकित्साप्रक्रिया संग्रहकाले परावर्तिताऽभूत्। निदानविषये चिकित्साविषये च महत्त्वपूर्णं परिवर्तनं समजनि। चिकित्साक्षेत्रे नवीनानां योगानां परिकल्पनमारब्धम्। रसविद्या च स्वचमत्कारेण सौकर्येणारोग्यप्रदानात्, क्षिप्रमारोग्यदायित्वादल्पमात्रोपयोगित्वाच्च सत्वरमेव प्रससार। वानस्पतिकानां जान्तवद्रव्याणां च प्रयोगस्थलेषु रसोपरसलोहानां विषोपविषाणामपि बाहुल्येन प्रयोगसौष्ठवं स्वगुणोत्कर्षतामवाप।

परवर्तिनि च काले यूनानीचिकित्सास्पर्धायुगे कतिपययूनानीद्रव्याणां चोपचीनीपारसीकयवानीप्रभृतीनां प्रयोगोऽपि वैद्यैरङ्गीकृता। तेषां तेमौषधानां निघण्टुग्रन्थेषु सङ्कलनं कृतम्।

यदा वैदेशिकानां पुर्तगीजव्यापारिणां भारतभूमौ समागमो जातः, तदा तेषामङ्गसंस्पर्शात् तत्स्त्रीभिः सहवासाद् वा 'फिरङ्ग'रोगोऽजायत। स च रोग आयुर्वेदपद्धत्या निदान-रूप-सम्प्राप्तिक्रमेण संग्रहग्रन्थेषु चिकित्स्यत्वेन समाकलितः युगानुरूपसन्दर्भे च नैवायुर्वेदाचार्या विमनसोऽभूवन्। मानवानां हितकाम्यया प्रवृत्तमिदं शास्त्रमावश्यकतानुसारं सन्नृप इव सदैव निरातङ्काः प्रजाः कर्तुमियेष।

इदं शास्त्रमतीव व्यवहारिकं विद्यते। अत एव शास्त्रकृद्भिरादिष्टं यन्न केवलं शास्त्रेऽभिनिवेशमादध्यात्; अपि तु यथावसरं दोषभेषजदेशकालादीननुचिन्त्य स्वयमेवोहापोहपूर्वकं चिकित्सितमाचरेत्। तथा च—

न चैकान्तेन निर्दिष्टे शास्त्रे निविशते बुधः।
स्वयमप्यत्र भिषजा तर्कणीयं यथामति ॥

"भिषग् बुद्धिमान् परिसंख्यातमपि यद्यद् द्रव्यमयौगिकं मन्येत, तत्तदपकर्षयेत्, यद्यच्चानुक्तमपि यौगिकं मन्येत, तत्तद्विदध्यात्। वर्गमपि वर्गेणोपसंसृजेदेकमेकेनानेकेन वा युक्ति प्रमाणीकृत्य।"

"प्रचरणमिव भिक्षुकस्य, बीजमिव कर्षकस्य, सूत्रं बुद्धिमतामल्पमप्यनल्पज्ञानायतनं भवति। तस्माद् बुद्धिमतामूहापोहवितर्काः।"

(चर० विमा०, अ० ८।१५२)

एवं चामेध्यादपि काञ्चनं ग्राह्यमिति कृत्वा, गोपाल-तापस-व्याध-मालाकार-वनेचरानपि पृच्छेदौषधपरिचर्यार्थमित्यादेशः कृत आस्ते। किं पुनरारोग्यप्रदानां सुपरीक्षितानां बहुशो दृष्टफलानामोषधीनां संग्रहणे को नाम विज्ञो जनो नानुरज्येत। यतो हि—

तदेव युक्तं भैषज्यं यदारोग्याय कल्पते।
स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् ॥

(चर० सू०, अ० १।१३३)

आयुर्वेदे विविधेषु स्थलेषु सदाचारस्य, सद्वृत्तस्य, सद्व्रतस्य, धर्माचरणस्य च महत्त्वमाख्यातमास्ते। ज्ञानबुद्धिप्रदीपेनातुरास्यान्तरात्मनि यो वैद्यो न प्रविशति, नासौ रोगांश्चिकित्सितुं प्रभवेत्। अतश्च रोगिणा सहैकरूपता स्थापनीया भवति। वेदनायां सत्यां सहानुभूतिपूर्वकं मीमांसा कर्तव्या। निदानपूर्वकं व्याधेस्तत्त्वपरिज्ञानं विधेयम्, अनन्तरञ्च यथा यथा वेदनानिवृत्तिर्जायेत्, आरोग्यलाभो भवेत्। धातुसाम्यं स्थापितं स्यात्, तथा तथा प्रयतितव्यम्। एतदेव वैद्यस्य वैद्यत्वमास्ते। समस्तमेव जीवनं नवनवोन्मेषशालिन्या प्रतिभया प्रतिभासितं भवेत्, सर्वात्मना चातुराणामुपकारार्थं गवेषणामयं भवेदेतदर्थं प्रयतनीयम्।

आयुर्वेदः स्वयमेव वेदः। वेदश्च ज्ञानम्। जीवनस्य सुखोपलब्धये, हिताय, सौन्दर्याय, भव्याय, भूत्यै यश्च कश्चन विचारो भवति, समस्तोऽसावायुर्वेदः। अयमायुर्वेदोऽगाधः पयोनिधिः, सुविशालश्चाकाशः। नात्र काचन संङ्कुचिता वृत्तिरभ्यर्हिता भवति। नवो नवो विचारः, नवं नवं ज्ञानं प्रतिक्षणमुदेति। जीवनस्य शास्त्रं सदैव प्रयोगावस्थायामवतिष्ठते। नेदमेकान्तग्राहितया वक्तुं पार्यते, यद् ये ये विकारा अद्य यावत् परिज्ञाताः, न ततोऽधिका विकाराः सम्भाविताः स्युरिति। आचार्यैश्च स्वीकृतम्—

विकारनामाकुशलो न जिह्रीयात् कदाचन।
नहि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥

अतश्च विकाराणां परिज्ञाने सुमहान् प्रयासो विधेयः ।

"दीर्घौ बुद्धिमतो बाहू" बुद्धिमताऽसाध्यमपि साध्यतामेति । दृष्टिगोचरमेवास्ते यदद्य तत्सर्वं प्रत्यक्षीकृतं वर्तते, यद् ह्योऽविदितमासीत् । अतो हि "बुद्धेः फलमनाग्रहः" इत्यनुसारं ज्ञानोपार्जने काऽपि बाधा नोपस्थापनीया । "ज्ञानं ब्रह्म", तदुपासने चास्थावन्तो भवेम चेत्, तदैव कल्याणस्य पन्था अधिगतो भवेत् । यश्च "सनातनो नित्यनूतनः" इति सनातनपरिभाषां वेत्ति, स तु न कस्मैचन नूतनोपलब्धये वैमत्यं प्रदर्शयति ।

आयुर्वेदे च बुद्धेर्महान् महिमाऽङ्गीकृतः । प्रज्ञैव सुखसाधनम्,, दुःखस्य च । यदा साऽपराध्यति, तदैव रोगा आक्रमन्ति, नो चेदारोग्यमेव । अतश्च निखिलेषु मन्त्रेषु गायत्रीमन्त्रं किमपि विशिष्टं पदमादधाति, यतस्तत्र बुद्धेरेव समृद्धये प्रार्थना विहिताऽस्ति । बुद्धिश्च नैव सीम्नि प्रतिबध्यते । वयं वर्चस्वन्तं सहस्रकिरणं सूर्यदेवमुपास्महे, यदसौ नो बुद्धिं प्रेरयेत् यथा वयमनुद्धता सावधानतया जीवनं यापयामः ।

आयुर्वेदश्च न केवलं चिकित्साशास्त्रम्, अपि त्विदमेकं दर्शनं विद्यते । आयुर्वेदः स्वस्थानां स्वास्थ्यरक्षणम्, व्याधितानां च व्याधिपरिमोक्षणं करोत्येव, सहैव सांसारिकस्य सर्वोच्चसुखस्य पारमार्थिकस्य च सर्वोच्चानन्दस्योपलब्धये निर्भ्रान्तं मार्गदर्शनं विदधाति । अयमायुर्वेदश्चतुर्विंशतितत्त्वात्मकस्य समस्तस्य पुरुषस्य चिकित्सां करोति ।

अत्र धर्मः, कलाः, साहित्यम्ः विज्ञानादिकं समस्तमेव ज्ञानं समाहितं वर्तते। आयुर्वेदे कदापि ज्ञानार्जने दुराग्रहस्य स्थानं नासीत् । कालक्रमागतेषु सत्स्वपि विविधेषु वैरोधिकेषु भावेषु नैवास्य ज्ञानसरित् क्षामतामवाप । यथा च युगे युगे सामाजिकी व्यवस्था परिवर्तिता, तथैव स्वस्वरूपोपन्यासेनालस्यमकरोत् । परवर्तिवैद्यानां ज्ञानराशिमात्मसात्कृत्य स्वकलेवरं पुपोष । एतेन च सात्मीकरणाभावेन तत्सर्वमेव ज्ञानमस्यायुर्वेदस्यौकः सात्म्यमभजत् ।

साम्प्रतं विश्वस्मिन् प्रतिक्षणमभिनवं जीवनोपयोगिसाधनसम्भारमाकलयितुमखिलोऽपि लोको भगीरथप्रयासेन सचेष्टः प्रतिभाति । जनाश्च द्रुतगत्या सर्वाणि कार्याणि सम्पादयितुमभिलषन्ति । साम्प्रतिकी जीवनचर्याऽतीव विषमा वर्तते, कृतेऽपि श्रमे जीवनोपादानानामत्यावश्यकमपि भागधेयं सुलभीकर्तुं दुःशकम्, किमुत विश्रामक्षणोपलब्धिः । अस्यां च दुःस्थितौ क्व नामाहारविधिविधानम्, क्व ऋतुचर्या, क्व दिनचर्यारात्रिचर्ये, क्व पञ्चकर्म, क्व स्नेहनस्वेदनावकाशः, क्व सहस्रपुटितं भस्म, क्व शतपाकं सहस्रपाकं तैलम्, क्वोद्वर्तनानि, क्व कुटी ?

एवं चौद्योगिकेऽस्मिन् युगे यत्र विविधानि यन्त्राणि सन्निहितानि सन्ति, तेषां साहाय्येन बहुकालसाध्यं कर्म स्वल्पेन कालेन, स्वल्पेन श्रमेण कथं न साध्यतामुपेयात् ? यथा हि पुरा क्रमिको विकासोऽभवदायुर्वेदस्य, तथैवाद्यापि विकास-

क्रमस्य मार्गो नावरुद्धः स्यात् चेत्, तथा चेष्टितव्यम् । तथा सति नूनमस्यायुर्वेद-शास्त्रस्य युगानुरूपो प्रभाव उपलभ्येत । आचार्याश्च पदे पदे सम्बोधयन्ति दक्षता-वाप्तिकथाम् । तथा च—

"नैव ह्यस्ति सुतरामायुर्वेदस्य पारम् । तस्मादप्रमत्तः शश्वदभियोगम-स्मिन् गच्छेत्, एतच्च कार्यम् । एवं भूयश्च वृत्तसौष्ठवमनसूयता परेभ्योऽप्यागम-यितव्यम् । कृत्स्नो हि लोको बुद्धिमतामाचार्यः, शत्रुश्चाबुद्धिमताम्, अतश्चाऽभि-समीक्ष्य बुद्धिमताऽमित्रस्यापि धन्यम्, यशस्यम्, आयुष्यम्, पौष्टिकम्, लौकमम-भ्युदयिशतो वचः श्रोतव्यमनुविधातव्यञ्च" (चर० विमा०, अ० ८।१४) ।

एवं चास्य दिव्यस्यायुर्वेदशास्त्रस्य दृढतायाम्, कर्मोपासनायां चानेकान्त-बुद्धया जीवनोपयोगिवस्तूनामुपादानेन, स्वस्थानां स्वास्थ्यरक्षणेन, जनपदोद्ध्वं-सकरोगाणां निरोधेन, व्याधितानां च समस्याभूतानां रोगाणां याथार्थ्येन निरा-करणाय चिकित्सकीयवैज्ञानिकसामञ्जस्योपस्थापनेन, जीवनं दीर्घायुष्यं समृद्धं च जायतामित्येतदर्थमायुर्वेदज्ञैर्गवेषणापद्धतिरनुपेक्षणीया स्यात्, चेत्, तदैव लोकोप-कारायायं वेदः सततं जागरूको भवेत् । अस्य च स्वरूपमविच्छिन्नमपरिमेयं विद्यते—"प्रत्यक्षं ह्यल्पमनल्पमप्रत्यक्षम्" । यद्यच्च जीवनविज्ञानमयस्यायुर्वेदस्य स्वरूपम-धिगन्तुमर्हेत्, तत्सर्वमेवायुर्वेद इति ।

**आयुर्वेदनिरुक्ति.––**

आयुषो वेदः=आयुर्वेदः । "आयुरस्मिन् विद्यतेऽनेन वाऽऽयुर्विन्दतीत्यायुर्वेदः ।"
( सुश्रु० सू० १।१५ )

"आयुः शरीरेन्द्रियसत्त्वात्मसंयोगः, तदस्मिन्नायुर्वेदे विद्यते, अस्तीत्या-युर्वेदः, अथवा –आयुर्विद्यते ज्ञायतेऽनेनेत्यायुर्वेदः, आयुर्विद्यते विचार्यतेऽनेन वा इत्यायुर्वेदः, आयुरनेन विन्दति प्राप्नोतीति वा आयुर्वेदः"—( सुश्रु० सू०, अ० १।१५––डल्हणटीका ) ।

विद् धातोश्च निम्नलिखितेष्वर्थेषु प्रयोगो भवति—

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दति प्राप्तौ श्यन्-लुक्-श्नम्-शेष्विदं क्रमात् ।।

अनया च कारिकया विद् धातुः सद्भावे, ज्ञाने, विचारणे प्राप्तौ च प्रयुज्यते 'इति ज्ञायते, किन्त्वायुर्वेदविषये "विद्धातुश्चेह ज्ञनार्थ एवाभिप्रेतः । लाभादय-स्त्वर्था विदेरिह नोक्ताः, तेषां साक्षादायुर्वेदाजन्यत्वात्" ( चर० सू०, अ० १।४१ चक्रपाणिः) ।

वेदशब्दार्थावबोधे जाते स्वाभाविकोऽयं प्रश्नः समुदेति किमायुः ? किं च तस्य स्वरूपम् ? कथं च निरुक्तिः ? कथं च पर्यायकथनमिति ।

"आयुर्जीवितकालः" ( अमरकोषः––२।८।१२० ) । एतीत्यायुः, इण् गतौ ( अ० प० अ० ), "एतेर्णिच्च" ( उ०२।११८ ) इत्युसिः । जीवितस्य कालः ( तत्रैव रामाश्रमी टीका ) ।

अर्थात् प्रत्यहं प्रतिक्षणं यदुच्छ्वासनिःश्वासरूपेण शरीरेऽनुवर्तते, तदेवायुः। "यावच्छ्वासा हृदि स्थिताः" इति न्यायेन शरीरप्राणवायोर्व्यवस्थितिरेवायुः। "शरीरजीवयोर्योगो जीवनम्, तेनावच्छिन्नः काल आयुः" इति।

**आयुषः स्वरूपम्--**

> शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्।
> नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते॥
> (चर० सू०, अ० १।४२)

अत्र चक्रपाणिः—आयुर्वेदपदे पूर्वपदवाच्यमायुराह—शरीरेत्यादि। शरीरं[1] पञ्चमहाभूतविकारात्मकमात्मनो भोगायतनम्। इन्द्रियाणि—चक्षुरादीनि। सत्त्वम्—मनः। आत्माज्ञानप्रतिसन्धाता, एषां सम्यगदृष्टयन्त्रितो योगः--संयोगः। इन्द्रियाण्यपि यद्यपि शरीरग्रहणेनैव लभ्यन्ते, तथापि प्राधान्यात् तानि पृथगुक्तानि। अयं च संयोगः संयोगिनः शरीरस्य क्षणिकत्वेन यद्यपि क्षणिकः, तथापि सन्तानव्यवस्थितोऽयमेकतयोच्यते। तस्यायुषः पर्यायानाह—धारीत्यदि। धारयतीति शरीरं पूतितां गन्तुं न ददातीति धारि। जीवयति प्राणान् धारयतीति जीवितम्। नित्यं शरीरस्य क्षणिकत्वेन गच्छतीति नित्यगः। अनुबध्नात्यायुरपरापरशरीरादिसंयोगरूपतयेत्यनुबन्धः। 'पर्यायैरायुरुच्यते' इत्येकार्थाभिधायिभिः शब्दैरुच्यते।

यद्यपि च नित्यगानुबन्धशब्दाभ्यां न क्वचिदायुरभिधीयते; तथापि नित्यत्वानुबन्धत्वधर्मख्यापनार्थमेवैतत् संज्ञाद्वयं बोद्धव्यम्। धारिसंज्ञा त्वर्थे दशमहामूलीये भविष्यति। ननूत्तरत्र"चैतन्यानुवृत्तिरायुः" इत्यायुर्लक्षणं करिष्यति, इह तु शरीरेन्द्रियसत्त्वात्मसंयोग इति किमर्थमुक्तम्? ब्रूमः -शरीरेन्द्रियसत्त्वात्मसंयोगजन्या चैतन्यानुवृत्तिर्यथोक्तसंयोगाव्यभिचारित्वेन व्यक्तत्वेन चार्थे[1] दसमहामूलीये लक्षणत्वेनोक्ता। शरीरादिसंयोगरूपमेव त्वायुः परमार्थतः। एवम्भूतसंयोगाभावे मरणमायुरूपमरूपं भवति। मृतशरीरे तु चेतसोऽभावादायू रूपसंयोगाभावः।

अर्थात्—(१)शरीरेन्द्रियसत्त्वात्मनां संयुक्तावस्था आयुः, (२) धारि—रसरक्तादिसंवहनक्रियया शरीरं शीर्णतां गन्तुमवरुणद्धि, शरीरं च धारयति या शक्तिः, सैवायुः, (३) जीवितम्—श्वसनादिकर्मभिः प्राणान् धारयति, अतश्च जीवितम्, (४) नित्यगः—प्रतिक्षणं गच्छतीति नित्यगः, (५) अनुबन्धः—अपरापरशरीरादिसंयोगरूपतयाऽनुबध्नातीत्यनुबन्धः, (६) चेतनानुवृत्तिः—चैतन्यस्याविच्छेदेनावस्थानमायुः। गर्भावस्थातो मृत्युपर्यन्तं चैतन्यमवतिष्ठते। एवं च चैतन्यानुवर्तनमायुः।

---

१. शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्च्छितम् 'गर्भः' इत्युच्यते। तं चेतनावस्थितं आयुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्धयति। एवं विवर्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतः, तदा 'शरीरम्' इति संज्ञां लभते। (सुश्रु० शारी०, अ० ५।३)

**आयुर्वेदार्थोपदेशः—**

कोऽयमायुर्वेदः ? "तत्रायुर्वेदः शाखा, विद्या, सूत्रम्, ज्ञानम्, शास्त्रम्, लक्षणम्, तन्त्रमित्यर्थान्तरम्" ( चर० सू०, अ० ३०।६१ )।

"तत्रायुर्वेदयतीत्यायुर्वेदः, कथमिति चेत्, उच्यते—स्वलक्षणतः, सुखासुखतः, हिताहिततः, प्रमाणाप्रमाणतश्च, यतश्चायुष्याण्यनायुष्याणि च द्रव्यगुणकर्माणि वेदयतीत्यतोऽप्यायुर्वेदः" ( चर० सू०, अ० ३०।२३ )।

एवं च येन तन्त्रेण, शास्त्रेण, ज्ञानेन वाऽऽयुर्ज्ञायते, आयुषश्च सर्वविधं ज्ञानजातं परिज्ञातं भवति, तच्छास्त्रं 'आयुर्वेदः' इत्युच्यते।

आयुर्वेदप्रयोजनम्–१. स्वस्थस्य स्वास्थ्यस्य संरक्षणम्; २. आतुरस्य विकारप्रशमनेऽप्रमादः; ३. दीर्घायुष्ट्वोपलब्धिरिति मुख्यतस्त्रितयं प्रयोजनमभिलक्ष्यते। तदर्थं च स्वस्थपरिज्ञानम्, व्याधितावस्थापरिज्ञानम्, हिताहितज्ञानम्, आयुर्हानिलाभज्ञानम्, आयुषः प्रमाणज्ञानम्, हेतुलिङ्गौषधरूपत्रिसूत्रज्ञानं चात्र शास्त्रे संग्रहणीयं भवति। एतदेवाभिलक्ष्य 'प्रागेव' सूत्ररूपेणायुर्वेदलक्षणं निगदितम्।

आयुषश्च विधिभेदेन चतुर्विधत्वमापद्यते—१. हितायुः, २. अहितायुः, ३. सुखायुः, ४.दुःखायुरिति। एतज्ज्ञानमन्तरा चायुर्वेदपदार्थज्ञानं न सम्भाव्यते। अतश्च चतुर्विधमायुर्निरुच्यते।

**सुखायुः—**

यौवनम्, शरीरमनसोर्निर्व्याधित्वम्, बलवीर्ययशःपौरुषपराक्रमोपलब्धिः, ज्ञानम्, विज्ञानम्, इन्द्रियाणां पाटवम्, समृद्धिशालित्वम्, कार्येषु साफल्यम्, विविधोपभोगक्षमित्वं येषामस्ति, तेषामायुः सुखायुरुच्यते[1]।

**दुःखायुः—**

जराव्याधिपरीतत्वम्, हीनबलपौरुषपराक्रमत्वम्, अज्ञानम्, इन्द्रियहानिः, कार्यासिद्धिरसुखानुबन्धित्वादयो यस्य सन्ति, स दुःखायुरुच्यते। 'दुर्दुष्टानि खानि येन तद्, दुःखम्, दुःखं च तदायुरिति दुःखायुः।

**हितायुः—**

मैत्रीभावः, अहिंसा, दयार्द्रता, सत्यवादित्वम्, शान्तिप्रियत्वम्, समीक्ष्यकारिता, सावधानता, मनोदोषहानिः, दानशीलता, पूज्यपूजाभावः, धीधृतिस्मृतिमत्वादयो गुणा यस्य सन्ति, तस्य हितमायुरुच्यते।

---

१ तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्य विशेषेण यौवनवतः समर्थानुगतबलवीर्ययशःपौरुषपराक्रमस्य ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदाये वर्तमानस्य परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्वारम्भस्य यथेष्टविचारिणः सुखमायुरुच्यते। असुखमतो विपर्ययेण।

**अहितायुः—**

हिंसा, परस्वापहरणम्, क्रौर्यम्, वितथवादिता, तिरस्कारप्रवृत्तिः, प्रज्ञापराधादयश्चागुणा येषां सन्ति, तेषामहितमायुर्भवति ।

आयुषश्च [1]हिताहितत्वमायुर्वेदस्य प्रतिपाद्यं विद्यते । हिताहितत्वं च विविधदृष्ट्या तत्र तत्र तन्त्रे प्रतिपादितम् । आयुर्वेदे दिनचर्या–रात्रिचर्या–ऋतुचर्याणां विस्तृतं वर्णनमुपलभ्यते । स्वस्थविहितभोजन–पान–नियम–स्थान-चङ्क्रमण-शयन-व्यायामाभ्यङ्गोद्वर्तन-स्नान-वेगधारण-अधारणीयवेगाधारण-सद्वृत्त-आचाररसायनानाम्, एकान्तहितानामाहारविहाराणां च वैशद्येन विवेचनं कृतमास्ते । जनपदोद्ध्वंसकरोगाणां च विशदमाकलनं विद्यते । यथा च पुरुषः—

समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥
( सुश्रु० सू०,अ० १४)

अथ च—रुगुपशमनम्, स्वरवर्णसंयोगः, बलवृद्धिः, शरीरोपचयः, अभ्यवहार्याभिलाषः, आहारकाले, रुचिः, अभ्यवहृतस्य चाहारस्य काले जरणम्, यथाकालं निद्रालाभः, वैकारिकस्वप्नदर्शनाभावः, सुखेन जागरणम्, वातमूत्रपुरीषरेतसां साधुप्रवृत्तिः, मनोबुद्धीन्द्रियाणां च सर्वथाऽव्यापत्तिर्यथा भवेदित्येतदर्थं महानुपदेशः समुपलभ्यते । नैरुज्यार्थमनागतरोगानाक्रमणार्थं च स्पष्टमेवाभणितम्—

नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥
मतिर्वचःकर्मसुखानुबन्धं सत्त्वं विधेयं विशदा च बुद्धिः ।
ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः ॥
( चर० शरीर० अ० २, ४६-४७ )

**आयुषो मानम्—**

प्राकृतिकैश्च[2] सारादिपरीक्षणैरल्पायुष्यं दीर्घायुष्यं वा परीक्ष्यते । तथा च मांससाराः, अस्थिसाराः, मज्जासाराः शुक्रसाराः, सत्त्वसाराः, यद्वा सर्वैः सारैरुपेताः पुरुषाः परमबलशालिनो मन्दजरसो दीर्घायुष्काश्च भवन्ति । प्रवरसत्त्वाश्च चिरायुषो भवन्ति । ये च घृतक्षीरतैलमांसरससात्म्याः सर्वरससात्म्याश्च, ते बलवन्तः,

---

१. 'यदाहारजातमग्निवेश! समांश्चैव शरीरधातून् प्रकृतौ स्थापयति, विषमांश्च समीकरोतीत्येतद्धितं विद्धि, अहितं विपरीतमित्येतद्धिताहितलक्षणमनपवादं भवति' ( चर० सू०, अ० २५।३३ ); द्रष्टव्यम्—चर० सू० अ० २५, ३७-४७; चर० शारी० अ० २, ३९-४७; सुश्रु० चिकि०, अ० २४ ।

२. चर० विमा०, अ० ८। १०६-१३ ।

क्लेशसहाश्चिरजीविनश्च भवन्ति। श्लेष्मलाश्चायुष्मन्तः, पित्तला मध्यायुषः, वातलाश्चाल्पायुषो भवन्ति

अथ चातुरस्यायुषः प्रमाणज्ञानहेतोः [१]प्रकृति-विकृति-सार-संहनन-सात्म्य-सत्त्व-आहारशक्ति-व्यायामशक्तिवयोभिर्लक्षणानि दृष्ट्वा दीर्घायुष्ट्वमल्पायुष्ट्वं वा परिज्ञायते। रोगं[२] हेतु-दोष-दूष्य-प्रकृति-देश-काल-बलविशेषैर्लिङ्गतश्च परीक्षेत। यस्य हि व्याधेर्दोष-दूष्यप्रकृति-देश-काल-बलसाम्यं भवति, हेतुश्च बलवान्, लक्षणानि च बलवन्ति, स व्याधिर्बलवान् भवति, तदा चाल्पायुष्ट्वमुपजायते। लक्षणतोऽप्यायुष्यं परिज्ञायते, यथा—'तत्रेमान्यायुष्मतां कुमाराणां लक्षणानि' (चर० शा० ८। ५५)।

विकृतिलक्षणैश्च तैस्तैरायुषः प्रमाणज्ञानमुपजायते। यदाऽकारणमेवारिष्टानि जायन्ते, तदा सञ्जातारिष्टो जनः सद्यः, मुहूर्तात्, दिवसात्, सप्ताहात्, मासाद् वर्षाद् वा मरिष्यतीति विज्ञायते।

अरिष्टे [३]चेन्द्रियाणाम्, [४]इन्द्रियार्थानाम्, [५]मनो-[६]बुद्धि-[७]चेष्टादीनां च वैकृत्यं भवति, तेन चायुषः प्रमाणज्ञानं भवति।

एवं चास्मिन्नायुर्वेदशास्त्रे पूर्वोक्तदिशा हितायुः, अहितायुः, सुखायुः, दुःखायुः, आयुषश्च हिताहितम्, आयुषो मानं चोक्तं भवति। किमायुः? को वेदः? कथं चायुर्वेद इति सर्वमत्र सन्दर्भे समासतः समीरितमास्ते, तेन चायुर्वेदनिरूपणं स्फुटीभवति।

---

१. चर० विमा०, अ० ८।९६।

२. चर० विमा०, अ० ८। १०३।

३. 'यश्च पश्यत्यदृश्यान् वै' (चर० इ० अ० ४)।

४. नानापुष्पोपमो गन्धो यस्य भाति दिवानिशम्।
पुष्पितस्य वनस्येव नानाद्रुमलतावतः॥
तमाहुः पुष्पितं धीराः नरं मरणलक्षणैः।
स ना संवत्सराद् देहं जहातीति विनिश्चयः॥
(चर० इ० २।८-९)

५. यैः पुरा रमते भावैः समेतैः परमां रतिम्।
तैरेवारभमाणस्य ग्लास्नोर्मरणमादिशेत्॥
(च० इ० ८)

६. भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्।
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः॥
(चर० इ० ११)

७. विकर्षन्निव यः पादौ च्युतांशः परिधावति।
विकृत्य न स लोकेऽस्मिंश्चिरं जीवति मानवः॥
(चर० इ० अ० १२)

तथा च—

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ।।

( चर० सू०, अ० १।४१ )

आयुर्वेदशब्दोऽयं बहुशाखाविस्तीर्णं चिकित्साविज्ञानमवबोधयन् न केवलं मानवीयं भैषज्यमभिप्रैति; किन्तु हस्त्यश्वगवादीनां पशूनाम्, हंसपारावतकारण्डव-चाषभासादिपक्षिणाम्, वृक्षलतादीनामुद्भिज्जानामपि भैषजानि संगृह्णाति । पाल-काप्य-मतङ्ग-शालिहोत्रादयः, हस्त्यश्वादिभैषज्योपदेशाचार्याः, तदीयोपदेशरूपास्त-त्परम्परागताश्च ग्रन्था विशदं प्रकाशमातन्वते पश्वादिचिकित्साविषये । एवमेव वृक्षायुर्वेदे कश्यप-सारस्वत-पाराशरादय आचार्यास्तदुपदेशपरम्परागताश्च विषयाः; वाराहसंहितायाम्, भट्टोत्पलीये तत्प्रकरणव्याख्यायामुपवनविनोदादिषु च बहुशः समुज्जृम्भिताः समुपलभ्यन्ते ।

धन्वन्तरिणा च सुश्रुताय नराश्वगोगजवृक्षायुर्वेदस्योपदेशः कृत आसीदित्या-ग्नेयपुराणलेखाद् ज्ञायते ( २७।९।९२ ) ।

वेदो नाम सर्वादिमो ज्ञानविज्ञानराशिरूपो वाङ्मयः । आप्तानामजस्रं तपः-स्वाध्यायबलेन तेषां चेतसि करतलगतमिव निखिलं ज्ञानं प्राकाश्यमभजत् । साक्षाद् भगवन्निःश्वसितरूपेणैव वेदाः स्वप्राकाश्यालोकमालोकयाञ्चक्रुः । तेषु च ज्ञाननिकरेष्वन्यतमोऽयमायुर्वेदः प्रावर्तत । नातिविस्तरेणानतिसंक्षेपेण चायुर्वेदः प्रतिपादितः । बुधानां बुद्धिस्वारस्याय, क्षणरहितानामल्पश्रमजुषाञ्च सुखज्ञानाय आयुर्वेदाङ्गानि वर्ण्यन्ते ।

**आयुर्वेदाङ्गोपदेशः—**

आयुर्वेदस्त्वनन्तपारः । न हि सौकर्येण कोऽपि सुधीवरो पारावारीण-त्वमधिगन्तुमर्हो भवेदस्यायुर्वेदपयोनिधेः । भुवि महर्षिर्भरद्वाज एव तादृङ्मतिमान् बभूव, यः खलु ब्राह्ममायुर्विज्ञानमल्पैरेव पदैर्बुबुधे । यादृशश्चायुर्वेदोऽल्पपदैरुपदिष्ट आसीत्, तमाह अग्निवेशः—

हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ।।

सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं प्रजापतिः ।
यथावदचिरात् सर्वं बुबुधे तन्मना मुनिः ।।

एतेन चेदमवसीयते यत् पुरा आयुर्वेदशास्त्रं सूत्ररूपेणैवोपनिबद्धमासीत् । यथा च संहिताग्रन्थेषु प्रथमं सूत्रस्थानं लिख्यते, यत्र च सम्पूर्णसंहिताविषयाणां समासतो वर्णनं क्रियते । तथा च—

सूचनात् सूत्रणाच्चैव सवनात् चार्थसन्ततेः ।
...................... ...सूत्रस्थानं प्रचक्षते ।।

( सु० सू० ३।१२ )

सूचनात्=लेशतोऽर्थप्रकाशनात्, सूत्रणात्=अर्थानां यथास्थानं निवेशनात्, अर्थसन्ततेः सवनात्=जननात् ( सूत्रम् ) इति डल्हणः।

यद्यपि त्रिसूत्रं त्रिस्कन्धमायुर्वेदमामनन्ति महर्षयः, तथापि नैतेन समस्तस्यायुर्वेदज्ञानस्य त्रिष्वेवावयवेषु विभागोऽवगन्तव्यः, वैदिकायुर्वेदविषयाणामनेकेषु भागेषु विभक्तत्वात्, विभागानां च प्रविभक्तफलत्वात्।

उपलभ्यते खलु ऋग्वेदे जराजीर्णस्य च्यवनस्य[1] पुनर्यौवनापादनम्, छिन्नपदायाः खेलनृपपत्न्या विश्पलाया[2] अश्विभ्यामायसीजङ्घायोजनम्, शकलीकृतस्य श्यावस्य[3] अश्वाङ्गशकलानि संयोज्य प्रत्युज्जीवनम्, अन्धाय कण्वाय[4] चक्षुर्दानम्, बधिराय नार्षदाय श्रोत्रदानम्, वध्रिमत्या[5] नपुंसकभर्तृकाया अपि पुत्रोत्पादनम्, [6]कुष्ठनिवारणम्, पङ्गवे[7] गतिदानम्, [8]नानाविषकृमिप्रतीकारः, [9]हृद्रोगनिवारणम्। अन्येषाञ्च विविधानां विषयाणां वर्णनेन, ऋग्वेदे, यजुर्वेदे च नानाभैषज्यानाम्, ओषधिविद्यायाः, भूतविद्यायाः, विषविद्यायाश्च दर्शनेन, शल्यशालाक्यकायचिकित्साऽगदरसायनादीनामष्टविधानामेवायुर्वेदविज्ञानविषयाणां पृथक्त्वेन वर्णनमुपलभ्यते वैदिकवाङ्मये।

भूतविद्याचार्योऽथर्वा, कौमारभृत्याचार्यः कश्यपः, महाभारतेऽप्युपलभ्यमानोऽगदतन्त्राचार्यः काश्यपः, शालाक्याचार्या गार्ग्यगालवादयः, शल्याचार्याः शौनकादयः। एवमन्येऽप्यनेके रसायनवाजीकरणकायचिकित्साद्याचार्या अतिप्राचीनकालादेव बहुश्रुता आसन्। तेन चायुर्वेदस्याष्टभागप्रविभागो प्राचीनतमकालपरिदृष्टो प्रतिभाति।

ऋग्वेदापेक्षयाऽथर्वसंहितायामोषधि-भैषज्य-भूतचातन-विषापहरणादिविषयाणां विकासावस्थादर्शनेन, प्रत्येकमङ्गं कालक्रमेण पुष्टिमापद्यमानं ग्रहणधारणसौकर्याय पृथक्त्वेन पदवीमापन्नमध्यतिष्ठदिति प्रतीयते[10]।

आर्षे च काले आध्यात्मिकाधिदैविकाधिभौतिकानां त्रयाणामपि क्लेशानां विनिवृत्तये, आथर्वविकासमुपजीव्य शारीरभैषज्ये, शल्यक्रियाप्राधान्यमुपादाय [11]शल्यम्, बहिरिन्द्रियप्रधानोत्तमाङ्गमुपादाय [12]शालाक्यम्, बलवीर्याभिवृद्धिप्राधान्यमुपादाय [13]वाजीकरणम्, वयःस्थापनादिमहाफलप्रयोगविशेषानुपादाय [14]रसायनम्,

---

१. ऋ० सं० १।११९।७; २. तदेव—१।११६।१५; ३. तदेव—१।११७।२४; ४. तदेव—१।११७।८; ५. तदेव—१।११६।१३; ६. तदेव—१।११७।८; ७. तदेव—२।१५।७; ८. तदेव—१।१९१।१-१६; ९. तदेव—१।५०।११-१३। १०. अ० वे० १।६।१५।

११. तत्र शल्यं नाम-विविधतृणकाष्ठपाषाणपांशुलोहलोष्ठास्थिवालनखपूयास्रावान्तर्गर्भदुष्टशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानार्थं व्रणविनिश्चयार्थं च।

१२. शालाक्यं नाम—ऊर्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थं शलाकायन्त्रप्रणिधानार्थं च।

१३. वाजीकरणतन्त्रं नाम—अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजननिमित्तं प्रहर्षजननार्थं च।

१४. रसायनतन्त्रं नाम—वयःस्थापनम्, रोगापहरणसामर्थ्यमायुर्मेधाबलकरं च।

ऋतुगर्भ-कुमारप्राथमिकावस्थासम्बन्धमुपादाय [1]कौमारभृत्यम्, सर्पवृश्चिकादिविष-विप्लवमुपादाय [2]अगदतन्त्रम्, ग्रहभूतदेवादिविप्लवमुपादाय [3]भूतविद्या, शरीरमानसभैषज्यमुपादाय [4]कायचिकित्सेत्यष्टावङ्गानि विभक्तानि सन्ति।

प्रत्येकस्मिन्नङ्गे पाटवोपलब्धये, ग्रहणसौकर्याय, विशिष्टनैपुण्यावाप्तये च भरद्वाजेनायुर्वेदोऽष्टधा विभक्त इति महाभारतलेखेनावगम्यते। [5]हरिवंशपुराणानुसारं च धन्वन्तरिरायुर्वेदमष्टधा विभज्य, प्रत्येकं चाङ्गं सविकासं पृथक् पृथक् शिष्येभ्य उपदिदेश प्रचारयामास च। अष्टावपि विभागा लोके प्रचलिता आसन्।

आत्रेयसंहितायाम् (कायचिकित्सायाम्); काश्यपसंहितायाम् (कौमारभृत्ये) च प्रजापतिना सह इन्द्रेण च सह होमार्थदेवतानिर्देशे, धन्वन्तरिनिर्देशेन, तथा विविधेषु रोगेषु 'धान्वन्तरघृत'विधानेन च धन्वन्तरेरष्टाङ्गायुर्वेदाचार्यत्वं प्रकटीभवति। धन्वन्तरिर्दिवोदासः '[6]अष्टस्वङ्गेषु कतममुपदिशामि" इति सुश्रुतं दृष्ट्वा 'शल्याङ्गं प्रधानीकृत्योपदिशतु भवान्' इति तेनाभ्यर्थितः शल्यप्रधानमायुर्वेदं तस्मा उपदिदेश। अनेन सुश्रुतोपक्रमभागलेखेन, पश्चाच्च [7]अष्टाङ्गज्ञत्वस्य निर्देशेन च धन्वन्तरिरष्टाङ्गायुर्वेदविद्याचार्य आसीदिति व्यक्तीभवति।

अथ चाष्टाङ्गायुर्वेदविदा भरद्वाजेनोपदिष्टो पुनर्वसुरात्रेयोऽष्टाङ्गायुर्वेदविद् बभूव। तच्छिष्यैश्च अग्निवेश-भेल-जतूकर्ण-पराशर-हारीत-क्षारपाणिभिः पृथक् पृथक् तन्त्राणि निर्मितानि।

---

१. कौमारभृत्यं नाम–कुमारभरणधात्रीक्षीरदोषसंशोधनार्थम्, दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम्।

२. अगदतन्त्रं नाम–सर्पकीटलूतादष्टविषव्यञ्जनार्थम्, विविधविषसंयोगविषोपशमनार्थं च।

३. भूतविद्या नाम–देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिमन्त्रोपहरणादिग्रहोपशमनार्थम्।

४. कायचिकित्सा नाम–सर्वाङ्गसंश्रितानां ज्वररक्तपित्तकुष्ठोन्मादापस्मारातीसारादीनामुपशमनार्थम्।

५. तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा।
काशिराजो महराजः सर्वरोगप्रणाशनः॥
आयुर्वेदं भरद्वाजात् प्राप्येदं भिषजां क्रियाम्।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत्॥
(हरिवंशपु०, अ० २९)

६. एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते, अत्र कस्मै किमुच्यतामिति त ऊचुः–अस्माकमेकमतीनां सर्वेषामेव शल्यज्ञानं मूलं कृत्वोपादिशतु भवानिति।
(सुश्रु० सू०, अ० १, ९–१०)

७. अष्टाङ्गवेदविद्वांसं दिवोदासं महौजसम्।
विश्वामित्रसुतः श्रीमान् सुश्रुतः परिपृच्छति॥
(सुश्रु० उत्तर०, अ० ६।५३)

'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेनाङ्गान्तरीयविषयाणामंशत उल्लेखेऽपि भरद्वाजस्याष्टाङ्गसम्प्रदायेष्वेकतमोऽयमात्रेयपुनर्वसोः कायचिकित्सा-प्रधानः सम्प्रदायः, धन्वन्तरेर्दिवोदासस्य चाष्टाङ्गसम्प्रदायेष्वेकतमोऽयं सुश्रुतस्य शल्यप्रधानः सम्प्रदाय इति सम्प्रदायद्वयं चिरादवशिष्टमद्याप्यास्ते। कौमार-भृत्याङ्गे मारीचकाश्यपसम्प्रदायस्याप्युपलब्ध्या सम्प्रदायत्रयं साम्प्रतं समुपलभ्यते यथायथम्।

यद्यपि कालवशात् सम्प्रदायत्रयादन्यत् सम्प्रदायं न स्वातन्त्र्येणोपलभ्यते; तथापि चरकसुश्रुतमहाभारतहरिवंशपुराणादिषु लेखदर्शनात् कियताप्यंशेन वर्णनो-पलम्भाच्चाष्टाङ्गविभागः प्राक्तन एवेति निश्चप्रचम्।

एवञ्च नातिसंक्षेपेणायुर्वेदवाङ्मयस्य पारम्पर्योपदेशो वर्णितो भवति। अष्टाङ्गायुर्वेदे कायचिकित्सा सविशेषं वर्णिताऽस्ति। शल्यं शालाक्यञ्च नातिविस्त-रेण सुश्रुतसंहितायां वर्णितचरम्। रसायनतन्त्रम्,वाजीकरणतन्त्रम्,कौमारभृत्यमगद-तन्त्रञ्च यत्र क्वापि संहिताग्रन्थेषु संग्रहग्रन्थेषु च अनतिविस्तरेण वर्णितं समुप-लभ्यते, किन्तु भूतविद्यासम्बन्धिनो विषयाः प्रकीर्णरूपेणोपन्यस्तत्वाच्छिलोञ्छ-वृत्त्यैवाधिगन्तुमर्हा इति महती दुरूहता तज्ज्ञानोपार्जने।

आसीन्मे मनसि भूतविद्याऽभिनिवेशश्चिरकालात्। बहुतिथे चाऽध्ययना-ध्यापनकाले भूतविद्या विषयान्वेषणवृत्तिश्च दार्ढ्यमवाप। तत्परिणतिरूपेण चात्र विषये मया 'अनुसन्धानप्रबन्धः' संरचितो विद्यावारिधिरित्युपाधये। स च प्रबन्धो विद्वज्जनैरादरपदवीमधिरूढः प्राकाश्यमभजत्।

विषयेऽस्मिन् कृतिरियमभिनवा। आशास्महे यद्भूतविद्यावर्त्मनि कृत्य-वर्त्मावधारणे समर्थो भवेदयं प्रबन्ध इति। यद्येतेन श्रमेण 'भूतविद्या' जिज्ञासूनामन्ते-वासिजनानाञ्जिज्ञासाशान्तिर्भवेत्, तदा स्वीयं श्रमं सफलं मन्यामहे। भूतविद्या गवेषणापराणां विदुषामनुरञ्जनाय सुधियाञ्च स्वारस्यानुरोधाय प्रभवेदयं ग्रन्थ इति भूतभावनं श्रीविश्वनाथमभ्यर्थयामः।

विदुषां विधेयः

विजयादशम्याम्,<br>वि० सं० २०४२

**विद्याधरशुक्लः**

# विषयानुक्रमणी

द्वितीयं काण्डम्

## तृतीयं काण्डम्

चतुर्थं काण्डम्

**पञ्चमं काण्डम्**

षष्ठं काण्डम्

**सप्तमं काण्डम्**

# आयुर्वेदशास्त्रे भूतविद्यायाः संवीक्षणात्मकमध्ययनम्

प्रथमं काण्डम्

## मङ्गलाचरणम्

यस्यानन्दभवेन मङ्गलकलासम्भावितेन स्फुर-
द्धाम्ना सिद्धरसामृतेन करुणावीक्षासुधासिन्धुना ।
भक्तानां प्रभवप्रसंहृतिजरारागादिरोगाः क्षणा-
च्छान्तिं यान्ति जगत्प्रधानभिषजे तस्मै परस्मै नमः ॥ १ ।

सभ्याः सद्गुरुवाक्सुधास्रुतिपरिस्फीतश्रुतीनस्मि वो
नालं तोषयितुं पयोदपयसा नाम्भोनिधिस्तृप्यति ।
'विद्या'भूतविलासहासलसिता सन्तन्यते सादरं
सेयं स्यादनुरञ्जनाय सुधियां स्वान्तःसुखस्यास्पदम् ॥ २ ।

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
अव्यक्तानुक्तलेशोक्ता 'भूतविद्या' प्रकथ्यते ॥ ३ ।

ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः ।
जितहस्ता जितात्मानस्तेभ्यो नित्यं कृतं नमः ॥ ४ ।

भिषजां साधुवृत्तानां भद्रमागमशालिनाम् ।
अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम् ॥ ५ ।

## भूतविद्याया इतिहासः

प्रास्ताविकम्—अष्टाङ्गायुर्वेदशास्त्रे 'भूतविद्या'[1] रहस्यात्मकमन्यतमम-ङ्गम् । एषा च विद्या 'अथर्ववेदीया' विद्यते । आयुर्वेदस्य चाथर्ववेदेन सह उपजीव्योपजीवकभावसम्बन्धो वर्तते । यथा चाह चरकः—'तत्र भिषजा पृष्टेनैवं चतुर्णामृग्यजुःसामाथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या । वेदो ह्याथर्वणो दान-स्वस्त्ययन-बलि-मङ्गल-होम-नियम-प्रायश्चित्तोपवास-मन्त्रादिपरि-ग्रहाच्चिकित्सां प्राह[2]' इति ।

भारतीयवाङ्मयेषु यथाऽथर्ववेदे भूतविद्याया वैशद्येन वर्णनं दृश्यते, तथा नान्यत्र । सर्वतः प्रथमं तत्रैव रोगाणां राक्षसादिभिः सह सम्बन्धः स्थापितो वर्तते ।

---

१. सु० सं० सू० १।७ ।    २. च० सं० सू० ३०।२१ ।

देवासुरपिशाचादयश्च व्याधिकारणानि निर्दिष्टानि । अयं च सिद्धान्तस्तत एवायुर्वेदे समागत इत्यामनन्ति प्राञ्चो महर्षयः ।

आयुर्वेदीयाश्च संहिताः ( चरक-सुश्रुत-वाग्भटादयः ) नानाविधानां रेवती-शकुनि-पूतना-स्कन्दादिग्रहाणां रोगोद्भावकत्वमङ्गीकुर्वन्ति । देव-गन्धर्व-पितृ-पिशाचादयो ह्यपस्मारमुन्मादं[1] वा जनयन्ति । कौमारभृत्यतन्त्रे[2] च स्कन्दग्रह-पूतनाग्रहादीनामपस्मारजनकत्वमाख्यातम् ।

उपत्यकासु निवसन्तो जना ज्वरादीन् व्याधीन् भूतप्रेतपिशाचादि-ग्रहणसमुत्थानान् मत्वा, यत् तेषामपाकरणार्थं बलि-होमोपहार-स्तुति-मन्त्रादि-प्रयोग-माचरन्ति तत्सर्वं कालक्रमागतं साधनमथर्ववेदीयमेवेति नात्र कश्चन विसंवादः ।

अथर्ववेदे चैष विचारो वर्तते, यद्देवादयो दुर्दृष्ट्या व्याधीनधिक्षिपन्ति प्रतिभोगार्थम् । अथ च दुरात्मानोऽसुरादयः केनापि व्याजेन जनानभिनिविश्य सन्तापयन्ति । एकत्र च ऋग्वेदे वर्णितं यद् वैद्यो भूतप्रेतपिशाचादीन्नाशयति ( रक्षोहामीवचातनः ) इति । एतेन च सन्दर्भेण स्पष्टं प्रतीयते यद् वैदिके युगेऽपि राक्षसादयो रोगकारणत्वेनाभिमता आसन्, येषामपाकरणार्थं भिषजां विनियोग आसीत् ।

ऋग्वेदे[3] कतिचन रोगा भूतादिजन्यत्वेन निगदिताः । ते च भूतादय एभिर्नामभिरभिसंज्ञिताः । यथा हि—यातुधान-किमिदिन-पिशाच-पिशाची-अमीवारक्षः-मागुण्डी-अलीमस - वात्स्यप - पलाल-अनुपलाल-सर्कु-कोका-मलिम्लुच-पलाजिका-वाव्रिवस-प्रामि-कुम्भमुख-सायक-मगनक-ताङ्गलव-पविनाश-गन्धर्व-अप्स-रसश्चेति । एते च रोगाणां लक्षणभूताः कारणभूता रोगाभिसरा वा समाख्याताः । कतिचन रोगाणामाकृतयो दैत्याकारा भयावहा वर्णिताः । यथा हरिवंशे—

ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ।।[4]

इति ज्वरो मूर्तिमानेवोक्तः । विष्कन्धसमस्कन्धौ रोगौ राक्षसत्वेनाभिप्रेतौ दृश्येते । तक्मन्[5] ( ज्वरः ) रोगश्च साग्रहमाज्ञप्तः रोगिणं परित्यक्तुम्, तस्मै चोपहारो दत्तः ।[6] अपचितिः[7] जायन्यश्च[8] कल्पितौ यत्तावुड्डीय परदेहे लक्ष्यभूते आश्रयं लभेताम् ।

---

१. च० सं० नि० ७ तथा सु० सं० उत्तर० ६० । २. अ० हृ० उ० ३ ।
३. ऋ०वे० १०।८७।६ । ४. माधवनिदानज्वर० १, मधुकोशः ५. अथर्व० ५।२२।२० ।
६. अथर्व० ६।२५।६।७।११६ । ७. गण्डमाला । ८. राजयक्ष्मा ।

वैदिके साहित्ये राक्षसानां चात्वारो विभागाः दृश्यन्ते। १—पिशाचाः, २—राक्षसाः, ३—अत्रयः, ४—कण्वाश्च। पिशाचा यं गृह्णन्ति, तस्य मांसमश्नन्ति[१]। तद्वदेव अत्रयोऽपि। कण्वास्तु[२] गर्भस्थशिशूनाक्रामन्ति। राक्षसाः[३] संज्ञानाशं विदधति, सन्धिषु च वेदनां[४] जनयन्ति। गन्धर्वास्तु[५] शुनामिव समाक्रामन्ति, अप्सरसः[६] मनो व्याकुलयन्ति, उन्मादश्च कुर्वते। आस्रवरोगः[७] क्षेत्रियरोगश्च[८] राक्षसैर्नीयते। अत्रयश्च[९] रक्तपायिनो भवन्ति।

एते दुरात्मानः[१०] भोजनसाहचर्येणाक्रामन्ति तत् प्रतिषेधोपायश्च कौशिकसूत्रे[११] प्रतिपादितः। तत्रैव[१२] रोगोत्पादकानां राक्षसादीनामपसारणार्थं यज्ञादि क्रिया निर्दिष्टाः। राक्षसनाशाय[१३] वारणाय वा विधिर्विहितः।

ऋग्वेदे[१४] च रोगराक्षसयोर्मिथः सम्वन्धो वर्णितो वर्तते। मृतात्मानश्च[१५] व्याधीन् कुर्वन्तीत्युक्तम्। एवञ्च सूर्यः[१६], अग्निः[१७], वृहस्पतिरित्येते[१८] रोगानपसारयन्ति इत्यपि प्रतिपादितम्। आहारेण सह दुरात्मानो राक्षसाः शरीरे न प्रविशेयुरेतदर्थम् ऋग्वेदे[१९] प्रार्थनाविधानमभिहितम्। ग्राहि[२०] तथा अप्वा[२१] नामधेयौ रोगजनकौ दैत्यौ समाम्नातौ।

**ऋग्वेदे भूतविद्या**—अस्मिंश्च वेदे[२२] नानाविषक्रमिव्याधिवर्णनम्, तत्प्रतीकारविधानञ्चोपलभ्यते। सूर्यचिकित्सया[२३] हृद्रोगादीनां निरसनम्। जलस्य[२४] भेषजत्वम् अपस्माररोगस्य[२५] च वर्णनमुपलभ्यते।

**राक्षसवर्णनम्**—विश्वस्य द्रष्टा सोमः रक्षसां हन्तृत्वेन समाख्यातः। तथा

रक्षोहा[२६] विश्वचर्षणिरभियोनिभयोहतम्।
द्रुणा सधस्थमासदत॥

**पितृप्रार्थना**—'ते नोऽवन्तु पितरो हवेषु'[२७]।

**रक्षोघ्नभिषग्वर्णनम्**

यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्चते भिषक् रक्षोहामीवचातनः[२८]॥

---

१. अथर्व० ४।३६।३, ५।२९।५। २. तत्रैव ११।२५।३। ३. तत्रैव ६।१११।३। ४. तत्रैव ११।९।१। ५. तत्रैव २।३७।११। ६. तत्रैव ११।२।५। ७. तत्रैव ११।३।६। ८. तत्रैव ११।१४।५। ९. तत्रैव ११।२५।६। १०. तत्रैव ४।२९।६। ११. कौ० सू० २६।१०। १२. तत्रैव २२।२२।२६। १३. तत्रैव २६।२९।३२। १४. ऋ० वे० १।१।१, ७।१।७। १५. तत्रैव १०।८५।३९। १६. अथर्व० १।३५।९। १७. तत्रैव १५।१।१२।७। १८. तत्रैव १।१८।२। १९. ऋ० वे० ११।१।२२।४। २०. अथर्व० ६।११२–१३। २१. तत्रैव १११।२।५। २२. ऋ० वे० १।१९।१।१-१६। २३. तत्रैव १।५०।११-१३। २४. तत्रैव १०।१३७।६। २५. तत्रैव १०।९० तथा १०५।१३७। २६. तत्रैव ९।१।२। २७. तत्रैव ९।१।२। २८. तत्रैव १०।१।१५।

**अग्नेः रक्षोघ्नत्वम्—**

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये[1] ।।

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ।।

अर्थात् तं मांसाशिनं राक्षसादिकं ब्रह्मणा सहितोऽग्निः निश्शेषेण नाशयतु । अथ च मासत्रयादूर्ध्वं[2] प्राप्तसर्वावयवं सर्पणशीलं गर्भं यो हिनस्ति, जिघांसति वा तस्य नाशनमुक्तम् । योषितः पादमूलस्थस्य गर्भाशयस्थस्य च राक्षसस्य च विनाशनमाख्यातम् । अग्रे च —

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि[3] ।।
यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि[4] ।।

**अप्सरोवर्णनम्**—अप्सरः[5]कर्तृकोन्मादरोगविमुक्तयेऽग्निः प्रार्थितो यदप्सरा मे मनः क्षुब्धं कृतवती, तेन हे अग्ने ! त्वं मे मनः समाहितं कुरु । यथाऽहं ते स्तुतिं सम्यग् विधास्ये ।

**नागवर्णनम्**—श्वश्रृगालादिभिः सह सर्पनामपरिगणितो वर्तते । तत्र चाग्निरभ्यर्थितः, यदग्निः श्वापदैर्विकृतं मृतं शरीरं संस्करोतु ।

यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणानाविवेश[6] ।।

**पिशाचिवर्णनम्**

पिशङ्गभृष्टिमभृणं पिशाचिमिन्द्र संभृण ।
सर्वं रक्षो निबर्हय[7] ।।

ऋग्वेदे कतिचन स्थलेषु यक्षशब्दः प्रयुक्तो दृश्यते क्वचित् यज्ञार्थे[8], क्वचन[9] धनार्थे च । अन्यत्र च पूजार्थे प्रयुक्त उपलभ्यते । तेन च यक्षाणामभ्यर्हितत्वात् तन्नाम पूजार्थकमपि प्रयुक्तमासीदिति कल्प्यते । तथा च—

अमूरा विश्वावृषणाविमा वां न यासु चित्रं ददृशेन यक्षम् ।
द्रुहः सचन्ते अनृता जनानां न वां निण्यान्यचिते अभूवन्[10] ।।

---

१. ऋ०सं० १०।६७।६ । २. ऋ० वे० १०।१२।६४ । ३. तत्रैव १०।१२।१६५ ।
४. तत्रैव १०।१०।१६६ । ५. तत्रैव १०।१।११–१२ । ६. ऋ० वे० १०।१।१६ ।
७. तत्रैव १।९।१३३ । ८. तत्रैव ४।१।३ । ९. तत्रैव ५।५।७० ।
१०, तत्रैव ७।४।६१।५ ।

**दुःस्वप्ननाशनम्**

> यो मे राजन् युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।
> स्तेनो वा दित्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान्[1] ॥

एवमेव—'अपेहि मनसस्पते इत्यारभ्य......यो नो द्वेष्टि तमृच्छतु[2]' इत्यन्तं पञ्चभिर्मन्त्रैः दुःस्वप्ननाशनमभिहितम् ।

**यजुर्वेदीयतैत्तिरीयसंहितायां भूतविद्या**—तत्र हि पिशाचाः राक्षसा असुराश्च सहचरत्वेन वर्णिताः । एवञ्च ते देवानां मनुष्याणां पितृणाञ्च विरोधिन उक्ताः । तथा च "देवाः मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद् रक्षांसि रात्रीभिरसुम्नन् तान् क्षुब्धान् मृतानपि व्यौच्छत, ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षांसि वा इमं घ्नन्तीति ते रक्षांस्युपामन्त्रयन्त, तान्यब्रुवन् वरं वृणामहे, यदसुरान् जयाम, तन्नः सहासीदति ततो वै देवा असुरानजयन्[3] ।"

**सर्पाणां मन्त्रप्रयोगेण मारणविधानम्**—तथा च "सर्पा वै जीयन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत् । ततो वै ते जीर्णास्तनूरपाघ्नत[4] ।"

**अथ च सर्पाणामुत्पत्तिवर्णनमवाप्यते**—"प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत्[5] ।" तत्रैव चोन्मादपरिहाराय प्रार्थना च निर्दिष्टा[6] ।

## अथर्ववेदे भूतविद्या

**दुःस्वप्ननाशनम्**—परोऽपेहि[7] मनस्पाप इत्यारभ्य दुरितात् पात्वंहसः, इत्यन्तं त्रिभिर्मन्त्रैरग्निः प्रार्थिता दुःस्वप्ननाशनाय । पुनश्च "यो[8] न जीवोऽसि न मृतो देवानामृतगर्भोऽसि स्वप्न" इत्यारभ्य "दुःस्वप्न्यं सर्वं द्विषते संनयामसि" इत्यन्तं दुःस्वप्नाद् रक्षा प्रार्थिता । अग्रे च—

> यत् स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते ।
> सर्वं तदस्तु मे शिवं नहि तद्दृश्यते दिवा[9] ॥

अत्र स्वप्नभोजनजनितदुरितशमनमुक्तम् ।

**मन्युशमनम्**

> अयं दर्भो विमन्युकः स्वाय चारणाय च ।
> मन्योर्विमन्युकस्यायं मन्युशमन उच्यते[10] ॥

इत्यादिमन्त्रत्रयेण मन्युशमनमाख्यातम् ।

---

१. ऋ० वे० २।२८।१० । २. तत्रैव १०।१६४।१–५ । ३. तै० सं० २।४।१।१ ।
४. तैत्ति० सं० १।५।४।१ । ५. तत्रैव ३।१।१।१ । ६. तत्रैव २।१।१।१ ।
७. अ० वे० ४।४५।१-३ । ८. अ० वे० ६।४६।१-३ । ९. तत्रैव ७।१०।१ ।
१०. तत्रैव ६।४३।१-३ ।

**ईर्ष्याविनाशनम्**

ईर्ष्याया[१] ध्राजिं प्रथमां प्रथमस्या उतापराम्।
अग्निं हृद्यं शोकं तं ते निर्वापयामसि ।।

इति मन्त्रत्रयेण ईर्ष्यानाशममुक्तम्। पुनश्चेर्ष्याशमनमुक्तम्—

अग्नेरिवास्य[२] दहतो दावस्य दहतः पृथक्।
एतामेतस्येर्ष्या मुद्‌गाग्निमिव शमय ।।

**उन्मत्ततामोचनम्**

इमं मे अग्ने पुरुषं मुमुग्ध्ययं बद्धः यो सुयतो लालपीति ।
अतोऽधि ते कृणवद् भागधेयं यदानुन्मदितोऽससि[३] ।।

प्रभृतिचतुर्भिर्मन्त्रैरिन्द्रादयोऽभ्यर्थिता उन्मादप्रशमनाय ।

**असुरक्षयणम्**—'येन सोमादितिः पथा मित्रा वा यन्त्य दुहः । तेना नोऽवसा। गहि[४]' इत्यादि मन्त्रत्रयं वर्णितम्। भूयश्च—

अयोजाला असुरा मायिनोऽयस्मयैः
पाशैरङ्किनो ये चरन्ति।
तांस्ते रन्धयामि हरसा जातवेदः
सहस्र ऋषिः सपत्नान् प्रमृणन् पाहि वज्रः[५] ।।

**यातुधाननाशनम्**—यथा नदी फेनं प्रतिसार्य तटोन्मुखं करोति, तथैव वह्नौ दत्तं हविर्यातुधानानपसार्य दूरे करोतु इति मन्त्रचतुष्टयैरग्निः प्रार्थितः[६] । अपरत्र[७] च रुद्रस्य प्रार्थना, मित्रावरुणयोश्चाभ्यर्थनं कृतं यातुधानक्षपणाय। पुनश्च—

उप[८] प्रागाद् देवो रक्षोहामीवचातनः।
दहन्नप द्वयाविनो यातुधानान् किमीदिनः।।

प्रभृतिभिश्चतुर्भिर्मन्त्रैर्यातुधानविनाशनमुक्तम् ।

**मेधाजननम्**

ये त्रिवप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु[९] मे ।।

इत्यादिचतुर्भिर्मन्त्रैर्मेधाजननमाख्यातमुपलभ्यते ।

**मेधावर्धनम्**

त्वं नो मेधे प्रथमा गोभिरश्वेभिरागहि।
त्वं सूर्यस्य रश्मिभिस्त्वं नो असि यज्ञिया ।।

---

१. अ०वे० ६।१८।१-३ । २. तत्रैव ७।४५।२ । ३. तत्रैव ६।१११।१-४ ।
४. अ० वे० ६।७।१-३ । ५. अ० वे० १९।६६।१ । ६. तत्रैव १।८।१-४ ।
७. तत्रैव ६।३२।१-३ । ८. तत्रैव १।२८।१-४ । ९. तत्रैव १।१।१-४ ।

यां मेधामृभवो विदुर्यां मेधामसुरा विदुः ।
ऋषयो भद्रां मेधां यां विदुस्तां मय्यावेशयामसि ।।
यामृषयो भूतकृतो मेधां मेधाविनो विदुः ।
तया मामद्य मेधयाऽग्ने मेधाविनं कृणु ।।
मेधां सायं मेधां प्रातर्मेधां मध्यं दिनं परि ।
मेधां सूर्यस्य रश्मिभिर्वचसा वेशयामहे[1] ।।

एभिः सप्तमन्त्रैर्मेधावर्धनायाग्निरभ्यर्थितः ।

**मणिधारणम्**—भूतविद्यासम्बन्धिव्याधीनां चिकित्सिते 'दैवव्यपाश्रयचिकित्सा' प्राधान्यं भजते । तत्र हि विविधानां मणीनां धारणेन रोगनिवर्हणं भूतापसारणञ्च समाख्यातम् । तथा चाथर्ववेदे मणिधारणम्-शंख[2]-प्रतिसर[3]-वरण[4]-फाल[5]-दर्भ[6]-औदुम्बर[7]-जङ्गिड[8]-शतवार[9] -अस्तृतमणीनां[10] धारणफलमाम्नातम् ।

**कृत्यापरिहरणम्**—अथर्ववेदे (५।१४। १-१३, ५।३१। १-१३, १०।१। १-३२) मन्त्रेषु वैशद्येन कृत्यापरिहारविधानमाख्यातमुपलभ्यते ।

**शापनाशनम्**—अथर्ववेदे ( ६।३७। १-३, ७।५९।१ ) स्थलयोः शापनाशन-वर्णनमवाप्यते ।

**पापमोचनम्**—निम्नाङ्कितेषु स्थलेषु एतत् सम्बन्धिसन्दर्भाः स्फुटं वर्णिताः सन्ति[11] ।

**राक्षसप्रतीकारवर्णनम्**—दृश्यते चाथर्ववेदे 'यातुधान' ( राक्षस ) प्रतीकाराय अग्निः प्रार्थित इति । तथा च–

स्तुवामनमग्न आ वह यातुधानं किमीदिनम् ।
त्वं हि देववन्दितो हन्ता दस्योर्बभूविथ ।।
आज्यस्य परमेष्टिन् जातवेदस्तनू विशन् ।
अग्ने तौलस्य प्राशान् यातुधानान् विलापय ।।

अथ च अथर्ववेदस्य एषु मन्त्रेषु बहुषु यातुधाना अत्रिणो किमीदिनः, यातुमान्, इत्येषां शब्दानां प्रयोगः परिलक्ष्यते । ते च राक्षसा नश्यन्तु, इन्द्रश्च तेषां शीर्षाणि ( शिरांसि ) कुलिशेन वृश्चतु ( छिनत्तु ) इति प्रार्थना विहिता ।

---

१. अ० वे० ६।१०८।१-५ । २. तत्रैव ४।१०।१-७। ३. तत्रैव ८।५।१-२२ ।
४. तत्रैव १०।१।१-२५ । ५. तत्रैव १०।६।१-३५ । ६. तत्रैव १९।२९।१-९ ।
७. तत्रैव १९।३१।१-५ । ८. तत्रैव १९।३४।१-१० । ९. तत्रैव १९।३६।१-६ ।
१०. तत्रैव १९।४६।१-७ । ११. अथर्ववेदे—१।१० । १-४; १।३१ । १-४; ४।२३ । १-७; ४।२४।४ । १-७; ४।२५ । १-७; ४।२६ । १-७; ४।२७ । १-७; ४।२८ । १-७; ४।२९ । १-७; ६।२६ । १-३; ६।११५ । १-३; ७।४२ । १-२; ७।६४ । १-२; ७।११२ । १-२; ७।११३ । १-३; ७।११५ । १-४; ११।६ । १-२३

अग्रे च (अथर्व० का० १ अनु० २ सू० १ मन्त्र १-४) एषु मन्त्रेषु च गुहायां निवसतां रक्षसां समूलमुन्मूलनाय वह्निरभ्यर्थितः। अथ च (अथर्व० १।३।५। १-४) मन्त्रेषु अदनशीलानां अत्रिणां ( राक्षसपिशाचादीनां ) बाधापहरणायासग्निरभ्यर्थितः। सीसनामकं द्रव्यञ्च राक्षससंहारकरमुक्तम्। पुनश्च (अथर्व० १।५।७।१-४) एषु मन्त्रेषु अग्निदेवः रक्षोहामीवचातनोऽभिहितः, प्रार्थितश्च रक्षसां विनाशाय। तथा हि—

उप प्रागाद्देवो अग्नी रक्षोहामीवचानतः।
दहन्नप द्वयाविनो यातुधानान् किमीदिनः॥ १॥
प्रतिदह यातुधानान् प्रतिदेवकिमीदिनः।
प्रतीचीः कृष्णवर्तने संदह यातुधान्यः॥ २॥

**हिरण्यस्य रक्षोहन्तृत्वम्**—एकत्र चाम्नातम्, यदावद्धहिरण्यं पुरुषं राक्षसाः नाभिभवन्ति—

नैनं रक्षांसि न पिशाचाः सहन्ते देवानामोजः प्रथमजं ह्येतत्।
यो विभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः[1]॥

'देवानामोजः प्रथमजं ह्येतत्' देवानामिति आदरार्थं बहुवचनम्। तेन देवस्य अग्नेः हिरण्यं प्रथमजं प्रथमोत्पन्नं रेतोरूपं तेजो हि। यस्मात् कारणाद् रक्षसां हन्तुरग्नेस्तेजो हिरण्यम् 'अग्निः खलु वै रक्षोहा'[2] इति श्रुतेः तस्माद् हिरण्यं रक्षो निवर्तकम् इत्यर्थः। हिरण्यस्य अग्निरेतस्त्वं तैत्तिरीयके श्रूयते। 'आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायत् ताः समभवन्। तस्य रेतः परापतत्। तद्धिरण्यम् अभवत्'[3] इति सायणः।

आयुर्वेदे च हिरण्यं स्थावरजङ्गमात्मकोभयविधविषनाशकमुक्तम्, हृद्यमायुष्यं मेधास्मृतिमतिप्रदश्चोक्तम्।

पवित्रं बृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम्।
हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत्॥
विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित्॥
—भावप्रकाशनिघण्टुः, धातुवर्गः।

**अपस्मारविमुक्तये नक्षत्रप्रार्थना**—अथ चैकत्र मन्त्रे 'विचृतौ' इति द्विवचननिर्दिष्टे द्वे तारके ( मूलनक्षत्रम् ) क्षेत्रिय ( अपस्मार ) व्याधिमोक्षणार्थमभ्यर्थिते। तथा च—

उद्गातां भगवती विचृतौ नाम तारके।
विक्षेत्रियस्य मुञ्चतामधमं पाशमुत्तमम्॥

---

१. अथर्व० १।६।७।२। २. तै० सं० ६।१।४।६। ३. तै० ब्रा० १।१।३।८।

क्षेत्रे परक्षेत्रे पुत्रपौत्रादिशरीरे चिकित्स्यः क्षयकुष्ठादिदोषदूषितपितृमात्रादिशरीरावयवेभ्य आगतः क्षयकुष्ठापस्मारादिरोगः क्षेत्रिय इत्युच्यते। 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः'[1] इति क्षेत्रियशब्दो निपात्यते। तस्य क्षेत्रियरोगस्य पाशं पाशवद्बन्धकं रोगबीजं विमुञ्चताम्[2] ( तत्रैव सायणः )।

अग्रे च चतुर्षु मन्त्रेषु क्षेत्रियस्य ( अपस्मार ) रोगस्य विनाशकस्य भेषजस्य स्तुतिर्विहिता। ब्रह्मराक्षसगृहीतपुरुषस्य चोद्धाराय 'दशवृक्ष'मणिः ( पलाशौदुम्बरादिदशवृक्षशकलमणिः ) प्रार्थितः।

दक्षवृक्षमुञ्चेमं रक्षसो ग्राह्या अधियैनं जग्राह पर्वसु।
अथो एनं वनस्पते जीवानां लोकमुन्नय॥

प्रभृतिपञ्चमन्त्रेषु वर्णनं विद्यते[3]। क्षेत्रियव्याधिनिरसनवर्णनं पुनश्च अष्टषु मन्त्रेषु[4] कृतम्।

**पिशाचसंहाराय चाग्निः प्रार्थितः**

यथा च—

पिशाचक्षयणमसि पिशाचचातनं मे दाः स्वाहा।
सदान्वाक्षयणमसि सदान्वाचातनं मे दाः स्वाहा[5]॥
शेरभक शेरभ पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः।
यस्य स्थ तमत्त यो वः प्राहैत तमत्त स्वा मांसान्यत्त॥

प्रभृतिभिरष्टभिर्मन्त्रै[6]र्यातुधाननिवर्तनमुक्तम्।

**कृमिसंहारः**

इन्द्रस्य या मही दृषत् क्रिमेर्विश्वस्य तर्हणी।
तया पिनष्मि सं क्रिमीन् दृषदा खल्वां इव॥

इत्यादिभिः पञ्चभिर्मन्त्रैः[7] कृमिसंहार उक्तः।

**अपस्मारे शृङ्गप्रयोगः**—'हरिणस्येति[8]' सूक्तेन क्षेत्रियव्याधिविनाशाय हरिणशृङ्गमणिबन्धनं तच्छृङ्गाप्लुतजलपानं रोगिणोऽभिषेकः, अभिमन्त्रणञ्च विहितम्—

हरिणस्य रघुष्यदोधि शीर्षणि भेषजम्।
स क्षेत्रियं विषाणया विषूचीनमनीनशत्[9]॥

प्रभृतिभिः सप्तभिर्मन्त्रैः क्षेत्रियरोगस्य ( अपस्मारस्य ) नाशनमुक्तम्। त्रिककुत्संबन्धि, यामुनस्वाऽञ्जनमपमृत्युवारणम्, कृमिनाशनम्, शापाभिचार-

---

१. पा० सू०–५।२।९२। २. अथर्व० २।२।३।१। ३. अथर्व० २।२।४१–५।
४. तत्रैव २।२।५।१–८। ५. तत्रैव २।४।१।४–५। ६. तत्रैव २।४।७।१–८।
७. तत्रैव २।५।५।१–५ तथा २।६।१।१–६ ८. कौ० सू० ४।३।
९. अथर्व० ३।२।२।१–७।

कृत्यादिनिवारणम्, यातुधानापवारणम्, कल्याणकृच्च भवतीत्युक्तम्, मृत्योरनागमनाय च प्राकारभित्तिरिति निगदितम्।

एहि जीवं त्रायमाणं पर्वतस्यास्यक्ष्यम्।
विश्वेभिर्देवैर्दत्तं परिधिर्जीवनाय कम्[1]॥

प्रभृतिदशमन्त्राः सन्ति।

**अभिचारनिवृत्तिः**—स्त्रीशूद्रकापालादिकृताभिचारदोषनिवृत्त्यर्थं दर्भापामार्गसहदेव्याद्या ओषधीः शान्त्युदककलशे प्रक्षिप्य तदभिमन्त्रणार्थं 'महाशान्तिगण' सूक्तानां पाठविधानमुक्तम्[2]। कृत्या प्रतिहरणार्थञ्चैषां सूक्तानां पाठो विधीयते।

इशानां त्वां भेषजानामुज्जेष आ रभामहे।
चक्रे सहस्रवीर्यं सर्वस्मा ओषधे त्वा[3]॥

इत्यादिभिरष्टभिर्मन्त्रैः अभिचार-परकृताक्रोश-शाप-दौःस्वप्न्य-राक्षसादिभयक्षुत्तृष्णा-द्यूतपराजय-कृत्याजन्यरोगादीनामपगमाय सहदेव्यपामार्गादिभेषजानां वर्णनं कृतम्।

**पिशाचादिनाशनम्**

तपनो अस्मि पिशाचानां व्याघ्रो गोमतामिव।
श्वानः सिंहमिव दृष्ट्वा तेन विन्दन्ते न्यञ्जम्[4]॥

इत्यादि दशमन्त्रेषु वर्णितम्। अप्सरसां पराङ्मुखीकरणमभिभवनञ्च।

हे अप्सरसः यूयं नद्यादिषु स्वावासस्थलेषु व्रजत! गुग्गुलप्रभृतिपञ्चहोमद्रव्यहवनेन भीताः पलायध्वम्! यत्र वनान्तप्रान्तरे स्वच्छन्दगतिरस्ति तत्र व्रजध्वम्।

तैत्तिरीयसंहितायाञ्च (३।४।८।४) एवमुक्तं यत् "नैयग्रोध-औदुम्बर-आश्वत्थ-प्लक्ष-इतीध्मो भवन्त्येते वै गन्धर्वाप्सरसां गृहाः।" साम्प्रतिके च काले स्पष्टमेव न्यग्रोधौदुम्बरप्लक्षाश्वत्थफलेषु सूक्ष्माः क्रिमयो बहिरन्तर्वा दरीदृश्यन्ते, तेषु च गन्धग्राहिणो केचन गन्धर्वाः स्युः, कतिचन च क्लिन्नपूतिरसलुब्धा अप्सरसो वा स्युः। पूर्वोक्तहवनीयद्रव्याणां हवनेन च निश्चयमेव तेषां विनाशो भवतीति। एवञ्चाथर्ववेदे विविधरूपेण कृमिवर्णनं तत्प्रतीकारवर्णनञ्चोपलभ्यते। तथा च—

नदीं यन्त्वप्सरसोऽपां तारमवश्वसम्।
गुल्गुलूः पीला नलद्यौक्षगन्धिः प्रमन्दनी॥
तत् परेताप्सरसः प्रतिबुद्धा अभूतन[5]॥

इत्यादिभिर्द्वादशमन्त्रैः प्रतिकारो वर्णितः।

---

१. अथर्व० ४।२।४। १–१०। २. कौशिकसूत्रम्–५।३। ३. अथर्व० ४।४।२। १–८।
४. अथर्व० ४।८।१ १–१०। ५. तत्रैव–४।६।२ १–१२।

**क्रिमिनाशनम्**—अनेकविधाः क्रिमयो वर्णितास्तेषाञ्च समूलोन्मूलनाय मन्त्रा निर्दिष्टाः। क्रिमिभैषज्यकर्मणि 'ओते मे द्यावा पृथिवी' इत्यादिभिस्त्रयोदशमन्त्रैः[१] क्रिमिनाशनमुक्तम्। तत्र च करीरकाष्ठम्, शिग्रुवीजम्, उशीरम्, पांशुश्च प्रयुक्तं वर्तते विविधेषु विनियोगविधिषु।

**ईर्ष्यानिवर्तनक्षमम् औषधम्**

जनाद् विश्वजनीनात् सिन्धुतस्पर्याभृतम्।
दूरात् त्वामन्य उद्भृतमीर्ष्याया नाम भेषजम्[२]॥

'विश्वजनीनात्-विश्वजनहितात् तादृशाद् जनाद् जनपदादित्यर्थः। एकदेशेन व्यपदेशो भीमसेनो भीम इतिवत्। तथा सिन्धुतः-समुद्रात् तथा दूरात्-दूरदेशात् उद्भृतम्-उद्धृतं त्वां सक्तुमन्थलक्षणम् औषधं मन्ये जानामि' (सायणः)।

**ईर्ष्याशमनम्**—पुनश्च ईर्ष्योपेतपुरुषस्य ईर्ष्योद्रेकशमनमुक्तम्—

त्वाष्ट्रेणाहं वचसा वि त ईर्ष्याममीमदम्।
अथो यो मन्युष्टे पते तमुते शमयामसि[३]॥

**दुःस्वप्नजनितपापात् शोकाच्च प्रतिनिवर्तनम्**

पर्यावर्ते दुष्वप्न्यात् पापात् स्वप्न्यादभूत्याः।
ब्रह्माहमन्तरे कृण्वे परा स्वप्नमुखाः शुचः॥

**स्वप्नेऽन्नभोजनेन जनितारिष्टप्रशमनम्**

यत् स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते।
सर्वं तदस्तु मे शिवं नहि तद्दृश्यते दिवा[४]॥

**मानसव्याधीनामपगमनार्थमग्निः सोमश्च प्रार्थितः**

प्रेतो यन्तु व्याध्यः प्रानुध्याः प्रो अशस्तयः।
अग्नी रक्षस्विनीर्हन्तु सोमो हन्तु दुरस्यतीः[५]॥

**शरीरस्य देवमयत्वम्**—ब्रह्मणैव पुरुषो निर्मितः, तस्य शिरः देवकोशः, शरीरञ्च अयोध्यापुरी, तत्र च हिरण्ययः स्वर्गप्रदो कोशः, तस्मिंश्च त्र्यरे त्रिप्रतिष्ठिते, हिरण्यमये कोशे आत्मनो निवासः, तच्च ब्रह्मविदो विदन्तीत्यादि च त्रयस्त्रिंशन्मन्त्रेषु वर्णितम्। मनुष्याणां शरीरमङ्गानि च देवैर्विनिर्मितानि। तदिदं शरीरं देवमयम्।

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः[६]॥

---

१. अथर्व० ५।५।२।१-१३। २. तत्रैव–७।४।१।१०। ३. तत्रैव–७।७।१।३।
४. तत्रैव–७।९।२।९-१०। ५. तत्रैव–७।१०।३।४। ६. तत्रैव–१०।१।२।३१।

**पितृवर्णनम्**—पितृणाञ्च विषये विशदं वर्णनमुपलभ्यते। अन्त्येष्टिकर्मविधयः पिण्डोपस्थानं हविर्दानं समिधादानादिकं सम्यगाख्यातम्। पितरश्च सर्वतोभावेन यथा सन्तोषभाजो भवन्ति, तथा तथा विधानं समाम्नातम्। तथा च—

सं विशन्त्विह पितरः स्वा नः स्योनं कृण्वन्तः प्रतिरन्त आयुः।
तेभ्यः शकेम हविषा दक्षमाणाः ज्योग्जीवन्तः शरदः पुरुचीः॥

सायणभाष्यम्–इह अस्मिन् यज्ञे अस्माकं स्वाः ज्ञातयो गोत्रजाः पितरः पितृपितामहप्रपितामहाः, संविशन्तु सम्यग् उपविशन्तु। उपविष्टास्ते स्योनं सुखम् अस्माकं कृण्वन्तः कुर्वन्तः आयुः जीवनं प्रतीरन्ते-प्रपूर्वस्तिरतिर्वर्धनार्थः, प्रवर्धयन्तु चिरकालम् अस्मान् जीवयन्तु इत्यर्थः। दक्षमाणाः वर्धमाना वयं तेभ्यः पितृभ्यो हविषा चरुपुरोडाशादिलक्षणेन शकेम परिचरितुं शक्ता भूयास्म। ...... ....पुरुचीः पुरु बहुलम् अञ्चन्ति गच्छन्तीति पुरुच्यः, ताः बह्वीः शरदः संवत्सरान् ज्योक् चिरकालं जीवन्तः पितृप्रसादाज्जीवितारो भवेम[1]।

**मनोव्याधिदूरीकरणम्**—एवञ्च मानसो व्याधिः सम्बोधितोऽस्ति यत्त्वं दूरमपसर। अस्माद् रोगिणः निर्ऋतिः दूरे व्रजतु इति तां कथय।

अपेहि मनसस्पतेऽपक्राम परश्चर।
परो निर्ऋत्या आचक्ष्व बहुधा जीवतो मनः[2]॥

**विविधक्रिमिनिस्सारणवर्णनम्**[3]—चक्षुर्नासिकादन्तादिषु प्रविश्य रोगकारकाणां वासकष्कष-एजत्क-शिपी-विलुकादिक्रमीणां नाशनम्[4], नानावर्णक्रमिवर्णनम्[5], मनुष्यगतानां गवादिगतानां च क्रमीणां सूर्यकिरणैर्निवारणं हानिकारकाणां रोगजन्तूनां [6]सूर्यकिरणैर्नाशनं मृगचर्मणोः[7] हरिणशृङ्गस्य च अपस्मारादिनाशकत्वम्, सहदेव्या[8] अपामार्गस्य च 'कृत्या' नाशकत्वेन महिमवर्णनम्। [9]अपामार्गस्य पापनिवर्तकत्वम्, जङ्गिमौषधेः[10] 'कृत्या' नाशकत्वं एतत्सर्वमुपलभ्यतेऽथर्ववेदे।

**अथर्ववेदे भूतविद्यायां क्रमीणां स्थानम्**—अष्टौ भूतानि यानि सन्ति, तेषु असुर-गन्धर्व-रक्षः-यक्ष-पिशाच-नागशब्दैः क्रमीणामेव ग्रहणं न्याय्यम्, यत एभिरेव शब्दैरथर्ववेदे क्रमीणां वर्णनं बाहुल्येन कृतमास्ते। नैरुक्तेन व्याख्यानेन, शब्दकोषैश्चैतेषां शब्दानामन्वर्थता प्रकटीभवति। अथर्ववेदे विभिन्नानां क्रमिजातीनां व्यापकत्वम्, दृश्यादृश्यस्वरूपम्, रोगकारणत्वञ्च निगदितम्। ते खलु जले, भूमौ, दिवि च सञ्चरन्ति—'ये अन्तः क्रमयो गवि'[11] इति।

यो अन्तरिक्षेण पतति दिवं यश्चातिसर्पति।
भूमिं यो मन्यते नाथं तं पिशाचं प्रदर्शय[12]॥

---

१. अथर्व० १८।२।३।२९। २. तत्रैव २०।८।६।२४। ३. अथर्व० २।३१।१–५।
४. तत्रैव ५।२३।१–१३। ५. तत्रैव २।३२।१।१६। ६. तत्रैव ४।३७।१–१२।
७. तत्रैव ३।७।१–३। ८. तत्रैव ४।१७।१–८। ९. तत्रैव ७।६७।१–३।
१०. तत्रैव १९।३४।१–१०। ११. तत्रैव २।३२।१। १२. तत्रैव ४।२०।९।

'दृष्टमदृष्टमतृहम्'[१] इत्यादिमन्त्रेषु च ।

यास्काचार्यस्तु कृमिशब्दस्य निर्वचनमेवं करोति—क्रव्ये मेद्यति क्रमतेर्वा स्यात्, सरणकर्मणः कामतेर्वा[२] ।' तेन च क्रव्येन आममांसेन ये मेदस्विनो भवन्ति, ये आक्रामन्ति प्रसरन्ति वा किं वा ये कामयन्ते, ते एवम्भूताः कृमयः । तथा च—केचन भोज्यपदार्थेषु प्रविश्य शरीरान्तर्गताः रोगजनका भवन्ति[३] । केचन क्षीरे, जले, तक्रे वा प्रविशन्ति[४] । केचनोच्छिष्टेषु पात्रेषु संलग्ना भवन्ति, भोक्तुश्च शरीरे प्रविश्य विकारकरा भवन्ति[५] । केचन गर्भाशयमनुप्रविश्य स्रावपातयोर्जनकाः, गर्भहानिकरा वा भवन्ति[६] । केचन रुधिरपायिनः[७], केचन मांसशोषकाः[८], केचन नेत्रयोर्कर्णासियोर्दन्तेषु वा प्रविश्य विघ्नकराः, केचन मस्तिष्काभिमुखीभूता [९]मानसामयाञ्जनयन्ति मनोहनम्[१०] । केचन शय्यायां निमज्जन्ति शयने शयानम्[११] केचन पर्वतेषु, वनेष्वौषधीषु भवन्ति, 'ये क्रिमयः पर्वतेषु, वनेष्वोषधीषु । पशुस्वप्स्वन्तः'[१२] । केचनान्त्रेषु जायन्ते 'अन्वान्त्रम्'[१३] । एवञ्च मशकादिदंशजनका विषविज्ञानीया नानाविधाः कृमयः, ये स्वविषैर्मानवान् सविषीकुर्वन्ति 'भैषज्यमथो मशकजम्भनी,' 'मशकस्यां रसं विषम्'[१४] इत्यादि ।

कृमिवाचकत्वेन वेदेषु—राक्षस-पिशाच-यातुधान-गन्धर्व-अप्सरोप्रभृतयो वर्णिताः । तथा चैतेषां निरुक्तिरुच्यते—

राक्षसः—'रक्ष्यतेऽस्मात् । रहसि क्षणोति वा रात्रौ न क्षतः [१५]इति वा', 'यातुं वेदनां दधतीति यातुधानाः'—वेदनोत्पादकाः कृमयः ।

पिशाचः—'पिशितमाचामति—इति पिशाचः' ( वाचस्पत्यम् ) 'पिशितमश्नातीति पिशाचः' ( शब्दकल्पद्रुमः ) आममांसभक्षकाः कृमयः । यातुः झटिति गमनशीलस्तथा पीडाकरः ( जादू इति लोके ) ।

असुरः—असून् प्रणान् राति आददाति—अपहरति इति असुरः । प्राणापहारी कृमिः ।

अप्सरसः—अप्सु सरन्तीत्यप्सरसः—जलेचराः कृमयः । अप्सरा अप्सारिणी भवति[१६] ।

गन्धर्वाः—गां वाणीं धारयन्तीति गन्धर्वाः, गायकाः=मशकादयः, अथवा गन्धवति स्थाने निवासिनः[१७] । अथो गन्धेन च वैरूपेण च गन्धर्वाप्सरसश्चरन्ति[१८] ।

---

१. अथर्व० २।३१।२ । २. निरुक्तम् ६।१२ । ३. अथर्व० ५।२९।६ ।
४. तत्रैव ५।२९।७ । ५. यजु० १६।६२ । ६. ऋ०वे० १०।१६२।२।४ ।
७. अथर्व० ५।२९।१० । ८. तत्रैव ५।२९।५ । ९. ऋ०वे० १०।१६२।६ ।
१०. अथर्व० ५।२९।१० । ११. तत्रैव ५।२९।८ । १२. तत्रैव २।३१।५ ।
१३. तत्रैव २।३१।४ । १४. तत्रैव ७।५८।२।३ । १५. निरुक्तम् ४।१२ ।
१६. तत्रैव ५।१३ । १७. शतपथब्रा० १०।५।२।२० । १८. तत्रैव ९।४।१।४ ।

**अथर्ववेदीयकृमीणां प्रकाराः**

| | | |
|---|---|---|
| अत्रिणः | भक्षणशीलाः | ६।३।२।३ |
| अरातिः | शत्रुः | ५।२३।२ |
| अराय्यः | कुरूपाः ( दुर्भंगाः ) | १।२८।४ |
| अन्वान्त्र्यः | अन्त्रस्थिताः | २।३१।४ |
| अनुपलालः | हीनाङ्गः | ८।६।२ |
| अप्रचंकशः | क्षीणरवः | ८।६।१६ |
| अनंगुरिः | अंगुलिहीनः | ८।६।२ |
| अयाशवः | शीघ्रगामिनः | ८।६।१५ |
| अर्जुनः | श्वेतः | २।३२।२ |
| अल्गण्डाः | रुधिरमांसदूषकाः | २।३१।१२ |
| अवस्कवाः | निम्नगतिकाः | २।३१।४ |
| अभिशोचः | परितः शोकातुराः | ४।३७।१० |
| असृक्पावाः | रुधिरपायिनः | २।२५।३ |
| अलिंशाः | आलिङ्गनशीलाः | ८।६।१ |
| अवकादा | शैवालभक्षकाः | ४।३७।१० |
| अण्डादाः | अण्डभक्षकाः | ८।६।२५ |
| आपाकेष्ठाः | पाकशालाधिष्ठिताः | ८।६।१४ |
| आश्रेषाः | आश्लिष्टाः | ८।६।२ |
| उदुम्बला | मारकाः | ८।६।१७ |
| उद्धर्षी | धर्षणशीलाः | ८।६।१७ |
| उरुण्डः | विशालाननः | ८।६।१५ |
| ऋक्षग्रीवी | ऋक्षवद्ग्रीवायुक्तः | ८।६।२ |
| एजत्कः | कम्पशीलः | ५।२३।७ |
| कण्वः | सूक्ष्मः | २।२५।३ |
| ककुभाः | भयङ्कराकृतिः | ८।६।१० |
| करुमाः | कुत्सितशब्दकारिणा | ८।६।१० |
| कष्कषासः | कष्कष्ध्वनियुक्तः | ५।२३।७ |
| कुकुन्धाः | कुध्वनिकर्ता | ८।६।११ |
| कुक्षिलाः | स्थूलकुक्षिमन्तः | ८।६।१० |
| कुम्भमुष्काः | कुम्भसदृशमुष्काः | ८।६।१५ |
| कुसूलाः | अन्नाधानिकावत् स्थूलाः | ८।६।१० |
| कृष्णः | कृष्णवर्णः | ८।६।५ |
| केशवाः | केशवन्तः | ८।६।२३ |
| केश्यसुरः | केशवन्तः | ८।६।५ |
| कोकः | संहारकः | ५।२३।४ |

| | | |
|---|---|---|
| क्रव्यादः | आममांसभक्षकः | ५।२९।८ |
| क्रिमिः | गतिशीलः क्रव्यादः | २।३१।५ |
| क्षुल्लकाः | बीजरूपेणावस्थिताः | २।३२।५ |
| गृध्राः | गृध्रवद्दृष्टयः | ८।२३।४ |
| चतुरक्षः | नेत्रचतुष्टययुक्तः | ८।६।१९ |
| छायकः | कृष्णवर्णः | ८।६।२१ |
| तिरीटी | उच्चैरुत्थितशिराः | ८।६।७ |
| तुण्डिकः | विकृततुण्डः | ८।६।५ |
| तुगल्वः | उन्नतगलः | ८।६।२१ |
| तुण्डेलः | तीक्ष्णतुण्डवान् | ८।६।१७ |
| त्रिककुद् | ककुदत्रययुक्तः | ५।२३।९ |
| त्रिशिर्षी | त्रिशिराः | ५।२३।९ |
| दुर्गन्धी | दुर्गन्धयुक्तः | ८।६।१२ |
| दुर्णामा[1] | पापनामाक्रमिः | १०।१६२।२ |
| द्वयास्यः | द्विमुखः | ८।६।२२ |
| नदनिमा | नादकारी | ५।२३।८ |
| पलीजकः | अकालपलितकरः | ८।६।२ |
| पण्डकः | संसरणशीलः | ८।६।१६ |
| पञ्चपादः | पञ्चचरणः | ८।६।२२ |
| प्रमीली | नेत्रनिमीलनस्वभावः | ८।६।२ |
| पर्यस्ताक्षः | विशालनेत्रः | ८।६।१६ |
| बस्तवासिनः | अजेषु निवासिनः | ८।६।२ |
| मनौहनः | मानसविकारकरः | ५।२९।१० |
| मायिनः | मायाविनः | १९।६६।१ |
| मुनिकेशाः | जटावन्तः | ८।६।१७ |
| येषावासः | शीघ्रगतिकाः | ५।२३।७ |
| रोहितः | रक्तवर्णः | ५।२३।४ |
| लोहितास्यः | लोहितमुखः | ८।६।१२ |
| विरूपः | विकृतरूपः | ५।२३।४ |
| विश्वरूपः | अनेकरूपः | ५।२३।५ |
| विसूचीनः | सूचीवद् वेधनशीलः | ८।६।१० |
| शर्कुः | हिंसकः | ८।६।२ |
| शकधूमजः | गोमयादिधूमजः | ८।६।१५ |
| शालुडः | दुष्टः | ८।६।१४ |
| शिखण्डी | शिखावलः | ४।३७।७ |

---

१. ऋ० वे० १०।१६२।२।

| | | |
|---|---|---|
| शितिवाहवः | तीक्ष्णकराः | ५।२३।५ |
| शितिकक्षाः | तीक्ष्णकक्षाः | ४।२३।५ |
| शीर्षण्याः | शिरस्थाः | २।३१।४ |
| सारङ्गः | विविधवर्णः | २।३२।२ |
| स्तम्बजः | स्तम्बेषु जातः | ८।६।५ |
| स्त्रिमाः | सूक्ष्माः | ८।६।१० |

अथर्ववेदे रक्षः-राक्षस-यातुधान-पिशाच-गन्धर्व-अप्सरोप्रभृतिनामभि-र्विस्तरशः क्रमीणां वर्णनमुपलभ्यते । ते च—

ये क्रमयः पर्वतेषु वनेष्वोषधीषु पशुष्वन्तः ।
ये अस्माकं तन्व आविविशुः सर्वं तद् हन्मि जनिम् क्रमीणाम् ।।
ओते मे द्यावापृथिवी ओता देवी सरस्वती ।
ओतो मे इन्द्रश्चाग्निश्च क्रमिं जम्भयतामिति[1] ।।

इत्यादिमन्त्रेषु सर्वत्रैव व्यापकत्वेन निर्दशिताः । एवञ्च ते क्रमयो मानवशरीरेषु पशुषु पादपेषु च नानाविधान् व्याधीन् जनयन्ति । तेषामुन्मूलनाय च रविरश्मयः, वैश्वानरः, गुग्गुलुः, पीलुः, धातकी, मांसी, वटः, अश्वत्थः, अजशृङ्गी प्रभृतयः प्रयुज्यन्ते । प्रायशोऽशीत्यधिकमन्त्रेषु क्रमिनाशनविधानं वर्णितमास्ते ।

उदयाचलोन्मुख आदित्यः स्वरश्मिभिः क्रमीन् हन्तु[2] । ब्रह्मशक्तिमानग्निः क्रमीणां विनाशं करोतु[3] । यश्च क्रमिः गर्भाशयं प्रविश्य गर्भमांसमत्ति, तमग्नि-र्भस्मसात् करोतु[4] । यश्च क्रमिः प्रसवावस्थायामुत्पद्यमानं शिशुं जिघांसति, तं नाशयामि[5] । यो क्रमिर्दम्पत्योः संभोगे योनिम्प्रविश्य गर्भं क्षिणोति तं नाशयामि[6] । हे अग्ने ! त्वं क्रमिसंज्ञकानां यातुधानानां हन्ता । हे परमेष्ठिन् ? ( अग्ने ) तोलित-हविर्भक्षकान् क्रमीन् नाशय[7] । अग्निः[8] पूर्वं यातुधानविनाशं करोतु, इन्द्रश्च क्रमीन-

---

१. अथर्व० ५।२३।१ ।

२. 'उद्यन्नादित्यः क्रमीन् हन्तु निम्रोचन हन्तु रश्मिभिः'—अथर्व० २।३२।१ ।

३. 'ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः'—ऋ० वे० १०।१६२।१ ।

४. यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ।। ऋ० १०।१६२।२ ।

५. यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ।। ऋ० १०।१६२।३ ।
स्तुवानमग्न आ वह यातुधानं क्रमीदिनम् । अथर्व० १।७।१ ।

६. यस्त ऊरू विहरत्यन्तरा दम्पतीशये ।
योनिं अन्तरारेलिह तमितो नाशयामसि ।। ऋ० १०।१६२।४ ।

७. आज्यस्य परमेष्ठिन् जातवेदस्तनूवशिन् ।
अग्ने तौलस्य प्राशान् यातुधानान् विलापय ।। अथर्व० १।७।२ ।

८. अग्निः पूर्वमारभतां प्रेन्द्रो नुदतु बाहुमान् ।। अथर्व० १।७।४ ।

पसारयतु। हे अग्ने[1]। अस्मद्धिताय सर्वान् यातुधानान् त्रासय। हे अग्ने[2]! त्वं यातुधानान् बद्ध्वा आनय इन्द्रश्च तेषां शिरांसि कर्तयतु।

एवञ्च भूतविद्यासम्बन्धिनां गन्धर्व-असुर-रक्षः-पिशाच-यातुधान-अप्सरो-प्रभृतीनां क्रमीणां विविधामयजनकत्वमाख्यातम्। यथा च भूतविद्यासम्बन्धि-रोगाणां साधनेषु होमादिविधयो वर्णितास्तथैवैषामपि प्रतिकाराय होमादिविधानं विस्तरेण प्रतिपादितम्।

क्रमयश्च मायाविनो विकृतरूपाः दुर्भगाः शीघ्रगामिनो मारकाः मनोविकार-कारकाश्च समाख्याताः। नैरुक्तेन च व्याख्यानेनैतेषां नाम्नामन्वर्थकता प्रकटीभूता, यथा च प्रागेव वर्णितमास्ते। तथा हि भूतविद्यायां क्रमीणां महत्त्वपूर्णं स्थानं मनीषिणो यदामनन्ति, तत्प्रामाण्यं वैदिकमन्त्रेभ्यः स्थापितमेवेति।

**गोपथब्राह्मणे-पिशाचवेदस्य नाम**—'ताभ्यः पञ्चवेदान्निरमयत्, सर्पवेदं पिशाच-वेदं, असुरवेदम्, इतिहासवेदं पुराणवेदमिति[3]।'

**शतपथब्राह्मणे 'असुरः'**—'........तस्यासुरा[4] विशस्त इम आसन् इति कुसी-दिन उपसमेता भवन्ति तानुपदिशति, मायावेदः सोऽयमिति कांचिन्मायां कुर्यादेव-मध्वर्युः सम्प्रेष्यति न प्रक्रामन् जुहोति।'

**शतपथब्राह्मणे 'महानागः'**—'श्वेतकेतुरारुणेयः कः स्विदेवापरीषु महानाग-मिवाभिससार दिदृक्षितारो य एवमेतत् प्रयाजानां यशोवेदितेति[5]।'

**ऐतरेयब्राह्मणे 'रक्षः' प्रयोगः**—'अस्ना रक्षः संसृजताम्[6]।' तत्रैव च 'आसुरी दीर्घजिह्वी' शब्देन नागवर्णनम्-'आसुरी वै दीर्घजिह्वी देवानां प्रातःसवनमवालेट्।'

**तैत्तिरीयारण्यके क्रमिवर्णनम्**

हतः क्रमीणां क्षुद्रको हता माता हतः पिता।
अथैषां भिन्नकः कुम्भो य एषां विषधानकः[7]॥

'गोभिलगृह्यसूत्रे ४।९।१९, खादि० गृ० सू० ४।४।३'। ऐतरेयब्राह्मणे ज्ञानेन्द्रिय-वर्णनम् (५।२२) शापादुन्मादादीनामुद्भवः। छान्दोग्ये हृदयनाडीवर्णनम् (८।१।६), निद्रास्वप्नोल्लेखः (४।३।३)। सामविधानब्राह्मणे-भूतापक्रान्तिः (२।२।२) निगदिता।

---

१. आरभस्वजातवेदोऽस्माकार्थाय जज्ञिषे।
दूतो नो अग्ने भूत्वा यातुधानान् विलापय॥ अथर्व० १।७।४६

२. त्वमग्ने यातुधानानुपबद्ध्वा इहावह।
अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु॥ अथर्व० १।७।७

३. गोपथब्रा० १।१।१०। ४. शत० ब्रा० १३।४।३।११। ५. तत्रैव ११।२।७।१२।
६. ऐत० ब्रा० ६।७। ७. तै० आ० ४।३६।१।

**सर्पभयपरिहारः**—शङ्खपुष्पीं[1] सर्वसुगन्धां चोत्थाप्य तदहस्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय चर्षणीघृतम् इति वर्गेणाभिजुहुयात् सहस्रकृत्वः शतवारम्। तं मणिं कण्ठेन शिरसा वा धारयतो सर्पभयं न भवति। कयानायां च सर्पसाम सदा प्रयुञ्जीत। स्वस्ति ह्यस्य भवति।

**अमानुषोपसर्गनिवृत्तिः**—अमानुषे भये कयानायास्तृतीयम् आवर्तयेत् नैनं हिंसन्ति[2]।

**पितृदर्शनार्थम्**—अयाचितमेतेन कल्पेन द्वितीयं प्रयुञ्जानः पितॄन् पश्यति[3]।

**गन्धर्वाप्सरसां दर्शनार्थम्**—संवत्सरमष्टमे काले भुञ्जानः पाणिभ्यां पात्रार्थं कुर्वाणो वृत्रस्य त्वा श्वसथादीषमाणाः (ग्राम० ८।१०।३२४।१-२) इत्येतयोः पूर्वं सदा सहस्रकृत्व आवर्तयन् गन्धर्वाप्सरसः पश्यति[4]।

**देवदर्शनार्थम्**—अयाचितमेतेन कल्पेन द्वितीयं प्रयुञ्जानो देवान् पश्यति[5]।

**सामविधानब्राह्मणे देवासुरगन्धर्वपितृरक्षोवर्णनम्**—तद्यो[6] क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति। योऽवरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसो यस्तृतीयस्तं पशवो यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते यः पञ्चमस्तमसुररक्षांसि योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगत्। तस्मादाहुः सामैवान्नमिति। साम ह्येषामुपजीवनं प्रायच्छत्।

**पितृप्रसादनप्रयोगः**—यद्वा[7] उ विश्पतिः सनादग्नेक्षन्नमीमदन्ते ह्यभि त्रिपृष्ठमक्रान्त्समुद्रः कनिक्रन्तीति द्वे एषा पित्र्यानाम संहितैतां प्रयुञ्जन् पितॄन् प्रीणाति।

**बृहदारण्यकोपनिषदि ग्रहातिग्रहवर्णनम्**—'अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः ? कत्यतिग्रहा इति ? अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ?

अथ हैनम्.........तत्राह (याज्ञवल्कः) प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते प्रकरणात्। वायुसहितः सः अपानेनेति गन्धेनेत्येतत्। अपानसचिवत्वादपानो गन्ध उच्यते। अपानोपहृतं हि गन्धं घ्राणेन सर्वो लोको जिघ्रति। तदेतदुच्यते अपानेन हि गन्धाञ्जिघ्रति (१) वाग् वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति (२) जिह्वा वै ग्रहः स जिह्वया हि रसान् विजानाति (३) चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा रूपाणि पश्यति (४) श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दान् श्रृणोति (५) मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते (६) हस्तो वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति (७) त्वक् वै ग्रहः स स्पर्शेनाति-

---

१. सामवि० ब्रा० २।३।३। २. तत्रैव २।४।५। ३. तत्रैव ३।७।४। ४. तत्रैव ३।७।५। ५. सामवि० ब्रा०। ६. तत्रैव १।१।८। ७. तत्रैव १।४।८।

ग्राहेण गृहीतस्त्वचा हि स्पर्शान् वेदयते इत्यष्टौ ग्रहा अष्टावतिग्रहाः (८)..........
वाग्[1] वै ग्रहः-वाचा हि अध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदया असत्यानृतासत्यवीभत्सादिवचनेषु व्यापृतया गृहीतो लोकोऽपहृतः तेन वाग् ग्रहः। स नाम्नातिग्राहेण गृहीतः स वागाख्यो ग्रहः, नाम्ना वक्तव्येन विषयेणातिग्रहेण अतिग्राहेणेति दैर्घ्यं छान्दसं नाम। वक्तव्यार्था हि वाक् तेन वक्तव्यार्थे तादर्थ्येन प्रयुक्ता वाक् तेन वशीकृता, तेन तत्कार्यमकृत्वा नैव तस्या मोक्षः। अतो नाम्नातिग्राहेण गृहीता वागित्युच्यते। वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थैर्युज्यते। समानमन्यत्। इत्येते त्वक्पर्यन्ता अष्टौ ग्रहाः स्पर्शपर्यन्ताश्चैतेऽष्टावतिग्रहा इति।,

एवञ्चासात्म्येन्द्रियार्थसंयोगस्य, प्रज्ञापराधस्य च नानाविधवेदनाप्रपञ्चकारणता स्पष्टीकृता। तान्येवेन्द्रियाणि मनसा सह विपथगानि यदा भवन्ति तदैव रुग्जालमापद्यते। 'प्रज्ञापराधाः विषमास्तथार्थाः'[2]।

**छान्दोग्योपनिषदि भूतविद्या एका विद्या समाम्नाता**—'स[3] होवाच-ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमम्। वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनम्। देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्याम्।'

**बृहदारण्यकोपनिषदि देवासुरवर्णनम्**—द्वया ह प्राजापत्या देवाश्चासुराश्च। ततः कानीनसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्द्धन्त ते ह देवा उचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामिति।[4]

भाष्यम्-द्वया हेति। हेति शब्द इतिहासद्योतकः। द्वया द्विप्रकाराः। किल। प्राजापत्याः प्रजापतेर्जीवात्मानः इन्द्रियाणि सन्तानाः सन्ति। तेन प्रजानामिन्द्रियाणां पतिः प्रजापतिः प्रजापतेरपत्यानि प्राजापत्याः। 'दित्यदित्यादित्यपत्युत्तर पदाण्यः'। इति ण्य प्रत्ययः। जीवात्मप्रज्वलितत्वे सति स्वस्वसत्तावत्त्वादिन्द्रियाणि जीवात्मनोऽपत्यानि निगद्यन्ते। ते के द्विप्रकारा इत्याह-देवा इति। देवाश्चासुराश्च। शास्त्रमननाभ्यासपरिमला ईश्वरीयविभूतिद्योतनात्मिका इन्द्रियप्रवृत्तयो देवाः। अविमृश्यकारिण्योऽज्ञानवहुला अन्येषामसुहरणरताः स्वार्थैकसाधिका इन्द्रियप्रवृत्तयोऽसुराः। इमे द्विविधाः प्रजापतेः सन्तानाः। ततस्तेषु देवाः कानीयसाः कनीयांस एव कानीयसाः अल्पीयांसः। विवेकजनितप्रवृत्तेरत्यन्तकनीयस्त्वात्। असुरा ज्यायसाः ज्यायांस एव ज्यायसाः वहुतराः। अविवेकप्रवृतिबाहुल्यात्। ते देवा असुराश्च। एषु लोकेषु ब्रह्मादिस्थावरान्तेषु विवेकाविवेकविशिष्टेषु लोकेषु निमित्तभूतेषु सत्सु अस्पर्धन्त स्पर्धां परस्पराभिभवेच्छां कृतवन्तः। ब्रह्मादिस्थावरान्तानि यान्यसंख्येयानि इन्द्रियाणां भोग्यानि शरीराणि

---

१. बृह० उप० ३।२।     २. च० सं० शा० २।
३. छा० उ० ७।१।२।     ४. बृहदा० उप० १।३।१।

सन्ति तान्यस्माकं भवन्तु, अस्माद्धेतोरुभये प्राजापत्या योद्धुमारेभिरे । ततोऽसुराणां बलाधिक्यमवलोक्य ते देवा क्वचित्समवेता भूत्वा परस्परमूचुः । हन्त यदि सर्वेषामत्र सम्मतिः स्यात्तर्हि यज्ञे सर्वसम्मत्त्या प्रारिप्स्यमाने ज्योतिष्टोमाख्ये यज्ञे उद्गीथेनोद्गीथकर्माश्रयेण असुरान् अस्मद्विरुद्धान् दुष्टप्रवृत्तीन् सहोदरानेव अत्ययामातिगच्छामः । दुष्टस्वभावं विहाय स्वं देवस्वभावं प्रतिपद्यामहै इत्युक्तवन्तः । अयमाशयः हे भ्रातरः ! कोऽपि महान् यज्ञः प्रारब्धव्यः । तत्र सर्वगुणसम्पन्नः कोप्युद्गाता नियोजयितव्यः । सोऽस्माकं कल्याणं गास्यति । तेन वयं विजयिनो भविष्यामः । अन्यथाऽस्माकं विपक्षा वर्धिष्यन्ते । स्वत्वं गृहीत्वा अस्मान् निष्कासयिष्यन्ति । विपत्तौ पत्स्यामः । अतो नोदासीनैर्भाव्यमिदानीम् ।[१]

**कठोपनिषदि भूतविद्या**—तत्र च प्रतिपादितं यत् मनुजः[२] यदि मानवशरीरं समवाप्य शरीरनाशात् प्रागेव सर्वशक्तिमन्तं परमेश्वरं बोद्धुं समर्थो भवति, तदा तस्य मानवजन्मसफलं भवति । स च प्रलयोदयाभ्यां विमुच्यते । अन्यथा तु कल्पान्तरेषु विभिन्नेषु लोकेषु विभिन्नयोनिषु जन्म गृह्णाति । कर्मानुसारञ्च फलान्यवचिनोति । एतद्बुद्ध्वा विद्वान्सो भवन्ति मुक्ता मानसविकारैरिति ।

**ईशावास्ये भूतविद्या**—ये जनाः विषयेषु लीनाः कामवशात्तेष्वेव रमन्ते, नवाऽऽत्मज्ञानाय प्रयतन्ते, भोगेषु लिप्तास्ते किलात्महन्तारः विविधक्लेशक्लिष्टासु :तास्वेवासुरीषु योनिषु जायन्ते' ।[३]

ये हि कामक्रोधलोभमोहमदातुरा एकमेव परमात्मानं जीवात्मभेदेन नानादेहधरं न जानते, न च परस्परमेकात्मतामनुभवन्ति, न च दीनेष्वार्तेषु करुणां विदधति, नैव व्याधितानां व्याधिमोक्षणे प्रयतन्ते, नोपकुर्वन्ति कस्मैचन दुःखिताय, ते हि पुरुषार्थपथभ्रान्ताः कदाचाराः हीनयोनिषु जायन्तेऽभिभूयन्ते च पौनःपुन्येन जन्ममरणक्लेशेन विवधाभिश्चाधिव्याधिभिः । आसुरीसम्पन्निमग्नाः नानाजन्मसु प्रलयोदयाभ्यामाबध्यन्ते । ते च द्विषन्तो क्रूराः नराधमा अधमासु आसुरीष्वेव योनिषु बम्भ्राम्यन्ते । ते च विभ्रान्तचित्ता मोहावृत्ता कामभोगेषु सक्ता अशुचिनिरयगामिनो भवन्ति ।[४]

**मुण्डकोपनिषदि भूतविद्या**—

'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ।।
अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते ।।'[५]

---

१. बृ० उ० १।३।१। भाष्यम् ।   २. कठोप० २।३।४ ।
३. ईशावास० मन्त्र ३ ।   ४. तत्रैव मन्त्र १२ ।
५. मु० उ० अख० २।८-९

**श्रीमद्भगवद्गीतायां भूतविद्या**—अज्ञाः मां मानुषीं तनुमाश्रितं जानन्ति, ये च निष्फलाशाः व्यर्थकर्माणः ज्ञानदुर्विदग्धा उद्भ्रान्तचेतसस्ते मां राक्षसीमासुरीं तनुमाश्रितमवगच्छन्ति। ये च महात्मानोऽनन्यचेतसस्ते मां दैवीं प्रकृतिमाश्रितं भजन्ति[1]। 'गीतायां' विराटस्वरूपवर्णने च देवासुरादीनामुल्लेखः। (द्रष्टव्यम् अ० ११।१५-३६) अग्रे च द्विविधं भूतसर्गमाख्यतम् दैवासुरभेदेन (१६।१-३)।

**ब्राह्मणग्रन्थेषु भूतविद्या**—अत्र च वर्णितं, यत् अग्निः, सुवर्णः, सूर्यः, अपामार्गः, वेदविदो विद्वान्सः, साममन्त्रा, आपश्च रोगोत्पादककीटाणूनामपहन्तारः[2]। साम्प्रतिके च काले इमानिद्रव्याणि कृमिनाशनार्थमुपयुज्यन्ते। यथाचायुर्वेदवाङ्मये विशदमाख्यातम्। प्राचीनकालादेव हिरण्यमयकर्णाभरणादिधारणस्य प्रथा लोके प्रचलिता वर्तते। मन्ये, यत् कृमिनाशकत्वेन हिरण्यधारणस्य प्रथाऽऽविर्भूता। याज्ञिकाश्च पूर्वोक्तप्रकारेण जानपदानामारोग्यरक्षणे प्रयतन्तेस्म। तत्र च एवञ्चोपदेशाः सन्ति, यैर्मानवाः सदाचारपरायणाः सन्तो यज्ञादिकं कर्म सम्पाद्य दीर्घायुष्ट्वमाप्नुयुः। एवञ्चानृतस्य, मांसभक्षणस्य, सुरापानस्य, रजस्वलाऽभिगमनस्य च पापमयत्वमापादितमभिमानस्य च गर्हणं निर्दिष्टमास्ते[3]।

**कौशिकसूत्रे भूतविद्या**—अत्र गन्धर्वराक्षसाप्सरोभूतग्रहादिषु भैषज्यं निर्दिष्टम्। लौकिकशापे, वैदिकशापे, स्त्रीणामाक्रोशे च वैशद्येन भैषज्यमाख्यातम्। क्षेत्रियस्य भैषज्यं, ब्रह्मग्रहे भैषज्यञ्च वर्णितम्। स्कन्दविषभये च हरिद्रादीनां प्रयोगो विहितः[4]। एवञ्च ब्राह्मणग्रन्थेषु विस्तरेण भूतविद्याविषयाः समुपलभ्यन्ते। रक्षोभैषज्यं[5], सर्वभूतग्रहभैषज्यं[6], राक्षसभैषज्यं[7], रक्षोग्रहभैषज्यं[8], च वर्णितमुपलभ्यते।

**बोधायनधर्मसूत्रे**[9]"—मनसः मनोविकाराणाञ्च वर्णनम्। "कामेन कृतं कामः करोति, कामायेवेदं सर्वं यो मा कारयति तस्मै स्वाहा। मनसा कृतं मनः करोति मनस एवेदं सर्वं यो मा कारयति तस्मै स्वाहा।"

**आश्वलायनश्रौतसूत्रे**—पितृगन्धर्वाप्सरोसर्परक्षोऽसुरतार्क्ष्यनामानि स्पष्टतया प्रसङ्गादुल्लिखितानि[10]।

---

१. गीता ९।११-१३।

२. श० प० ब्रा० १।२।१।६, १४।१।३।२९, १।३।४।८, ७।४।१।३७, १।१।४।६, ४।४।५।६, तै० ब्रा० ३।२।३।१२।

३. श० प० ब्रा० ३।१।३।१८, २।२।२।१९, तै० सं २।५।५।३२. मैत्रा० सं० २।४।२, काठकसं० १३।६, श० प० ब्रा० ५।१।१।१।

४. कौ० सू० ८।२९-३२, द्रष्टव्यम् ११।७, २५।१, ६।८५, १०९।१,१२७।१, तथा ११।८, ११।९, ४।६ १-४।

५. कौ० सू० ४।२०।१। ६. तदैव ४।३७।१। ७. तदैव ६।२।२।

८. तदैव ६।३४।१, ६।५२।१। ९. बो० ध०सू० ३।४।४। १०. आश्व० श्रौ० सू० १०।७।

आपस्तम्बीये गृह्यसूत्रे—रुग्णस्त्रियः पद्मपत्रादिभिरभिमन्त्रणम्। अर्धशिरःपीडायाः कृमिहेतुत्वनिर्देशः[1]। कृमिवर्णनञ्च समुपलभ्यते।

श्वग्रहे[2]—येन गृहीतः कुमारः श्वेव नदति, श्ववद्वा चेष्टते स श्वग्रहः। यदा पिशाचिशुना वा दष्टो भवेत्तदा कुमारस्य रोगनिवृत्तये तं मत्स्यग्रहणजालेनाच्छाद्य, द्वारातिरिक्तेन केनापि गवाक्षादेमार्गेण कुमारं सभागृहमानीय घण्टां निनादयन् मन्त्रैः जलप्रोक्षणं त्रिसन्ध्यं कारयेत्, तेन च कुमारस्य रोगो निवर्तते, इत्याख्यातम्।

शंखग्रहः[3]—शंखो नाम ग्रहः कुमाराणां भयङ्करः, येन गृहीतः शंखवन्नदतीति, तेन च गृहीतं शिरसि त्रिसन्ध्यमभिषिञ्चेत्।

बालकस्य क्षेत्रियरोगपरिहारार्थं[4] कांस्यपात्रे विषमपरिमाणं मधुघृतं संसृज्य कुमारं प्राशयेत्।

गौतमधर्मसूत्रे—विवाहप्रकरणे दैव-गान्धर्व-आसुर-राक्षस-पैशाचविवाहस्वरूपाणि प्रदर्शितानि।

आश्वलायनीयगृह्यसूत्रे—नागवर्णनं समुपलभ्यते[5]। आश्वलायनगृह्यकारिकायाञ्चभूतयज्ञ-पितृयज्ञादीनां वर्णनं दृश्यते।

शाङ्खायनगृह्यसूत्रे—आग्रहायणयज्ञे भोज्यवस्तुस्थितभूतानां निवर्तनम् सर्वरोगनिवर्तनम्[6] वर्णितम्।

गोभिलीयगृह्यसूत्रे—रोगनिवर्तकमन्त्रोल्लेखः, सर्पदंशोपायश्च[7] समुपलभ्यते।

खादिरगृह्यसूत्रे—कृमिवर्णनम्, सर्पदंशोपायः[8]।

मानवगृह्यसूत्रे—"अथ देवानामाराधनम्। विमुखः श्येनो बको यज्ञः कलहो भीरुर्विनायकः.......... ।। एते ते देवाः प्रीयन्तां प्रीता मां प्रीणयन्तु तृप्ता मां तर्पयन्त्विति[9]।"

हिरण्यकेशिगृह्यसूत्रे भूतविद्या—क्रूरभूताक्रमणजन्यबालकासे बालकं गृहाच्छादनछिद्रादुपरिनिःसार्य पुनरलिन्दमानीयते। तत्र चालिन्दे भूतानां कीलनार्थमभिचारकर्मानुष्ठीयते इत्याख्यातम्[10]।

एवञ्च वैदिकवाङ्मये भूतविद्यासम्बन्धिनो विषयाः वैशद्येन वर्णिता सन्तीति।

---

१. आप० गृ० सू० १५।१६।५।
२. तदैव ७।१८।१।
३. आप० गृ० सू० ७।१८।१।
४. तदैव ६।१५।४।
५. आश्व० गृ० सू० ३।४।१।
६. शां० गृ० सू० ५।६।१-२।
७. गो० गृ० सू० ४।६।२, ४।९।१६।
८. खा० गृ० सू० ४।४।३।१।
९. मा० गृ० सू० २।१४।२९।
१०. हिरण्यकेशि गृ० सू० २।७।२।

## आयुर्वेदे भूतविद्या

**प्रास्ताविकम्**—इदं हि भूतविद्याङ्गं महन्महनीयमपि सम्प्रति चिराय विलुप्त-प्रायमेवालोक्यते। तथा चाधुना भूतविद्यातन्त्राणां नामान्यपि न श्रूयन्ते। तथापि समुपलभ्यमानग्रन्थेषु 'चरकसुश्रुताख्यौ' द्वावेवार्षसंहिताग्रन्थौ प्राधान्येन प्रथितौ स्तः। अपरश्च वाग्भटाख्यो ग्रन्थ इति त्रयं संहितात्रयी पदमर्हति। तत्र प्राधान्येन भूतविद्याबीजं निहितमास्ते। तद्यथा—चरके उन्मादचिकित्सिते,[1] सुश्रुते अमानुष-प्रतिषेधाध्याये,[2] वाग्भटे भूतविज्ञानीय-भूतप्रतिषेधाख्याध्याययोः (उ० त० अ० ४, ५)। किञ्च सुश्रुतवाग्भटयोः पृथग्भूतविद्याभिधानेऽपि चरकेण उन्मादा-धिकार एवान्तर्भावो कृतस्तस्या विद्याया इत्यवसीयते। अथ च तत्तत्प्रसङ्गव्या-ख्याने तद्ग्रन्थटीकाकर्तृभिरपि क्वचिदपि कस्यापि भूतविद्यातन्त्रस्य प्रमाणानि नोद्धृतानि। तेन च तर्कयामो, यद् बहोः कालाद् भूतविद्यातन्त्राणि विलुप्ता-नीति।

अनुपलब्धेष्वपि भूतविद्यातन्त्रेषु सर्वथा विलोप एवासीद् भूतविद्याया इति नाशङ्कनीयम्। यतो हि वैदिककाले-उत्तरकाले चाग्नि-गरुड-ब्रह्माण्ड-विष्णुधर्मोत्तर-पुराणादिषु भूतविद्याविषयाणां सन्निवेशः कृत आस्ते। विभिन्नेषु चायुर्वेदाङ्गेषु भूतविद्याङ्गस्य समावेशः उपलभ्यते। तच्च सर्वं वक्ष्यमाणेषु संहिता-ग्रन्थसन्दर्भेषु स्फुटीकरिष्यते। चरकाचार्यानुसृतमार्गेण तु मानसरोगाधिकार एव भूतविद्याया अन्तर्भाव इत्यवगम्यते। तथापि 'चरके' विविधेषु प्रसङ्गेषु भूतविद्यायास्तथा समुपवर्णनं कृतमवलोक्यते, येन महर्षिणा चरकेणास्या भूत-विद्याया गौरवपूर्णमास्पदमङ्गीकृतमिति मन्यतेऽस्माभिः। उदाहरणानि तु यथा-स्थलं प्रदर्शयिष्यन्ते।

एवञ्चामुनाऽऽचार्यवर्येण स्व-संहितायां विविधेषु स्थलेषु भूतविद्याविषय-सन्दर्भा निवेशितास्ते चात्र नातिसंक्षेपविस्तरेण समुपनिबद्ध्यन्ते।

## चरकसंहितायां भूतविद्या

**देवताः**—[3]अग्निवेश-भेल-जतूकर्णादिषु बुद्धि-सिद्धि-स्मृति-मेधा-धृति-कीर्ति-क्षमा-दयाः ज्ञानदेवताः विविशुरित्याख्यातम्।

**सत्त्वात्मसमुल्लेखः**—भूतविद्यायां प्राधान्येन सत्त्वात्मानौ परिचिन्तिनीयौ स्तस्तौ चात्र लोकस्याधारभूते त्रिदण्डे[4] प्रमुखौ निगदितौ। तत्त्वञ्च[5] व्याधीनां सुखानाञ्चाश्रयं मतम्।

---

१. च० चि० अ० ९। २. सु० सं० उ० त० अ० ६। ३. च० सू० १।३९। ४. तत्रैव १।४६। ५. तत्रैव १।५५।

**मानसदोषौ**—भूतविद्यासम्बद्धेष्वामयेषु मनस एव प्रधाना भूमिका भवति, तस्मिंश्च रजस्तमोऽभिभूते भूतविद्याव्याधयः समापतन्ति। तथा च 'मानसः पुनरुद्दिष्टो रजश्च तम एव च[१]।'

**मानसरोगचिकित्सासूत्रम्** -- [२]ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिर्मनोनियमनेन मानसामयः शाम्यति।

**खरमूत्रम्**—[३]अपस्मारोन्मादग्रहविनाशकमुक्तम्।

**अपस्मारे मूर्च्छायाञ्च**—नस्य प्रयोग आख्यातः[४]।

**धर्मसम्मतवृत्तिसेवनम्**—[५]धर्माविरोधिनः वृत्त्युपायाः, शान्तिरध्ययनञ्च सुखसाधनमाख्यातम्।

**अप्रशस्तमनोवाक्कायकर्मवेगधारणप्रसङ्गे**—[६]लोभ-शोक-क्रोध-मान-परुषवचन - सूचकानृत-स्तेयहिंसादिवेगानामपि निग्रह उपदिष्टः।

**प्रज्ञापराधजाः रोगाः**—ये[७] भूतविषवाय्वग्निसम्प्रहारादिसंभवा ईर्ष्याद्वेषादयः मनोविकारास्ते किल सर्व एव प्रज्ञापराधजा उक्ताः।

**मानसरोगप्रतिघातहेतवः**—[८]प्रज्ञापराधत्यागः, इन्द्रियाणां स्वविषयेऽलम्पटत्वं सांसारिकभावानां विनश्वरस्वभावाद्यनुस्मरणम्, देशकालात्मशक्तिज्ञानं, [९]इन्द्रियोपक्रमणीयोक्त सद्वृत्तानुवर्तनञ्च मानसागन्तुकव्याधिप्रतिघाते कारणम्।

**परलोकैषणा**—[१०]परलोकोपकारकस्य धर्मस्यैषणावर्णने सुदृढं पुनर्भवास्तित्वपक्षः प्रतिपादितो वर्तते विस्तरेण [११]तत्र च विधिविषयप्रमाणगम्यस्य भावरूपस्य, निषेधविषयप्रमाणगम्यस्य अभावरूपस्य च यथास्वरूपदर्शने चतुर्विधा परीक्षा निर्दिष्टा। वैशद्येन च तासां निरूपणमाख्यातमास्ते। अन्तरञ्च [१२]परलोकोपयुक्तधर्मसाधनानि समाख्यातानि।

**प्रज्ञापराधः**—[१३]वाङ्मनः-शरीरः-प्रवृत्तिः कर्म उच्यते। कर्मणश्चायोगातियोगमिथ्यायोगरूपत्रिविधविकल्पं त्रिविधमेव कर्म प्रज्ञापराध इति व्यवस्येत्।

**आगन्तुर्मानसामयश्च**—[१४]भूतविषादिसमुत्थ आगन्तुः, इष्टलाभात् कामहर्षादयोऽनिष्टलाभाच्च शोकादयः मानसविकाराः, इत्युभावपि भूतविद्यायामापततः।

---

१. तत्रैव १।५७। २. तत्रैव १।५८। ३. तत्रैव १।१०५।
४. तत्रैव २।६। ५. ५।१०४। ६. च०सू. २।२६,२९।
७. तत्रैव ७।५१-५२। ८. तत्रैव ७।५३-६०। ९. तत्रैव ८।१७-२८।
१०. तत्रैव ११।७-१६। ११. तत्रैव ११।१७-३२। १२. तत्रैव ११।३३।
१३. तत्रैव ११।३९-४१। १४. च० सू० ११।४५।

**मानसरोगस्य साधारणी चिकित्सा**—[1]धर्मार्थकामान्वेक्षणं, मानसव्याधिभेषज-चिकित्सकसङ्गतिः, मनोबुद्धयात्मनां विज्ञानं, आत्मदेशकालबलशक्तिज्ञानं हितसेवनञ्च विधेयम् ।

**त्रिविधौषधम्**—[2]अत्र त्रितयमपि भेषजं भूतविद्यायामुपशेते, विशेषतश्च दैवव्यपाश्रयं सत्त्वावजयश्चेतुभौ ।

**वमनपूर्वंकर्मणि देवाद्यर्चनम्**—[3]देवताग्निद्विजगुरुवृद्धवैद्यानर्चयित्वा, स्वस्ति-वाचनं कारयित्वा प्रशस्ततिथिकरणमुहूर्ते मदनफलकषायमात्रापानोपदेशः कृतः ।

**अष्टोदरीयाध्याये[4] भूतविद्या**—तत्र हि पञ्चोन्मादाः, चत्वारोऽपस्माराः, चत्वारो मदाः, चत्वारो मूर्च्छायाः भेदाः, एकः संन्यासः, एको महागदः, विंशतिः क्रिमिजातयश्च वर्णिताः ।

**महारोगाध्याये भूतविद्या**—[5]'मुखानि तु खल्वागन्तोः नखदशनपतनाभिचारा-भिशापाभिषङ्गाभिघातवधबन्धपीडनरज्जुदहनशास्त्राशनिभूतोपसर्गादीनि ।'

**विधिशोणितीये**—[6]मदमूर्च्छासन्यानां निदानलक्षणचिकित्सितानि वर्णितानि ।

मदमूर्च्छायसंन्यासहेतुलक्षणभेषजम् ।
विधिशोणितकेऽध्याये सर्वमेतत्प्रकाशितम् ।।

**विविधाशितपीतीये[7]**—रोगाणां रजस्तमोमूलकत्वमुद्भाव्य तन्निरसनाय वैशद्येन मार्गनिर्देशनं कृतम् ।

**दशप्राणायतनीये**—प्राणाभिसरवैद्यलक्षणं विशिष्टं पदमादधाति, तच्च-भूतविद्याज्ञानाप्लावितमेव दृश्यते[8] ।

**अर्थे दशमलामूलीये**—हृदिस्थस्य मनसः परिपालननिर्देशः, सेव्यप्रस्तावे-प्राणवर्द्धनाद्युत्कृष्टानि तत्त्वानि च प्रतिपादितानि[9] ।

अथ च भूतविद्या एकमङ्गं परिगणितम्[10] । आयुर्वेदश्च एका[11] विद्या समाख्याता 'तत्रायुर्वेदः शाखाविद्या सूत्रं शास्त्रं लक्षणं तन्त्रमित्यनर्थान्तरम्' ।

**अभिचाराज्ज्वरोत्पत्तिः**—आगन्तुज्वरस्य अभिघाताभिषङ्गाभिचाराभिशा-पेभ्य[12] उत्पत्तिः अभिचाराभिशापजयोः सान्निपातिकत्वमाख्यातम् ।

**रुद्रकोपाज्ज्वरः**—ज्वरस्य[13] माहेश्वरकोपप्रभवत्वम्, देहेन्द्रियमनस्तापकर-त्वम्, प्रज्ञाबलवर्णहर्षोत्साहहरत्वं महामोहत्वञ्च वर्णितम् ।

---

१. च० सू० ११।४६-४७ । २. तत्रैव ११।५४ । ३. तत्रैव १५।९ । ४. १९।३, ९ ।
५. तत्रैव २०।५ । ६. तत्रैव २४।२५-५८ । ७. च० सू० २८।४८-५५ ।
८. तत्रैव २९।३ । ९. तत्रैव ३०।१३-१५ । १०. तत्रैव ३०।२८ ।
११. तत्रैव ३०।३१ । १२. च० नि० १।३४-३५ । १३. च० नि० १।४० ।

**उन्मादनिदानम्**—'प्रज्ञापराधाद्धययं[1] देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचगुरुवृद्धसिद्धाचार्यपूज्यानवमत्याहितान्याचरति, अन्यद्वा किंचिदेवंविधं कर्माप्रशस्तमारभते। तस्मादात्मनोपहतमुपध्नन्तो देवादयः कुर्वन्त्युन्मत्तम्' इत्यादि सविस्तरं वर्णितम्।

**अपस्मारनिदाने च**—निदानकथनप्रस्तावे 'दोषाः प्रकुपिताः रजस्तमोभ्यामुपहतचेतसाम्[2] अन्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसृत्य तिष्ठन्ति तथेन्द्रियायतनानि च। तत्र तत्र चावस्थिताः सन्तो यदा हृदयमिन्द्रियायतनानि चेरिताः कामक्रोध-लोभ-हर्ष-शोक-चिन्तोद्वेगादिभिः सहसाऽभिपूरयन्ति, तदा जन्तुरपस्मरति।'

'अपस्मारं[3] पुनः स्मृतिबुद्धिसत्त्वसंप्लवाद्बीभत्सचेष्टमावस्थिकं तमः प्रवेशमाचक्षते'। इत्युक्त्या भूतविद्याविषयताऽस्य प्रकटीकृता विद्यते।

**मन्त्रप्रयोगः**—मान्त्रिकी[4] च चिकित्साऽऽगन्तुसंयोगे हितत्वेनोक्ता।

**रसविमाने**—आहारविधिविधानप्रसङ्गे[5] च भोज्यसाद्गुण्योपलब्धये मनसः सौमनस्यस्य महत्त्वमाख्यातम्।

**त्रिविधकुक्षीयाध्याये**—मनोविकाराणामामप्रकोपकत्वं[6] कथितम्—'काम-क्रोध-लोभ-मोहेर्ष्या-शोक-मनोद्वेग-भयोपतप्तमनसा यदन्नपानमुपयुज्यते, तदप्याममेव प्रदूषयति।'

**जनपदोद्ध्वंसनीये**—अहितदेशवर्णने[7] बहुसन्दर्भाः भूतविद्यासम्बन्धिनोऽवलोक्यन्ते। आयुषः परिपालनोपदेशे—

> सत्यं[8], भूते दया, दानं, वलयो देवतार्चनम्।
> सद्वृत्तस्यानुवृत्तिश्च, प्रशमो गुप्तिरात्मनः[9]॥

इत्यादिभिश्चतुर्भिः श्लोकैर्दैवव्यपाश्रयचिकित्सा, सत्त्वावजयचिकित्सा चोपवर्णिता।

वाय्वादीनाञ्चतुर्णां[10] जनपदोद्ध्वंसकराणां भावानां वैगुण्ये चाधर्मस्य कारणता निर्दशिता। अधर्मसंवर्धनहेतुषु च रक्षोगणस्य अभिशापस्य पूज्यतिरस्कारस्य च कारणत्वं प्रतिपादितम्। अभिद्रोहानृतवचन[11]-काम-क्रोध-मान-द्वेष-चिन्तादीनाञ्चाधर्मवर्धकत्वमुपवर्णितम्।

---

१. तत्रैव ७।१३। २. च० नि० ८।५। ३. तत्रैव ८।५। ४. तत्रैव ८।१४। ५. च० वि० १।३६। ६. च० वि० २।१०–११ ७. तत्रैव ३।६ द्रष्टव्यम्। ८. तत्रैव ३।१६–२२ ९. गुप्तिः मन्त्रादिना रक्षाइति चक्रपाणिः। १०. च० वि ३।२४-२६। ११. तत्रैव ३।३०।

**रोगानीकविमाने भूतविद्या**[१]—..............'रजस्तमश्च मानसौ दोषौ। तयोर्विकाराः काम-क्रोध-लोभ-मोहेर्ष्या-मान-मद-शोक-चिन्तोद्वेग-भय-हर्षादयः।'. अग्रे च—'नियतस्त्वनुबन्धो[२] रजस्तमसोः परस्परम् न ह्यरजस्कं तमः प्रवर्तते।

**व्याधितरूपीयेविमाने**—'इह[३] खलु विंशतिविधाः क्रिमयः' इत्यारभ्य अध्यायान्तं यावत् क्रिमिवर्णनम्।

सर्वामयानाञ्च त्रिविधो हेतुः, त्रिविधा च शान्तिराख्याता—तथा हि—'प्रज्ञापराधो विषमास्तथार्थाः हेतुस्तृतीयः परिणामकालः[४], सर्वामयानां त्रिविधा च शान्तिर्ज्ञानार्थकालाः समयोगमुक्ताः।'

**गर्भावक्रान्तौ च**—... .........'जीवोऽवक्रामति[५] सत्त्वसम्प्रयोगात्तदा गर्भोऽभिनिवर्तते।' इत्यादि च भूतविद्यासम्बद्धमेव।

**मूढगर्भचिकित्सायां भूतविद्या**—.............'मन्त्रादिकमथर्ववेदविहितमित्येके[६]' तेन च कठिनायां परिस्थितौ भूतविद्याया संकटनिवारणमुक्तमास्ते।

**सूतिकायां भूतविद्या**—सूतिकागारनिर्माणे[७] ....... .....'यानि चान्यान्यथर्ववेदविदोब्राह्मणाः शंसेयुः' इति समादिष्टम्।

सूतिकागारव्यवस्थायाञ्च—'ब्राह्मणाश्चाथर्वविदः, यच्चान्यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत् कार्यम्।'

**सूतिकागृहे गर्भिणीप्रवेशकाले**—स्वस्तिवाचनं 'पुण्याहवाचनञ्च समुद्दिष्टम्।

**प्रसववेदनायाम्**—[९]'कर्णे चास्या मन्त्रमिममनुकूला स्त्री जपेत्—क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः सगर्भां त्वां सदा पान्तु वैशल्यं च दिशन्तु ते।'

**जातकर्मणि भूतविद्या**—[१०]'अतोऽनन्तरं जातकर्म कुमारस्य कार्यम्। तथा मधुसर्पिषी मन्त्रोपमन्त्रिते यथाम्नायं प्रथमं प्राशितुं दद्यात्।'

अग्रे च सूतिकागारस्य रक्षाविधानमुक्तम्—'रक्षोघ्नसमाख्यातानां...... ब्राह्मणश्चाथर्ववेदवित् सततमुभयकालं जुहुयात् स्वस्त्ययनार्थं कुमारस्य तथा सूतिकायाः इत्येतद् रक्षाविधानमुक्तम्।'

[११]**नामकरणे**—[१२]कुमारागारविधौ च भूतविद्यासम्बन्धिकर्मनिर्देशो दृश्यते।

**मणिधारणम्**—[१३]'मणयश्च धारणीयाः।'

**बालकस्य त्रासननिषेधः**—'[१४]राक्षस-पिशाच-पूतनाद्यानां नामानि चाह्वयता कुमारस्य वित्रासनार्थं नामग्रहणं न कार्यं स्यात्।'

---

१. तत्रैव ६।५। २. तत्रैव ६।९। ३. तत्रैव ७। ४. च० शा० २।४०।
५. च० शा० ३।५। ६. तत्रैव ८।३२। ७. तत्रैव ८।३५-३६।
८. च० शा० ८।३७। ९. तत्रैव ८।४२-४३। १०. तत्रैव ८।५०-५१।
११. तत्रैव ८।५४। १२. तत्रैव ८।६३। १३. तत्रैव ८।६६। १४. तत्रैव ८।[illegible]।

**अरिष्टविज्ञाने भूतविद्या**--'प्रेतलिङ्गानुरूपाम् ।' 'ग्लानिरर्धे तथा हर्षो मुखार्धे प्रेतलक्षणम्[१]', 'सूर्याचन्द्रमसोर्ग्रहम्[२] ।'

प्रेतैः सह पिवेन्मद्यं स्वप्ने यः कृष्यते शुना ।
सुघोरं ज्वरमासाद्य जीवितं स विमुञ्चति[३] ॥

'नृत्यन् रक्षोगणैः सार्धं'[४]
'प्रेतो हरति यं नरम्', 'मृत्युरपस्मारपुरःसरः'
'रक्षः प्रेतपिशाचस्त्रीचाण्डालद्रविडान्धकैः'
'स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम्'[५]

इत्येतैः सन्दर्भैश्चरके भूतविद्याया यथास्थानं प्राचुर्येण प्रयोगः परिलक्ष्यते ।

[६]**आचाररसायनप्रसङ्गे**—च मानसदोषदूरीकरणपूर्वकमेत्र रसायसेवनं रसायन-गुणैर्योजयत्युपयोक्तारमिति । तथा च—

यथास्थूलमनिर्वाह्य दोषाञ्छारीरमानसान् ।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन ॥ इत्युक्तम्

**हरीतकीरसायने**[७]—

'गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैति चाक्षरम् ।'
इति तत्फलमुक्तम् ।

कतिचन[८] च मेध्यरसायनानि समाख्यातानि—'मेध्यानि चैतानि रसायनानि' इत्यादिना पदेन ज्वरचिकित्सिते च देवाद्यर्चनं जपहोमादिकमाम्नातम् ।

'सोमं[९] सानुचरंदेवं समातृगणमीश्वरम् ।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥
विष्णुं सहस्रमूर्धानम् चराचरपतिं विभुम् ।
स्तुवन् नामसहस्रेण ज्वरान् सर्वानपोहति ॥

तथा च ब्रह्मेन्द्राग्निगंगापूजनम्, वेदश्रवण-जप-होम-मणिभेषजधारणादि-कञ्च ज्वरप्रशमनमुक्तम् ।

[१०]**कुष्ठचिकित्सिते**---बाहुल्येन कृमिनाशनभेषजविधानं विहितमास्ते । खदिरघृतं, निम्बघृतं, दार्वीघृतं, पटोलघृतं, महातिक्तकघृतं, सर्वमेतत् कृमिघ्नद्रव्यसम्बलित-मवलोक्यते ।

---

१. च० इ० १।२५ २. च० इ० ४।१४ । ३, च० इ० ५।१६ ।
४. तत्रैव ५।२१, २३, २६ । ५. तत्रैव १२।८४ । ६. च० चि० १, पाद ४।३६ ।
७. तत्रैव १, पा० १।८० ८. तत्रैव १, पा० ३।३१ । ९. च० चि० ३।३१०, ३१२ ।
१०. तत्रैव अ० ७ ।

कुष्ठनिदाने--'विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम् ।'

तथा च—वचांस्यतथ्यानि कृतघ्नभावो निन्दा सुराणां गुरुधर्षणञ्च ।
पापक्रियापूर्वकृतञ्च कर्म हेतुर्किलासस्य विरोधि चान्नम्[1] ।।

इति स्पष्टमाख्यातमस्य रोगस्य भूतविद्यावैषयिकत्वम् ।

राजयक्ष्मणः--क्रोधसम्भवत्वं निगदितमास्ते--

दुहितॄणामसंभोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निःश्वासरूपेण मूर्तिमान् निःसृतो मुखात्[2] ।।

[3]ईर्ष्योत्कण्ठाक्रोधशोकादीनाञ्च शुक्रौजःक्षयजयक्ष्मणिकारणत्वं निगदितम्। यक्ष्मचिकित्सिते[4] च--मनसः सौमनस्यजननं बहुविधं साधनं समुपदिष्टम् दैवव्यपाश्रयचिकित्सा च निर्दिष्टा । वेदविहितस्य यागस्य च निर्देशः कृतो विद्यते ।

[5]उन्मादचिकित्सिते च—निजानामागन्तूनाञ्चोन्मादानां विस्तरेण निरूपणमुपलभ्यते अपस्माररोगस्य[6] तत्रैव अतत्त्वाभिनिवेशरोगस्य च विशदं वर्णनं सहेतुलक्षणचिकित्सितमवाप्यते ।

[7]मदात्ययामयस्य च--भेदादिकं प्रदर्श्य मानसी चिकित्सासरणिर्निदर्शिता ।

कल्पस्थाने--वामनीयद्रव्यपानकाले कीर्तनीयस्य मन्त्रस्य समुल्लेखः समुपलभ्यते-तत्र मन्त्रः--

'ॐ ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु मे ।।
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु[8] ते ।।

पूर्वोक्तसन्दर्भैश्च चरकसंहितायां भूतविद्याविषयसंकलनस्य नातिसंक्षेपविस्तरेण निदर्शनमुपस्थापितम् । अग्रे च यथास्थलं यथास्वविषयाः विवेचयिष्यन्ते ।

## सुश्रुतसंहितायां भूतविद्या

सुश्रुतसंहितायामायुर्वेदाङ्गत्वेन 'भूतविद्यायाः [9]समुल्लेखः कृत आस्ते । उन्मादप्रकाराः, ग्रहोपद्रवाः चिकित्साविषयाश्च वर्णिताः[10] । सूत्रस्थानस्य युक्तसेनीयाध्याये--राजरक्षणे व्यापारं दर्शयन्नाह—

---

१. तत्रैव ७।१७७ । २. तत्रैव ८।५ । ३. तत्रैव ८।२४ । ४. तत्रैव ८।१७६-१८९ । ५. च चि० ९ । ६. तत्रैव १० । ७. तत्रैव २४ । ८. च० क० १।१४ । ९. सु० सं० सू० अ० १ । १०. तदेव सु० सू० ३४।७ ।

[१]दोषागन्तुनिमित्तेभ्यो नित्यं मन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ।।

छायाविप्रतिपत्त्यध्याये—पुनर्मरणप्रसंगे प्रेतभूतादीनामुल्लेखः कृतः ।

'प्रेतभूता..........गतायुषाम्[२]'

अग्रोपहरणीयाध्याये[३]—शस्त्रकर्मणः रक्षोघ्नमन्त्रादीनां प्रयोगः विस्तरेण प्रतिपादितः । पुनश्च–शस्त्रकर्मणि रक्षाप्रसङ्गे [४]ब्रह्मा-नाग-पिशाच-गन्धर्वादीनामुल्लेखः समुलभ्यते ।

व्याधिसमुद्देशीयेऽध्याये[५]—आधिभौतिकरोगेण सह आध्यात्मिकस्य आधिदैविकस्य च व्याधेर्वर्णनं कृतमास्ते ।

शारीरे गर्भिणीव्याकरणाध्याये[६]—शिशोः रक्षाप्रसङ्गे मन्त्रप्रयोगो निर्दिष्टः । ग्रहोपसर्गलक्षणानि, ग्रहोपसर्गेभ्यः बालादीनां रक्षणोपायश्च वर्णितः ।

चिकित्सास्थाने द्विव्रणीयाध्याये[७]—कृमिघ्नोपायाः वर्णिताः । मूढगर्भचिकित्सोपक्रमे–मूढगर्भनिर्हरणाय मन्त्रप्रयोगो विहितः ।

'च्यावनान्[८] मन्त्रानुपश्रृणुयात्'

[९]अनागतबाधाप्रतिषेधीयेऽध्याये—देवताऽतिथिविप्रपूजनगुणाः वर्णिताः ।

[१०]मेधायुष्कामीयेरसायनाध्याये—वशीकरणयोगाः वर्णिताः ।

निवृत्तसन्तापीय रसायनाध्याये—रसायनौषधधारणमन्त्राः वर्णिता ।

कल्पस्थाने—सर्पदष्टविज्ञानीयाध्याये[११] सर्पाणां दंशवेगादीनाञ्च प्रकारवर्णनं कृतम् । सर्पदष्टविषचिकित्सोपक्रमे[१२] मन्त्रौषधादीनां प्रयोगो वर्णितः ।

उत्तरतन्त्रे—नवग्रहाकृतिवर्णनम्[१३], ग्रहणां लक्षणसाध्यासाध्यग्रहार्तलक्षण-साध्यग्रहार्तचिकित्सा चोपवर्णिता । अग्रे च ग्रहबाधाविमुक्तये परिषेचनाभ्यङ्ग[१४]-बलिदान-शमन-रक्षाविधानञ्चोपदिष्टम् ।

ग्रहोत्पत्त्यध्याये[१५]—नवबालग्रहाणामुत्पत्तिकथनं विस्तरेण समुपलभ्यते ।

ज्वरप्रतिषेधीयेऽध्याये[१६]–विषमज्वरागन्तुकभूताभिषङ्गोत्थज्वराणां लक्षणानि साध्यासाध्यत्वं चिकित्सा चोपवर्णिता ।

---

१. सु० सू० ३४।७ । २. तदेव सू० ३१।३१-३२ । ३. तत्रैव ५।१७ । ४. सु० सं० सू० ५।२०-३२ । ५. तत्रैव अ० २४ । ६. सु सं शा० १० । २६-२७ । ७. सु० सं० चि० १ । ८. तत्रैव १५।६-८ । ९. तत्रैव चि० २४ । १०. तत्रैव चि० २८ । ११. सु० सं० क० अ० ४ । १२. तत्रैव अ० ५ । १३. सु० सं० उ० २७ । १४. तत्रैव २८-३६ । १५. तत्रैव ३७ । १६. तत्रैव ३९ ।

**मूर्च्छाप्रतिषेधीयेऽध्याये**[1]—तल्लक्षणभेदचिकित्सावर्णनं कृतमुपलभ्यते । मद-भेदानां[2] पानात्ययस्य, संन्यासस्य च सहेतुलक्षणचिकित्सितानि वर्णितानि ।

## अष्टाङ्गहृदये भूतविद्या

अत्र हि मङ्गलाचरणश्लोके—औत्सुक्य-मोहारतिकराणां रागादीनां हर्त्रेऽपूर्ववैद्याय नमस्कारो विहित आस्ते । तेन हि मानसविकारदूरीकरणस्य प्राथम्यमङ्गीकृतमाचार्यवर्यैः ।

मनसः रोगाधिष्ठानत्वं, मनस दोषयोरुल्लेखः, मनोदोषौषधञ्च सूत्ररूपेण प्रतिपादितम्[3] ।

**दिनचर्यावर्णने च**—धर्माचरणोपदेशः, पापकर्मवर्जनं, देवाद्यर्चनं, अतिथिपूजनं, सद्व्रतञ्च समाख्मातम्[4] । तत्सर्वं भूतविद्याविषयकमेवास्ते ।

**सूत्रस्थानस्य रोगानुत्पादनीयाध्याये—**

ये भूतविषवाय्वग्निसम्प्रहारादिसम्भावाः ।
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ॥

एवमादिसन्दर्भैः भूतविद्याविषयाः वर्णिताः । भेषजपाने च—मन्त्रप्रयोगो[5] निर्दिष्टः । निदानस्थाने[6] च—मदमूर्च्छासंन्यासानां स्फुटमेव वर्णनमुपलभ्यते ।

**चिकित्सास्थाने[7] च—**

'दैवाश्रयं च भैषज्यं ज्वरान् सर्वान् व्यपोहति'
'शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः'

अथ च—साधु-गुरु-द्विज-दैवतपूजाः औषधयो मणयश्च सुमन्त्राः ।
प्रीतिकरा मनसो विषयाश्च घ्नन्त्यपि विष्णुकृतं ज्वरमुग्रम्[8] ॥

**कुष्ठचिकित्सिते च—**

व्रतदमयमसेवात्यागशीलाभियोगो द्विजसुरगुरुपूजासर्वसत्त्वेषु मैत्री ।
शिवशिवसुतताराभास्कराराधनानि प्रकटितमलपापं कुष्ठमुन्मूलयन्ति[9] ॥

**ग्रहचिकित्सिते च—**

ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् ।
सर्वव्याधिं चिकित्सन्तं जपन् सर्वग्रहान् जयेत् ॥

तथोन्मादानपस्मारानन्यं वा चित्तविक्लवम् ।
महाविद्यां च मायूरीं शुचिं तं श्रावयेत्सदा ॥

---

१. तत्रैव ४६ । २. तत्रैव ४७ सम्पूर्णम् । ३. अ० हृ० सू० अ० १ । ४. अ० हृ० सू० २ सम्पूर्णं द्रष्टव्यम् । ५. तत्रैव १८।१६-१८ । ६. तत्रैव नि० अ० ६ । ७. तत्रैव चि० १।१६३-१६९ । ८. तत्रैव १।१७५ । ९. तत्रैव १९।९८ ।

भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।
जपन् सिद्धांश्च तन्मन्त्रान् ग्रहान्सर्वानपोहति[1] ।।

उन्मादे–चतुष्पथे बलिप्रदानमाख्यातम् ।
'चतुष्पथे गवां तीर्थे नदीनां सङ्गमेषु च[2] ।।'

**रसायनप्रयोगे च**—देवस्मरणं धर्मपालनं मनोदोषापनयनञ्च समुद्दिष्टम्[3] ।

## काश्यपसंहितायां भूतविद्या

**वेदनाध्याये**—मदात्ययस्य लक्षणानि, ग्रहबाधायाः पूर्वरूपाणि च निर्दिष्टानि ।

**लक्षणाध्याये**—सत्त्वानां भेदाः, तेषां लक्षणानि च वर्णितानि ।

**जातिसूत्रीयशारीरे**—पुत्रीया इष्टिः, गर्भिण्याः हितचर्या च प्रतिपादिता ।

**इन्द्रियस्थाने**—स्कन्धादिग्रहबाधासूचकानि स्वप्नानि, दुःस्वप्नशान्तिश्च वर्णिता ।

**बालग्रहचिकित्सिते**—रेवत्याः विंशति नामानि, रेवतीपूजनफलम्, रेवतीजनिताः रोगाः, पूतना, मुखमण्डिका, शीतपूतनादिग्रहाणां चिकित्साविधानम् ।

**कृमिचिकित्सिते**—विडङ्गघृतादीनां वर्णनम् ।

**मदात्ययचिकित्सते**—मदोत्थरोगभेदाः, लक्षणानि चिकित्सा च वर्णिता ।

**धात्रीचिकित्सिते**—षष्ठीग्रहस्य सनिदाना चिकित्सा वर्णिता ।

**धूपकल्पाध्याये**—अपस्मारग्रहापहो धूपः, रक्षोघ्नधूपः, ग्रहघ्नधूपश्च वर्णितः ।

**रेवतीकल्पाध्याये**—जातहारिणीवर्णनम्, जातहारिणीग्रस्तलक्षणम्, तस्या भेदाश्च वर्णिताः ।

**भैषज्योपक्रमणीये**—रोगभेदाः मानसव्याधिहेतवो वर्णिताः । अत्र च जातहारिणीवर्णनमतीव विशिष्टं संलक्ष्यते ।

## हारीतसंहितायां भूतविद्या

स्वतन्त्ररूपेण **भूतविद्यानामकोऽध्यायः** समुपलभ्यते, यत्र भूतविद्यासम्बन्धिनो विषयाः वर्णिताः । दशविधग्रहाणाञ्च वर्णनं सविशदमुपन्यस्तम् । तेषां लक्षणानि चिकित्सा च निर्दिष्टा[4] ।

## भेलसंहितायाञ्च

मणिमन्त्रौषधिधारणमाख्यातम् । देवानां स्तुतिस्तन्मन्त्रजपश्च निर्दिष्ट आस्ते ।

---

१. अ० हृ० उ० ५।५०-५२ । २. तत्रैव ६।५८ । ३. तत्रैव ३९।९-१० ।
४. हा० सं० ३।५५ ।

औषधींश्च मणींश्चैव माङ्गल्यान् धारयेत्सदा ।
मन्त्रमावर्तयेच्चापि ब्रह्मप्रोक्तं सनातनम्[1] ।।

उन्मादस्य[2], अपस्मारस्य विस्तरेण सनिदाना चिकित्सा च वर्णिताऽस्ति ।

## चक्रदत्ते भूतविद्या

भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।
जयेद् भूताभिषङ्गोत्थं मनः शान्तैश्च मानसम्[3] ।।

**बालरोगचिकित्सा**[4]—'कुमारकल्याणकघृतम्' इत्यारभ्य बालचिकित्सा-प्रकरणान्तं यावत् ग्रहभूतादिबाधानिवारणाय योगाः प्रयोगाश्च विविधाः वर्णिताः ।

## रसरत्नसमुच्चये

भक्षणं स्पर्शनं दानं ध्यानं च परिपूजनम् ।
पञ्चधा रसपूजोक्ता महापातकनाशिनी[5] ।।

एवं सर्वदुरितनाशनी रसपूजा वर्णिता । देवाद्यर्चनम्—

यत्र क्षेत्रे स्थितं चैव वैक्रान्तं तत्र भैरवम् ।
विनायकं च सम्पूज्य गृह्णीयाच्छुद्धमानसः[6] ।।

**ग्रहाणां रत्नानि**—'माणिक्यमुक्ताफलविद्रुमाणि,
ताक्ष्यं च पुष्पं भिदुरं च नीलम् ।
गोमेदकं चाथ विडूरकं च
क्रमेण रत्नानि नवग्रहाणाम् ।।

ग्रहानुमैत्र्या कुरुविन्दपुष्प-
प्रवालमुक्ताफलताक्ष्यवज्रम् ।
नीलाख्यगोमेदविडूरकं च
क्रमेण मुद्राधृतमिष्टसिद्धये[7] ।।'

**रत्नधारणगुणाः**[8]—सूर्यादिग्रहनिग्रहापहरणं दीर्घायुरारोग्यदं
सौभाग्योदय भाग्यवश्यविभवोत्साहप्रदं धैर्यकृत् ।
दुश्छाया चलधूलिसंगतिभवाऽलक्ष्मीहरं सर्वदा
रत्नानां परिधारणं निगदितं भूतादिनिर्णाशनम् ।।

**लोहमारणमन्त्रः**—आदौ मन्त्रस्ततः कर्म कर्तव्यं मन्त्र उच्यते । 'ॐ अमृतोद्भवाय स्वाहा' अनेन लोहमारणम्[9] ।

१. भे० सं० सू० ७।१५ । २. भे० सं चि० अ० ८, ९ । ३. चक्रदत्तः ज्वरचि० २१९ । ४. चक्रदत्तः बालचि० । ५. र० र० स० पूर्वखण्ड १।२५ । ६. तत्रैव २।६५ । ७. र० र० – ४।५-७ । ८. पू० ख० – ४।७८ । ९. र० र० सं० पूर्वखण्डम् ५।९७ ।

**रसशाला—** आतंकरहिते देशे धर्मराज्ये मनोरमे ।
उमामहेश्वरोपेते समृद्धे नगरे शुभे[1] ॥

एवं हि रसशास्त्रेऽपि भूतविद्या महत्त्वपूर्णं पदमादधाति ।

**भैरवपूजनम्—** 'वाङ्मायां ह्रीं ततः खें चक्ष्मश्च पञ्चाक्षरो मनुः ।
अनेन मूलमन्त्रेण भैरवं तत्र पूज्येत[2] ॥'

**रसक्रियायां भूतविद्याविशेषज्ञा नियोज्याः—**

भूतनिग्रहमंत्रज्ञास्ते योज्या निधिसाधने ।
बलिष्ठाः सत्यवन्तश्च रक्ताक्षाः कृष्णविग्रहाः ॥
भूतत्रासनविद्याश्च ते योज्या बलिसाधने ।
निर्लोभाः सत्यवक्तारो देवब्राह्मणपूजकाः ॥
यमिनः पथ्यभोक्तारो योजनीया रसायने ॥

एवञ्च रसलिङ्गस्थापने रसशालानिर्माणे भेषजग्रहणे तत्प्रयोगे च सर्वत्रैव भूतविद्या समुपासिता दरीदृश्यते ।

ग्रहाणाञ्च शान्त्यै मणीनां धातूनाञ्च साफल्येन प्रयोगो विहितः । तथाहि देवादीनां नामतश्चोल्लेखदर्शनादत्र भूतविद्यामहत्त्वमाकलितमवगम्यते ।

## लोलिम्बराजकृतौ वैद्यजीवने भूतविद्याविषयाः

चलदलतरुसेवाहोममन्त्रौ त्रिनेत्र-
द्विजसुरगुरुपूजाकृष्णनाम्नां सहस्रम् ।
मणिधृतिपरिदानान्याशिषस्तापसानां
सकलमिदमरिष्टं स्पष्टमष्टज्वराणाम्[3] ॥

लोलिम्बराजो हि समस्तामयानां प्रतीकारेऽगौरवमावहन्नपि ग्रहाणामुपचारे दैवव्यपाश्रयणमेव शरणं मेने । तथा चात्रापि भूतविद्याविषया दृश्यन्ते ।

## योगरत्नाकरे भूतविद्या

अत्र च पानात्यय-परमद-पानाजीर्ण-पानविभ्रम-मूर्च्छोन्मादापस्मारनिदानं चिकित्सा च वर्णिता समुपलभ्यते ।

## माधवनिदाने

अभिचारेण[4], अभिशापेन, अभिषङ्गेन च आगन्तुकज्वरोत्पत्तिर्निगदिता । भूताभिषङ्गाच्च[5] उद्वेग-हास्य-रोदन-कम्पनं भवतीत्युक्तम् । विषज्वरश्च भूताभि-

---

१. र० र० सं० पूर्वखण्ड ६।१३ २. पू० ख० ६।५५ ३. वै० जी०-प्र० वि० ७२ ।

४. मा० नि० ज्वर० २६-अभिचारः श्येनादियागकृतः अथवा विपरीतैर्मन्त्रैर्लोहस्रुचा सर्षपादिहोम इत्याहुः । अभिषङ्गकामादीनां भूतानां च सम्बन्धः । अभिशापो ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिशंसनम् । ( मधुकोषटीका ) ।

५. भूतानि देवादय उन्मादनिदाने वक्ष्यमाणाः तेषामभिषङ्गः सम्बन्धः उद्वेग उद्विग्नचित्तता ( मधुकोषटीका ) ।

षङ्गोत्थ आख्यातः। शोकाच्चातिसारोत्पत्तिरुक्ता। क्रमीणां-भेद-प्रमाण-निदान-लक्षण-नाम-स्थानादिकं वर्णितम्[1]।

**अरोचकस्य**—शोकभयातिलोभक्रोधमनोघ्नाशनरूपगन्धजत्वमाख्यातम्[2]।

**मूर्च्छा-निद्रा-भ्रम-तन्द्रा-संन्यासानां**—शरीरदोषैः सह मानसदोषाणां हेतुत्वमङ्गीकृतम्। मनःस्रोतोदुष्टिः, हीनसत्त्वता, तमोऽभ्युपगमश्च हेतवः समाख्याताः। संन्यासस्य च निदाने (सम्प्राप्तौ) दोषाणां प्राणायतनाश्रितत्वं निगदितम्।

**पानात्यय-परमद-पानाजीर्ण-पानविभ्रमाणाञ्च**—लक्षणानि वैशद्येन समीरितानि। उन्मादनिदाने च तस्य [3]मानसामयत्वमुक्तम्, [4]तथाविधानाञ्च कारणानामुल्लेखः कृतः। शोकादिजत्वमपि कथितम्—

'गाढं क्षते मनसि च प्रियया रिरंसोः, जायेत चोत्कटतमो मनसो विकारः' इत्यादिप्रसङ्गेन।

**भूतोन्मादानां**—ग्रहणकाल-लक्षणादिकमाख्यातम्!

**अपस्मारस्य**—चिन्ताशोकादयो करणत्वेनाङ्गीकृताः। तस्य च पूर्वरूप-रूप-प्रकोपकालादिकं वर्णितम्।

**हृद्रोगस्य**—हि संचिन्तनादिकं कारणमाम्नातम्।

**कुष्ठस्य निदाने**—'विप्रान् गुरून् धर्षयतां पापं कर्म कुर्वताम्।.................. कुष्ठानि भवन्ति।' इत्युक्तम्।

**मसूरिकानिदाने**

क्रूरग्रहणाच्चापि देशे दोषाः समुद्धताः।
जनयन्ति शरीरेऽस्मिन्................ ॥
मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥

## शार्ङ्गधरसंहितायां भूतविद्या

अत्र च सृष्टिक्रमवर्णनं[5] विस्तरेण समुपलभ्यते। शोकातिसार[6]-शोकशोष-मूर्च्छा-भ्रम-तन्द्रा-संन्यास-मद-मदात्यय-परमद-पानाजीर्ण-पानविभ्रम-उन्माद-मनोदुःखजोन्माद-भूतोन्माद-अपस्माररोगाणां लक्षणादिकं वर्णितमुपलभ्यते। [7]द्वादशबालग्रहाणामुल्लेखश्च कृतो वर्तते।

**भावप्रकाशे**[8]—अत्र च भ्रम-तन्द्रा-मूर्च्छा-संन्यासापस्मार-पानात्ययादीनां निदानलक्षणचिकित्सितानि वर्णितानि सन्ति। परवर्तिनि च वाङ्मये प्रकीर्णरूपेण भूतविद्यासम्बन्धिनो विषया वर्णितचराः।

---

१. मा० नि० क्रमिनि०।    २. मा नि०-अरोचकनि०।

३. मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः।
मदयन्त्युद्गता दोषा यस्मादुन्मार्गमागताः ॥

४. विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥ (उन्मादनि०)

५. शा० सं० ख० १।५।५२-७०।    ६. शा० सं० ख० १।७।

७. शा० सं० ख० १।५। १८६-१८८।    ८. भा० प्र० मध्यमखण्डः।

एवञ्च समस्तमेवायुर्वेदवाङ्मयं कियताप्यंशेन भूतविद्याविषयैरनुस्यूतमवलोक्यते।

## श्रीमद्वाल्मीकिरामायणे भूतविद्या

**शापवर्णनम्**—त्रिशङ्कुशापः (बालका० स० ५८)
वासिष्ठशापः (बालका० स० ५९)

**दैवप्राबल्यम्**—

सुखदुःखे भयक्रोधौ लाभालाभौ भयाभयौ।
यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत्[1]॥

**गान्धर्वास्त्रमोहनम्**—गान्धर्वास्त्रेण मोहिताः सन्तस्ते खलु—

प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम्।
इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः[2]॥

**इन्द्रजिन्मायायुद्धम्**—

स सम्प्राप्य महातेजा युद्धभूमिमरिंदमः।
स्थापयामास रक्षांसि रथं प्रति समन्ततः[3]॥

मायासीतावधः—यु० का० ८१।१६
यक्षरक्षोयुद्धम्—उ० का १४।२९
वेदवतीशापः—उ० का० १७।३२-३३
अनरण्यशापः—उ० का० १९
नृगशापकथनम्—उ० का० ५३
अहल्याशापविमोक्षः—बालका० ४८
रम्भाशापः—बालका० ६४
रक्षोवधप्रतिज्ञानम्—अरण्य० ६

एवञ्च रामायणेऽपि बहुशो भूतविद्यासम्बन्धिनो विषयाः वर्णिताः।

## महाभारते भूतविद्या

अत्र हि [4]स्कन्दापस्मारस्य विस्तृतं वर्णनं दृश्यते। महारौद्ररूपा[5] विनता **'शकुनिग्रह'** इत्याख्यातः। विनता च अन्तरिक्षचरा[6] देवी। **पूतनाग्रहश्च**[7]-राक्षसी घोररूपा। **शीतपूतना** चापि दारुणाकारा पिशाची कथिता[8]। स्कन्दसम्भवाः कुमाराः कुमार्यश्च **गर्भभुजो** भवन्ति[9]। रेवती[10] च रैवत इत्याख्यातः दैत्यानां माता **दितिश्च मुखमण्डिका** कथिता।

**देवादीनामुल्लेखः**

अतिथीनागतान् देवान् दैत्यान् नागान् मुनींस्तथा।
यक्षान्सुपर्णान् कालेयान् गन्धर्वाप्सरसस्तथा[11]॥

---

१. वा० रा० अयोध्या का० २२।२२, ३०। २. वा० रा० युद्धका० ६४।२३।
३. तत्रैव ७३।२०। ४. महाभा० आरण्य० २३०।२४-२५। ५. तत्रैव २३०।२६।
६. महाभा०शल्यप०४६।१५, १८,२१,२४,२६,३४-३५। ७. महाभा० आरण्य० २३०।२७।
८. महाभा० आरण्य० २३०।२८। ९. तत्रैव २३०।३१-४५। १०. तत्रैव २३०।२९-३०।
११. तत्रैव ११।१८-३६, ४५।

गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसंख्येयैस्तथा ब्रह्मर्षिभिर्वरैः[1] ॥

**सिद्धमहापुरुषशापात्[2]**—सिद्धग्रहाः गृह्णन्ति । यश्च जागृतः सुप्तो वा पितृन् पश्यति सः पितृग्रहगृहीत उन्मत्तो जायते[3] । यश्च विभिन्नान् गन्धान् जिघ्रति रसांश्चास्वादयति सः राक्षसग्रहप्रभावेणोन्माद्यति[4] । यक्षग्रहगृहीतश्चोन्मत्तो जायते[5] । वनप० २३०।१-२४ श्लोकेषु च भूतविद्याविषयकाः सन्दर्भा उपलभ्यन्ते । वनप० ३३०।४७-५३ श्लोकेषु च देवपितृराक्षसगन्धर्वग्रहाणां वर्णनमुपलभ्यते । वनप० २३०।५७ श्लोके प्रतिपादितं यत्सप्तग्रहाः १६ षोडशादूर्ध्वं सप्ततिं यावद् गृह्णन्ति । [6]शृङ्गीऋषिप्रदत्ततक्षकदंशशापात्परीक्षितं मोक्तुं शापविनिवारणार्थं मन्त्रसिद्धाः ब्राह्मणा आहूताः । धौम्यऋषिः [7]माया राक्षसीत्रासान्मूर्च्छितस्य श्रीकृष्णस्य रक्षोघ्नमन्त्रैः रक्षाञ्चकार ।

**सम्मोहनम्**—विश्वामित्रेण सह प्रवर्तमाने युद्धे वशिष्ठस्य ब्रह्मर्षेः सर्वं एव सुताः पञ्चत्वमभजन् । तेन च वशिष्ठर्षिरात्महत्यां कुर्तुमियेष । पर्वतशिखरादात्मानं पातनेन, जलनिमज्जनेन, अग्निदाहेन वा प्राणोत्सर्गपरोऽभवत् । ततश्च ज्ञानविज्ञानसम्मोहनादिभिर्पुनः यथाकथञ्चनस्वास्थ्यमाप ।

अर्जुनश्च विराड्गृहनिवासकाले कौरवाणां सम्मोहनमकरोत् । तदानीन्तने च काले शत्रुपराजयार्थं सम्मोहनप्रयोगः प्रचलितो बभूव । अनन्तरञ्च सम्मोहननिराकरणेन प्रबोधनमपि प्रयुक्तमासीत् । लोकाश्च स्वसमीहितकार्यसाधनाय सम्मोहनप्रणालीं चरितार्थतां नीतवन्तः ।

एवञ्च महाभारतकाले वैदिककालादनुसृता ज्ञानविज्ञानधैर्यस्मृतिसमाधिरूपाऽऽध्यात्मिकी चिकित्साप्रक्रिया लब्धप्रसराऽऽसीत् । महाभारते च बहुषु स्थलेषु भूतविद्यासम्बन्धिनां देवासुरादीनामुल्लेखः दरीदृश्यते ।

## श्रीमद्भागवतमहापुराणे भूतविद्या

धुन्धुकारी प्रेतः—धुन्धुकारी स्वकदाचारैर्मृत्यूत्तरं प्रेतत्वमभजत् । झंझावातरूपेण चतुर्षु दिक्षु बभ्राम । क्षुत्पिपासाव्याकुलश्च हा दैव ! हा दैव ! इति ब्रुवन् परिदेवयाञ्चक्रे । सः क्वापि कथमपि शान्तिंनालभत । तद्भ्राता धार्मिको गोकर्णस्तीर्थयात्रातः परावृतः सन् जनैः स्वभ्रातुर्मरणं विजज्ञे । एकदा स्वगृहे यदा गोकर्णः सुप्त आसीत्तदा धुन्धुकारी महद्भयङ्करं रूपं विभर्त्य प्रकटी बभूव । स तु कदाचिदग्नेरिन्द्रस्यावेर्महिषस्य च रूपमदर्शयत्, मनुष्यस्य च रूपं दधार । तं दृष्ट्वा गोकर्णोऽचिन्तयत् यदयं दुर्गतौ पतितः जीवोऽस्ति । पप्रच्छ च—कोऽसि ? कथं रात्रावीदृशं भयङ्करं रूपं दर्शयसि ? कथमिमां दशामापन्नोऽसि ? ब्रूहि त्वं प्रेतः, पिशाचः, राक्षसो वाऽसि ?

---

१. तत्रैव ४४।७ । २. तत्रैव २३०।५० । ३. तत्रैव २३०।४८ । ४. तत्रैव २३०।५० । ५. तत्रैव २३०।५१-५३ । ६. तत्रैव ४२।२६-३० । ७. तत्रैव ११।१९ ।

एवं पृष्टः सन् स प्रेतो भृशमुच्चैः रुरोद, न च किमपि वक्तुमशकत्। सङ्केतमात्रेण स्वभावं विज्ञापितवान्। गोकर्णेनाञ्जलौ जलं गृहीत्वा मन्त्राभिमन्त्रितं विधाय तस्याभिषेचनमकारि। ततश्च धुन्धुकारी लब्धवाक्प्रसरः स्ववृत्तान्तमश्रावयत्। प्रेतेनोक्तम्—'मया ब्राह्मणत्वं परित्यक्तं। अगण्यानि क्लिष्टकर्माणि मया कृतानि। बहूनां प्राणिनां हिंसा कृता। कुलटाभिश्चाहं ससन्तापं पशुमारं मारितः। अधुना च प्रेतयोनौ महत्कष्टमनुभूयते मया न किमपि भोजनं गृह्यते। केवलेन वायुभक्षणेनाहं जीवनं धारयामि' इत्यादिसन्दर्भैः प्रेतयोनिवर्णनं दृश्यते[1]।

**विराट्स्वरूपवर्णनप्रसङ्गे भूतविद्या**—दैत्याः, सर्पाः, मनुष्याः, पक्षिणः, मृगाः, सरीसृपाः, जन्तवः, गन्धर्वाः, अप्सरसः, यक्षाः, राक्षसाः, भूताः, प्रेताः, पशवः, पितरः, सिद्धाः, विद्याधराः, चारणाः, वृक्षाः, खेचराः जलचराः स्थलचराश्च जन्तवः, ग्रहाः, नक्षत्राणि, ताराः, विद्युतः, जलदाः, सर्वे एव एते विराट्पुरुषा एव। अत्र च देवासुरगन्धर्वादीनामुल्लेखः कृतः[2]।

**असुरः**—असुरचर्चाऽपि श्रीकृष्णचरित्रे महत्त्वपूर्णा वर्तते। तथा च प्रलम्बासुर-धेनुकासुर-वकासुर-केशी-अरिष्टासुर-कंस-कालयवन-भौमासुर-शाल्व-द्विविदवानर-वल्लव-दन्तववल-शम्बरासुर-व्योमासुर-वाणासुरप्रभृतीनां वर्णनमुपलभ्यते[3]।

**भगवत्स्वरूपकथनप्रस्तावे**—श्रीशुकदेवेनापि परीक्षितं प्रति निगदितं यत् हे परीक्षित! प्रजापति-मनु-देवता-ऋषि-पितृ-सिद्ध-चारण-गन्धर्व-विद्याधर-असुर-यक्ष-किन्नर-अप्सरा-नाग-सर्प-किम्पुरुष-उरग-मातृका-राक्षस-पिशाच-प्रेत-भूत-विनायक-कूष्माण्ड-उन्माद-वेताल-यातुधान-ग्रह-पक्षी-मृग-पशु-वृक्ष-पर्वत-सरीसृप-प्रभृतयः यावन्ति नामरूपाणि सन्ति सर्वाणि, तानि भगवत एवेति[4]।

**दशविधसृष्टिवर्णने**—मैत्रेय उवाच–देवता-पितृ-असुर-गन्धर्व-अप्सरः-यक्ष-राक्षस-भूत-प्रेत-पिशाचादिभेदेन देवसृष्टिरष्टधा[5] भवति।

**ब्रह्मणा रचिताया बहुविधसृष्टेः वर्णनप्रस्तावे**—शौनक उवाच—ब्रह्मा गम्भीरं विहस्य स्वकान्तिमद्रूपतो गन्धर्वानप्सरसश्च निर्ममे। तांश्च दिगम्बरान् विकीर्णकेशांश्च विलोक्य ब्रह्मा नेत्रे निमीलयामास। ब्रह्मणा त्यक्तं जृम्भारूपं शरीरं भूतादिभिर्गृहीतम्। इयमेव निद्रापि कथ्यते। यया च जीवानामिन्द्रियाणि शैथिल्यं भजन्ते।

यदि च कश्चिज्जन उच्छिष्टमुखः स्वपिति, भूत-प्रेत-पिशाचादयस्तमाक्रामन्ति, स एवोन्माद इति कथ्यते।[6] यथाह चरकः—'अशुचेरप्रयतस्य वा'[7] इति।

**पृथुयज्ञशालावर्णने**—मैत्रेय उवाच—हे विदुर! भगवता पृथुवचनं समादृतम्। पृथुस्तमपूजयत्, भगवांश्च स्वकृपाभिस्तमुपकृत्य गन्तुं प्रचक्रमे। महाराजः पृथुस्त-

---

१. श्रीमद्भागवतमाहात्म्ये—अ० ५। २. तत्रैव २।६।१२-१५। ३. तत्रैव ७।३४-३५।
४. श्रीमद्भागवते २।१०।३७-३९। ५. श्रीमद्भाग० ३।१०।२७-२८।
६. श्रीमद्भाग० ३।२०।४१। ७. चरक० नि० ७।१७।

त्रागतान् देवता-ऋषि-पितृ-गन्धर्व-सिद्ध-चारण-नाग-किन्नर-अप्सरः-मनुष्य-पक्षिणश्च भगवद्बुद्धया सुनृतया गिरा धनैश्च सत्कृतवान् ।[1]

**पुरञ्जनोपाख्याने च**—नारद उवाच—राजन्, 'चण्डवेग' नामक एको गन्धर्वराड् वर्तते । तदधीने षष्ट्यधिकत्रिशतसंख्याका महाबलशालिनो गन्धर्वा निवसन्ति । तैः सह मिथुनभावेन कृष्णवर्णाः शुक्लवर्णाश्च गन्धर्वस्त्रियोऽपि सन्ति । ताश्च भ्रममाणा भोगसामग्रीपूर्णान् नगरान् आक्रम्य [2]लुण्ठन्ति ।'

विभिन्नग्रहाणां स्थितिः, गतिः, शिशुमारचक्रवर्णनञ्च भागवते समुपलभ्यते । भगवतः सर्वदेवमयत्वं वर्णितमास्ते । नित्यं सायङ्काले स्नात्वा मौनी सन् भगवन्तं स्तुवीत । 'सम्पूर्णज्योतिर्गणाश्रयं कालचक्रस्वरूपं सर्वदेवाधिपतिं परमपुरुषं परमात्मानं नमस्करोमि' इति । ग्रहनक्षत्रतारासु भगवतः आधिदैविकं रूपं प्रकाशते । ये च जनास्तस्याधिदैविकं स्वरूपं चिन्तयन्ति, नमस्कुर्वन्ति तेषां पापानि सद्य एव क्षीयन्ते[3] ।

## गरुडपुराणे भूतविद्या

[4]वैष्णवकवचम्—अत्र च विष्णोर्नामानि कीर्तयित्वा रक्षाप्रार्थना कृताऽस्ति । सर्वविधस्यापि शत्रुरूपिणो रोगस्य, दैत्यासुरादेश्च सर्वतोभावेन रक्षणं प्रार्थितम् ।

### गरुडश्रीकृष्णसंवादः

ये [5]केचित् प्रेतास्ते कुत्र वसन्ति ? इति प्रेतलोकविनिर्मुक्ताः कथं किल्विषं भुञ्जन्ति ? चतुरशीतिलक्षैश्च नरकैः पर्य्युपासिताः सहस्रधा दूतैश्च रक्षिताः लोके कथं विचरन्ति ? दिवानिशम् रक्षापालैश्च रक्षिताः कथं विचरन्ति ? इति गरुडेन पृष्टः श्री कृष्णोऽब्रवीत्—ये हि परधनदारहरणोद्यताः पापात्मानोऽशरीराः क्षुत्पिपासातुराः विचरन्ति । ते च पितृभागांश्च गृह्णन्ति, ते हि स्वस्य पूर्ववेश्म समागत्य मूत्रोत्सर्गस्थानं तिष्ठन्ति, तत्रस्थाश्च ते तत्रस्थान् जनान् रोगशोकज्वरादिव्याधिभिराधिभिर्वा पीडयन्ति । ते हि भोजनोच्छिष्टमन्नं जलञ्च गृह्णन्ति । पुनश्च गरुडः पप्रच्छ—प्रेताः केन रूपेण कस्य किं कुर्वन्ति ? ते न च जल्पन्ति, तर्हि कथं तेषां परिज्ञानं जायते ? श्री कृष्ण उवाच—प्रेतः स्वकुलं पीडयति, छिद्रं दृष्ट्वा परकुलमपि पीडयति । यश्च जीवितदशायां बहु स्निह्यति स्म, स एव प्रेतत्वमधिगतो दुष्टत्वमाप्नोति ।

यश्चाचारहीनो नास्तिको देवनिन्दकः, असत्यभाषणरतो बन्धुभिः सार्धं विरुद्धयति, हीनं कर्म समाचरति, साम्वत्सरादिकं श्राद्धं भावशुद्धया न विधत्ते, परद्रोहमतिः परदारापकर्षी पितृतिरस्कर्ता, स किल प्रेतैः पीड्यते । ये च खट्वायामेव मृता दाहक्रियादिहीनास्ते प्रेतत्वमाप्नुवन्ति । यत्र च कुले प्रेतदोषा भवन्ति,

---

१. श्री मद्भाग० ४।२०।३५-३६ । २. श्री मद्भाग० ४।२७।१३–१४ । ३. तत्रैव ५-२२–२३ । ४. ग० पु० अ० १९४ । ५. तत्रैव अ० १० सम्पूर्णम् ।

तत्र कुले न सुखमुपजायते। मति-प्रीति-रति-बुद्धि-लक्ष्मी एताः पञ्च विनश्यन्ति। तृतीये पञ्चमे वा वंशच्छेदो जायते। स खलु निर्धनो दरिद्रश्च जायते। तथा च—

ये केचित् प्रेतरूपा विकृतमुखदृशौ रौद्रदंष्ट्राः करालाः
मन्यन्ते नैव गोत्रं सुतदुहितृपितॄन् भ्रातृजायांश्च बन्धून्।
कृत्वा काम्यञ्च रूपं सुखगतिरहिता भाषमाणा यथेष्टं
हा कष्टं भोक्तुकामा विधिवशपतिताः संस्मरन्ति स्वपाकम्[1]॥

ते[2] प्रेताः पिशाचत्वमधिगताः, ते क्षुत्पिपासातुरा वायुरूपेण स्ववेश्मनि प्रविशन्ति। ते च स्वकलत्रान् पुत्रान् बन्धून् वा समुपेत्य विकृताननाः हय-गज-वृषरूपिणः स्वात्मानं स्वप्ने दर्शयन्ते। प्रेतदोषाद् विविधाः स्वप्ना दृश्यन्ते। भुञ्जन्नेवान्नं गृहीत्वा पलायनम्, वृषभारोहणं, उत्पत्य गगने गमनं स्वकलत्रं स्वपुत्रं स्वबन्धूंश्च विद्यमानं मृतमिव पश्यति स्वप्ने। यश्च पितृभ्यो पुरश्चरण-पूर्वकं भावभक्तिं पुरस्कृत्य विष्णुबलिं दद्यात्, न सः प्रेतैर्भूतैर्पिशाचैर्वाऽभिभूयते। अथ पुनः गरुडः पप्रच्छ—केन हेतुना मृत्युवशङ्गताः प्रेताः सम्भवन्ति? तेषां रूपं कीदृक्? किञ्च भोजनम्? प्रसन्नाश्च ते क्व तिष्ठन्ति? श्रीकृष्ण उवाच—ये[3] च पापकर्माणस्ते स्व पूर्वकर्मवशानुगाः मृताः सन्तः प्रेतत्वं भजन्ते। ये हि वापी-कूप-तडाग-सुरालय-प्रपा-वृक्षांश्च विक्रीणन्ति, ते हि पितृपैतामहं धर्मं विक्रीय मृताः प्रेतत्वमाप्नुवन्ति। ये च गोचरभूमिं ग्रामसीमां तडागारामगह्वरांश्च लोभाभिभूताः कर्षन्ति, ते हि प्रेताः सम्भवन्ति। ये च सर्पदंशेन, उदकनिमज्जनेन, विद्युदाघातेन, दंष्ट्राघातेन, बन्धनेन, विषनिपातेन, शस्त्रप्रहारेण, आत्मघातेन, विसूचिकारोगेण, अग्निदाहेन, पापात्मकरोगेण वा म्रियन्ते, ते हि प्रेता भवन्ति। पुनश्चैकदा[4] युधिष्ठिरेण पृष्टो भीष्म उवाच—

केन कर्मविपाकेन प्रेतत्वमुपजायते।
केनोपायेन मुच्यन्ते तन्मे ब्रूहि पितामह॥

भीष्म उवाच—अहं ते कथयिष्यामि सर्वमेतदशेषतः।
यच्छ्रुत्वा न पुनर्मोहमेवं यास्यसि सुव्रत॥

**येन च कर्मणा प्रेतत्वञ्जायते यथा प्रेतत्वं मुच्यते तत्सर्वमत्र वर्ण्यते**—आसीत् कश्चन संतप्तकाभिधो ब्राह्मणः। सत्ये, शौचे, ब्रह्मचर्ये, तपसि, स्वाध्याये, होमे च तत्परः सन् कतिचन वर्षाणि वनमध्युवास। कालक्रमेण च तस्य बुद्धिः तीर्थ-यात्रार्थमभवत्। एकस्मिंश्च दिवसे महातपाः मार्गभ्रष्टो विप्रोऽरण्ये विजने घोरदर्शनान् सुदारुणान् पञ्च प्रेतान् ददर्श। तांश्च दृष्ट्वा भयाकुलोऽसौ विस्मयमाजगाम। कथञ्चन त्रासमुत्सृज्य धैर्यं बबन्ध पप्रच्छ च तान् प्रेतान्। यूयं कथं विकृतामिमां दशामवाप्ताः? किञ्चाशुभं कर्म कृतवन्तः यस्येतादृशः परिणामः? कथं च भवन्त एककर्माणः कुत्र च प्रस्थिताः? प्रेता उचुः—सर्वे वयं पापात्मानो,

१. ग० पु०—उ० ख० अ० १०। २. तत्रैव उ० ख० अ० ११।
३. ग० पु० उ० ख० १२। ४. तत्रैव।

परद्रोहरताः, क्षुत्पिपासातुराः, हतवाक्याः, नष्टसंज्ञाः, विचेतसः, दिशं न जानीमः, कुत्र गच्छामः, न जानीमः, । हे ब्रह्मन् ! तव दर्शनेन वयमतीव तृप्ताः, आह्लादिताः स्मः । अस्माकं नामानि तु—पर्य्युषित-सूचीमुख-शीघ्रग-रोहक-लेखका इति पञ्च । पुनश्च विप्रः पप्रच्छ यत् कर्मजातानां प्रेतानां नामसम्भवः कथम् ? प्रेतराज उवाच—

मया स्वादु सदा भुक्तं दत्तं पर्य्युषितं द्विजे ।
तेन पर्य्युषितं नाम जातं मे द्विजसत्तम ! ॥

सूचिता वहवोऽनेन विप्रा अन्नादिकाङ्क्षया ।
एतत् कारणमुद्दिश्य ह्येष सूचीमुखः स्मृतः ॥

शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ।
एतत् कारणमुद्दिश्य शीघ्रगोऽयं द्विजोत्तम ! ॥

एकाकी मिष्टमश्नाति दैवं पैत्र्यञ्च नित्यशः ।
ब्राह्मणानामभावेन रोहकस्तेन चोच्यते ॥

पुरायं मौनमास्थाय याचितो विलिखन्महीम् ।
तेन कर्मविपाकेन लेखको नाम नामतः ॥

प्रेतत्वं कर्मभावेन प्राप्य नामानि च द्विज ! ।
मेषाननो लेखकोऽयं रोहकः पर्वताननः ॥

शीघ्रगः पशुवक्त्रश्च सूचकः सूचिवक्त्रवान् ।
पर्य्युषितो बलग्रीवः पश्य रूपविपर्ययम् ॥

धृत्वा मायामयं रूपं विद्रुता नरकार्णवात् ।
सर्वे च विकृताकारा लम्बोष्ठा विकृताननाः ॥

वृहच्छरीरदशनाः वक्रास्याः स्वेन कर्मणा ।
एतत्ते सर्वमाख्यातं प्रेतत्वे कारणं मया ॥

ज्ञानिनो हि वयं सर्वे सञ्जाता दर्शनात्तव ।
यदि ते श्रवणे श्रद्धा पृच्छास्मान् यद् यदिच्छसि ॥

पुनश्च विप्रः पप्रच्छ—यद् युष्माकमाहारं श्रोतुमिच्छामि । प्रेतराज उवाच—श्लेष्ममूत्रपुरीषादिमलाः, उच्छिष्टपक्वान्नानि च प्रेतानां भोज्यानि भवन्ति । अशौचानि प्रकीर्णोपस्कराणि गृहाणि प्रेताः गच्छन्ति, मलिनानि भूतानि च भुञ्जन्ति । यत्र गृहे न सत्यम्, न संयमः, न बलिप्रदानम्, न होमः, न स्वाध्यायः, न व्रताचरणं, न लज्जा, न मर्यादा, न च देवपूजनं तत्र प्रेता भुञ्जन्ति । यत्र च लोभः, क्रोधः, शोको, भयं, कलहः, आलस्यं तत्र प्रेता भुञ्जन्ति । या च निर्भर्तृका नारी परपुरुषवीर्यं निषेवते, तत्र वीर्यमूत्रादिकं प्रेता भुञ्जन्ति । स्त्रीणां रजांसि च वयं लिहामः । एवञ्च प्रेतराजो ब्राह्मणं ययाचे—यद् यथा प्रेतत्वं न भवेत्तथा त्वमाचक्ष्व ।

ब्राह्मण उवाच—यश्च उपवासव्रती, कृच्छ्रचान्द्रायणे च संलग्नो भवेन्न सः प्रेतो जायते। यश्चारामप्रपाधर्मालयदेवालयादिनिर्माता कुमारीणां विवाहकर्ता विद्याप्रदोऽभयप्रदश्च न सः प्रेतत्वं भजते। यश्च ब्रह्मस्वं गुरुस्वं देवद्रव्यञ्च हरेत्, शुल्केन च कन्यां ददाति, यश्च विना दोषं भार्यां भगिनीं मातरं स्नुषां, दुहितरं त्यजति, यश्च न्यासापहर्ता, मित्रध्रुक्, परदाररतः, विश्वासघाती, ब्रह्महा, गोघ्नः, सुरापो गुरुतल्पगो भूमेः, हेम्नश्च हर्ता, स प्रेतो जायते।

## ब्रह्मपुराणे भूतविद्या

पितॄणां वर्णनमुपलभ्यते। तथा च—

पिता पितामहश्चैव तथैव प्रपितामहः।
त्रयोऽप्यश्रुमुखा ह्येते पितरः परिकीर्तिताः॥

## मार्कण्डेयपुराणे भूतविद्या

ये स्युर्पितामहादूर्ध्वं ते स्युर्नान्दीमुखा इति॥

## वायुपुराणे भूतविद्या

ब्रह्मचर्येण तपसा यज्ञेन प्रजया यथा।
श्रद्धया प्रज्ञया चैव प्रदानेन च सप्तधा॥

कर्मस्वेतेषु ये युक्ता भवन्त्यादेहपातनात्।
देवैस्तैः पितृभिः सार्धं मोदन्ते सोमपाज्यपैः॥

युगेषु यास्तु जायन्ते प्रजास्ता वै निबोधत।
आसुरी सर्पगोपक्षिपैशाची यक्षराक्षसी॥
यस्मिन् युगे च सम्भूतिस्तासां यावत्तु जीवितम्॥

पिशाचासुरगन्धर्वयक्षराक्षसपन्नगाः।
युगमात्रन्तु जीवन्ति ऋते मृत्युवधेन ते[1]॥

## विष्णुधर्मोत्तरपुराणे भूतविद्या

यदा च स्कन्दस्य जातकर्मादिकं विश्वामित्रश्चकार, ततो पुरन्दरस्तस्य स्कन्दस्य वधाय मतिं चक्रे। पुरन्दरश्च देवपितृदानवराक्षसभूतनागपिशाचगन्धर्वैः संमन्त्र्य देवदैत्यग्रहान् पितृदानवराक्षसान् नानाशस्त्रसज्जितान् कृत्वा कुमारवधकाम्यया श्वेतगिरिं प्रेषयामास। स्कन्दश्चात्मरक्षार्थं कामरूपिणो महाबलान् अनेकशतसाहस्रान् मनोजवान् भीषणान् ग्रहान् ससृजे। स्कन्दविशाखनैगमेषभीमभीमकरक्रव्य-निरत-क्रोश-पुष्पक-पुष्पमित्र-कोकिलकसिद्धप्रभृतीन् ग्रहान् ससर्ज। तांश्चादिदेश यन्मर्त्यलोके दुराचारान् पुरुषान् गृह्णीध्वम्। आस्तिकान् धर्मपरायणान् वर्जयध्वम्[2]।

---

१. वायुपु० ५९.१-२। २. विष्णुधर्मोत्तरपु०-अ० २३०।

अतः परं विस्तरेण ग्रहग्रहणकारणानि ग्रहदोषनिवारणविधिश्चोक्तः[1]।

## अग्निपुराणे भूतविद्या

अग्निपुराणे [2]एकत्रिंशदध्याये सर्वरोगविनाशाय मन्त्रादीनां पाठ उपलभ्यते। [3]**महामारीविनाशाय च**—महामारीविद्याप्रयोगो विद्यते। विविधा मन्त्रा औषध्यश्च वर्णिताः।

[4]**मालिनीमन्त्राध्याये**—शाक्तशाम्भवतुष्टिकरमन्त्रादीनां प्रयोगः प्रेतबाधाप्रशमनाय नारायणबलिवर्णनम्। तद्यथा—

अनुग्रहेण महता प्रेतस्य पतितस्य च।
नारायणबलिः कार्यस्तेनानुग्रहमश्नुते[5]॥

[6]नवग्रहहोमाध्याये नवग्रहशान्त्यर्थं होमादिवर्णनं विस्तरेण वर्णितम्। देवादीनाञ्च तुष्ट्यै देवपूजा वैश्वदेवबलिप्रदानादिकं वर्णितम्[7]। [8]शेष-वासुकी-तक्षकादीनां नागजातीनां लक्षणानि, तेषां दंशविषचिकित्सा चोपवर्णिता। विषापनयनार्थं मन्त्रप्रयोगाश्च वर्णिताः। [9]देवादिप्रकोपाच्चोन्मादरोगोत्पत्तिवर्णनम्। ग्रहजगर्भिणीपीडावर्णनम्, सूर्यादिग्रहाणां पूजाविधानमपि च प्रतिपादितम्। [10]प्रेतबाधाप्रशमनाय रुद्रशान्तितन्त्रवर्णनं दृश्यते, [11]सर्वबाधाप्रशमनार्थं महामृत्युञ्जयजपादि वर्णितम्। वशीकरणमन्त्राश्च वर्णिताः।

एवञ्च विविधेषु पुराणेषु बहुविधाः भूतविद्याविषयाः समुपवर्णितास्तेषु च कतिचन उदाहरणार्थमत्र प्रस्तुताः। कथञ्च भूत-प्रेत-पिशाचादिभावो भवति, कथञ्च तन्निवृत्तिरिति सविस्तरं पुराणेषु वर्णितमुपलभ्यते।

**जैनवाङ्मये भूतविद्या**—थानाङ्गम्, व्यवहारभाष्यम्, बृहत्कल्पभाष्यम्, आचाराङ्गम्, एते जैनग्रन्था आयुर्वेदस्य भूतविद्यासम्बन्धिविषयान् वर्णयन्ति। तत्र च 'भूतविज्जा' एकमङ्गमाख्यातम्। थानाङ्गे रोगनिदानम्, आचाराङ्गे च विविधाः रोगा वर्णिताः।

अथ च मानसविकाराणामुपशमनाय व्रतादीनाञ्च निरूपणं विशदीकृतमास्ते "तत्त्वार्थसूत्रे"। तथा च—'हिंसा-अनृत-स्तेय-अब्रह्मचर्य-परिग्रहेभ्यो विरतिर्व्रतम्' इत्याख्यातम्। जैनदर्शने च सदाचारस्य विशिष्टं पदमास्ते। तत्र हि अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा महनीया व्रता उक्ताः। सम्यग् ज्ञानस्य च पूर्वोक्तव्रतसाधने प्रधानता विद्यते। पञ्चज्ञानानाञ्च समुल्लेखोऽस्ति। एवमेवेन्द्रियाण्येव सुखस्य दुःखस्य वा स्रोतांसि, अतश्च यथेन्द्रियाणि सत्पथारूढानि कृतानि स्युस्तथा तथोपायाः प्रदर्शिताः।

---

१. तत्रैव–अ० २३१ सम्पूर्णम्। २. अ० पु०–अ० ३१ सम्पूर्णम्। ३. तदेव–अ० १४२ सम्पूर्णम्। ४. तदेव–अ० १४५ सम्पूर्णम्। ५. तदेव–अ० १५९।४। ६. अ० पु०–अ० १६४। ७. तदेव–अ० २६४। ८. तदेव–अ० २९४-२९५। ९. तदेव–अ० २९६। १०. तदेव–अ० ५२३। ११. तदेव–अ० ५२०।

एतन्नये कर्मैव दुःखहेतुरस्ति, दुष्कर्मणां प्रभावेणैव संसारोदधौ जना निमज्जन्ति । तदुद्धाराय च त्रिरत्नतरणिभिर्दृढं निबद्धा । जैनाश्चात्र त्रिरत्ने श्रद्धाभरिता दरीदृश्यन्ते-सम्यग्ज्ञानम्, सम्यगाचारः, सम्यग्दर्शनमिति त्रिरत्न-मुच्यते । एवञ्च जैनवाङ्मये विशदं मनोविकारप्रशमनार्था भूतविद्या वर्णिता ।

## बौद्धवाङ्मये भूतविद्या

प्राक्तनेषु बौद्धग्रन्थेषु बहूनां भूतविद्यासम्बन्धिनां रोगाणां नामानि तेषां चिकित्साविधानञ्च समुपलभ्यते । एवञ्च **दीर्घनिकाये** महावग्गे ( ६,७ ) **विनयपिटके** मिलिन्दपह्नवे, निदेशे, चुल्लवंशे, अशोकस्य शिलालेखेषु च विविधानामामयानां तेषां चिकित्सानाञ्चसमुल्लेखो दरीदृश्यते ।

वस्तुतस्तु भैषज्यविज्ञानं बौद्धसम्प्रदाये एकं मुख्यं विधेयाङ्गमासीत् । निदेशे च विस्तरेण रोगाणामुल्लेखोऽस्ति । शारीरामयैः सह अपस्मारस्य अन्येषाञ्च क्रमिरोगाणां ( भूतविद्यासम्बन्धिनां ) वर्णनं कृतमास्ते । **दीर्घनिकाये** च मूर्च्छाकुष्ठ-प्रभृतयोः पञ्च रोगा वर्णिताः । तेषामामयानां भैषज्यरूपेण प्रायशः काष्ठौषधयः प्रयुज्यमाना वर्ण्यन्ते । शिरोरोगे च नासाद्वारेण नस्यादिकं दीयते स्म ।

**'पञ्चरक्षा'** नामकमेकं बौद्धतन्त्रमिदानीं समुपलभ्यते । तस्मिन्नपि ग्रन्थे उपशतद्वयं यक्षाणां निर्देशस्तत्तद्देशरक्षकतया वैश्रवणादीनां यक्षाधिपानामाराधन-विधानम्, तदाराधनतो वातपित्तश्लेष्मरोगनिवृत्तेः, वैद्यानां गर्भबालबाधकबालग्रह-पूजनादीनामुल्लेखोऽपि दृश्यते । तत्रैव ग्रन्थे महामायूरीविद्याप्रकरणे रमठदेशरक्षक-तया रावणस्य निर्देशोऽस्ति । मन्त्रविद्यया रोगनिवृत्तिविषये रावणोल्लेखोऽन्यत्राऽ-प्युलपभ्यते । मान्त्रिकप्रक्रियया बालचिकित्सां प्रदर्शयद्रावणतन्त्रमपि प्राचीनम-वेक्ष्यते । पञ्चरक्षाया महामायूरीविद्यायां तत्तद्देशगतपूज्ययक्षोद्देशे—

'कौशाम्ब्यां चाप्यनायासो भद्रिकायां च भद्रिकः ।'

इति कौशाम्बीरक्षकत्वेनाऽनायासनाम्नो यक्षस्य निर्देशोऽस्ति । बौद्धदर्शने च— 'तृष्णैव सर्वदुखानां कारणम्' इति प्रतिपादितम् । तृष्णा च मनोविकारजन्या जायते । तन्निरोधाय च चत्वार आर्यसत्या उक्ताः—दुःखम्, दुःखसमुदयः, दुःख-निरोधः, दुःखनिरोधगामिनी प्रतिपदा । एतत्प्रयोजनञ्च सर्वतोभावेन दुःखान्मुक्ति-रिति । सर्वथैव तृष्णायाः लयं विधातुं दुःखोन्मूलनं कर्तुमेवाष्टाङ्गिकमार्गो निर्दिष्ट आस्ते । तथा च—

(१) सम्यग्विश्वासः, (२) सम्यग्विचारः,
(३) सम्यग्वाक्, (४) सम्यग्दया,
(५) सम्यग् जीविका, (६) सम्यग् व्यायामः,
(७) सम्यक् स्मृतिः, (८) सम्यक् समाधिः, इति ।

एवञ्च वौद्धदर्शने मनोविकाराणां शान्त्यर्थमेवैत उपाया निर्दिष्टाः सन्ति। वौद्धदर्शने च मानसदोषदूरीकरणाय पञ्चानां स्कन्धानां मनसश्च वैशद्येन निरूपणमुपलभ्यते। एवञ्च वौद्धवाङ्मये प्राचुर्येण भूतविद्यासम्बन्धिविषयाणां सन्निवेशः कृत इत्यवगम्यते।

## भारतीयदर्शनेषु भूतविद्या

**न्यायदर्शने**—पदार्थानां तत्त्वज्ञानान्मुक्तिरित्याख्यातम्। ते च पदार्थाः मानसधरातलाश्रयत्वेनैवावगन्तव्या भवन्ति। एवं हि मन्यते, यन्मन एव कर्मात्मकत्वाद्बन्धनकारणमिति। मनसि च शुद्धे ज्ञानानि परिस्फुरन्ति। मन एव संस्कारवशाद् बम्भ्रामयति विविधासु योनिषु जीवान्। यदा तत्त्वज्ञानान्मनसि सत्त्वोद्रेको भवति, तदा च निःश्रेयसाधिगमस्य पन्थाः प्रशस्तो जायते[1]।

**वैशेषिकदर्शने**—तत्रात्ममनसोः विशदं वर्णनमुपलभ्यते। आत्मा च ज्ञानाधिकरणमुक्तः। स च द्विधा जीवात्मा परमात्मा चेति। आत्मनश्च चिह्नानि—श्वासोच्छ्वासौ, निमेषोन्मेषौ, जीवनं, मनसो गतिः, इन्द्रियान्तरसञ्चारः, सुखदुःखेच्छाप्रयत्नादय उक्तानि। मानसाश्च भावा विशदं वर्णिताः।

**मीमांसादर्शने**—अत्र हि धर्मस्वरूपं प्राधान्येन वर्णितम्। धर्म एव निःश्रेयस्साधक आख्यातः। तथा हि विश्वस्मिन् यथा जीवनं सुखमयं स्याद्यथा च सत्कर्मणे पुरुषो प्रभवेदेवमादिशिक्षणं प्रेरणञ्च धर्म एव ददातीति मन्यन्ते मीमांसकाः। सोऽयं पक्षः भूतविद्याविदां मतः, यथा च—धर्म्याः क्रिया हर्षनिमित्तमुक्तास्ततोऽन्यथा शोकवशं नयन्ति[2]।'

**सांख्यदर्शने**—अत्र हि दुःखत्रयाभिघात एव मुख्यं प्रयोजनाख्यातमस्य दर्शनस्य। एतदेवाभिलक्ष्यात्र तत्त्वानामुत्पत्तिर्वर्णिता। पुरुषश्च पञ्चविंशतितत्त्वमय उक्तः। प्रकृतिपुरुषयोः परस्परं साधर्म्यवैधर्म्ये यथाऽऽयुर्वेदे व्याख्याते तथैवात्रापि मन्यते[3]। तथा च-भूविद्यायामेतज्ज्ञानं प्रशस्यते। एवञ्च मन इन्द्रियाणि, तन्मात्राः पञ्चमहाभूतानि, सूक्ष्मशरीरञ्चेति सांख्यदर्शने सुष्ठु प्रतिपादितम्।

**योगदर्शने**—योगे चित्तस्य पञ्चानामवस्थानां वर्णनमास्ते। तत्र हि निरोधावस्थैव वाञ्छनीया भवति। सा चावस्था सत्त्वगुणोद्रेकादेव सम्भाव्यते। अन्यथा तु तामसे चित्ते आसुरीप्रवृत्तय एव पदं कुर्वते। राजसे च रागात्मिकाः प्रवृत्तयस्तृष्णादयश्च प्रवर्धन्ते। अतश्च योगदर्शने चित्तवृत्तिनिरोधार्थमष्टांगयोगस्य (यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिरिति योगेऽष्टावङ्गानि) प्रयोगो विहितः। यथा किल मानवोऽसत्प्रवृत्तिभिर्विरहित आधिव्याधिविनिर्मुक्तो भवेदिति।

---

१. न्यायसूत्रम्—द्रष्टव्यम्। २. च० शा० २।४१। ३. सु० सं० शा० १।६।

**वेदान्ते**—अत्र हि स्थूलसूक्ष्मकारणशरीराणां वर्णनं क्रियते। तत्र कारणशरीरोत्पत्तौ त्रिगुणात्मिका मायाशक्तिरादिकारणम्। रजोगुणेन मनसि रागद्वेषादयो विकारा जायन्ते। काम-क्रोध-लोभ-मोह-मद-मात्सर्यासूया-द्वेष-दम्भादयो वर्धन्ते। तैश्चाभिभूतो जीवात्मा कर्मसु प्रवृत्तो भवतीति।

तमोगुणेन चावृतो पुरुषः प्रमादालस्य-निद्रातन्द्राजाड्यमिथ्याज्ञानादिभिरभिभूयते। सर्वार्थांश्च वैपरीत्येन विजानाति। सत्त्वं तु निर्मलं प्रकाशकमनामयं भवति। यदा सत्त्वं रजस्तमोयुतं जायते, तदैव संसारचक्रे जनो भ्रमति। मिश्रसत्त्वप्रभावेण पुरुषः यमनियमादिषु प्रवर्तते। शुद्धे च सत्त्वे परया धिया संयुज्यते, परमानन्दं सन्तोषपदमवाप्नोति।

## गीतायां स्थितप्रज्ञलक्षणे च शान्तिप्राप्त्युपायवर्णनमुपलभ्यते

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी[1]॥

एवं हि समाचरन् स्थितधीर्मुच्यते मनोविकारैः। वेदान्ते च मानवस्य समेषां मनोविकाराणामुपशान्तये तादृशः पन्थाः प्रदर्शितो येन मानवोऽतिमानवो भूत्वा स्थितप्रज्ञो भवेत्, न चाधिभिरभिभूयेत्। एवञ्च भूतविद्यासम्बन्धिनां मानसामयानां निरसनेऽस्य दर्शनस्य सगौरवमभ्यसनमपेक्ष्यते। प्रज्ञापराधजा एव मनोविकारा जायन्ते प्रज्ञैव मूलमाधेर्व्याधेश्च।

अतश्च शांकरवेदान्तेऽपि प्रज्ञाविशोधनमेव मुख्यं प्रयोजनमाख्यातम्। दर्शनेषु सर्वत्रैव भूतविद्यासम्बन्धिनां मनोविकाराणां रजस्तमसोः, मनसः, इन्द्रियाणाञ्च संयमनोपाया निर्दशिताः; यथा च पुरुषो नाभिभूतो भवेन्मानसामयैरिति भारतीयदर्शनैः सह भूतविद्याया नितरां घनिष्ठः सम्बन्धोऽस्तीत्यवगम्यते।

## अधुनातनो प्रवृत्तिः

आधुनिके च काले भारते सर्वप्रथमं कलिकाताविश्वविद्यालये मनोवैज्ञानिकी प्रयोगशाला १९१६ ईस्वीये वर्षे डा० एन० एम० सेनगुप्तमहोदयानां संरक्षणे स्थापिता। १९२१ ईस्वीये वर्षे ढाकानगरे १९२४ ई० वर्षे मैसूर नगरे च प्रयोगशाला स्थापिता। क्रमशश्च विकासक्रमे १९२२ ई० वर्षे भारतीयमनोविश्लेषणनाम्नी संस्था स्थापिता। १९२८ ई० वर्षे च भारतीयमानसिकस्वास्थ्यसंस्था स्थापिता। एवञ्च मनोविज्ञानक्षेत्रे यावदनुसन्धानविकाससम्भावनाः प्राकट्यन्नीतास्ता वैदिकदार्शनिकविचारानुस्यूता एव परिलक्ष्यन्ते।

संस्कृतभाषाध्येतॄणां संख्या यथा यथा न्यूनतामाप, तथा तथा प्राक्तनदार्शनिकविषयाणामध्ययनादिकं शिथिलतामभजत्। सम्प्रति च स्वातन्त्र्यसूर्योदयाद्वयं जागरूकाः प्राचामाचार्याणामुक्ती अर्वाचीनदृष्ट्या समन्वयसमीक्षया विवेकबुद्ध्या

---

१. श्रीमदभग० २।७०।

च विमृश्य तंत्रिकाविज्ञान ( Neurology ) योग-क्रियादिनिर्दिष्टविधिभिर्मानस-क्षेत्रस्याध्ययनं प्रावर्तितं पश्यामः ।

आधुनिके विश्वे यथा विज्ञानं भौमतलादुच्चैरन्तरिक्षोन्मुखमभिमुखीभूत-मास्ते, तथैवापरत्र मनोविज्ञानक्षेत्रे 'तस्माद्[1] बुद्धिमान्नास्तिक्यबुद्धिं जह्यात्, स्वल्पं हि प्रत्यक्षमनल्पमप्रत्यक्षम्' इत्यनुसारं गवेषणापरायणा धीराः 'परामनोविज्ञान'[2] समुन्नतये कृतप्रयासा दृश्यन्ते । बहुत्र च तादृशाः संवादाः प्रत्यक्षीभूताः, यैः स्पष्ट-मेव पुनर्जन्मकथाः प्रकटिताः । प्रेतात्मनाञ्च विषयेऽनुसन्धानकार्यमुन्नेतुमेका संस्था-'सोसाइटी फार साइकिकल रिसर्च (ब्रिटेन) नाम्नी कर्तव्यपरायणा दृश्यते । तज्ज्ञाः प्रेतात्मानो भवन्तीति मन्यन्ते । भारते च प्रतिवर्षमेव क्वचन प्रदेशे तादृशाः समाचाराः श्रुतिगोचरी क्रियन्ते, यदमुकबालकः स्वीयं पूर्वजन्मवृत्तं स्मारं स्मारं प्रकटयति । अन्वेषणे तदीयमुदन्तं सत्यमेव प्रतीमः । एवञ्च मनोविषयेऽद्य यावद् यदवगतन्ततोऽपि प्रभूतमवगन्तव्यमवशिष्यतेऽतश्च विश्वस्मिन् तादृशाः विचाराः प्रसृता अवलोक्यन्ते, ये किल भारतीयमनीषिणां 'सिद्धीनां' स्वानुभवगम्यतामधि-गन्तुं प्रयतमानाः । याश्च—

अणिमा महिमा चैव लघिमा गरिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वञ्चाष्टसिद्धयः ।।

प्राक्तनर्षिभिरधिगतास्ता अध्यात्मविदामध्ययनसीमामधिगता भवेयुः । सम्प्रति च भौतिकी वैज्ञानिकी समृद्धिरिवाऽध्यात्मिकी समृद्धिरप्युन्नता यथा भवे-त्तथा गभीरो प्रयासो विधीयमान आस्ते । तेन चेयमाशा जागर्ति, यत् पुनरपि भारतीया दार्शनिकी दृष्टिः प्रोज्वला स्याद् विश्वस्मिंश्च 'भूतविद्या' सम्बन्धिनो तथ्याः प्राकाश्यङ्गताश्चिकित्साजगति धीधैर्यात्मादिविज्ञानप्रतिष्ठां प्रतिष्ठापयेयुरिति ।

**भूतविद्याविषये योरोपीयदार्शनिकानां मतानि**—यूनानीदर्शने 'हिप्पोक्रेटीज' ( ई० पू० ५०० ) महोदयस्य महनीयं पदमास्ते । तस्य च ग्रन्थे ( 'आन द नेचर आफ मैन' ) मानवप्रकृतीनां विस्तरेण वर्णनमुपलभ्यते । 'मूर्च्छा' रोगस्य कारण-त्वेन पित्तस्य कफस्य रक्तस्य चोल्लेखस्तेन कृतः । तेषां वैषम्ये च मूर्च्छा जायते, कफपित्तरक्तातिवृद्धया वैषम्येण वा पृथक् पृथग् मुर्च्छालक्षणानि समाख्यातानि । तेन च 'मस्तिष्क' एव सर्वेन्द्रियाणां चेतनास्थानत्वेन परिगणितः । सुख-दुःख-राग-रोषेर्ष्यादीनाञ्च मस्तिष्क एवाधारभूमिरिति सिद्धान्तितम् । सति मस्तिष्कस्या-स्वास्थ्ये मानसा आधयः समुद्भवन्ति । मनश्च मस्तिष्कस्थमतश्च मानसरोगा मस्तिष्कविकृतौ जायन्ते, मस्तिष्कविकृतिश्च दोषवैषम्यनिमित्ता भवतीति सिद्धा-न्तः 'ह्यमर ( Humour ) नाम्ना प्रसिद्धः ।

प्लेटो ( Plato ) महोदयः 'फीडो' ( Phaedo ) नामके ग्रन्थे 'आत्मनः' ज्ञानस्य च श्रेष्ठतां प्रतिपादयन् स्वात्मावबोधाय चित्तवृत्तिनिरोधमेवोपदिशति ।

---

१. च० सं० सू० अ० ११ ।        २. Para–Psychology.

असौ च जीवात्मनः पूर्वजन्मसंस्कारानुवर्तनं पुनर्जन्म च स्वीकरोति। तेन च जीवनरथस्य सत्पथाधिरोहणाय जीवात्मसारथेः कौशल्येनेन्द्रियाश्वनियन्त्रणस्य महत्त्वं प्रतिपादितम्। प्लेटोमहोदयेनेन्द्रियवशित्वस्य प्रत्याख्यानमकारि। स च राजस-तामसभावानां तिरस्कारपूर्वकं सत्त्वसमुद्रेकार्थमेव यत्नं विधातुमादिशति। प्लेटोमहोदयो मनस इन्द्रियाणाञ्च विषये बहुधा स्वविचारं प्राकाश्यं नीत्वा मुख्यतः 'आत्मज्ञानमेव' वाञ्छनीयमवगच्छति। तदर्थञ्चेन्द्रियाणां परिष्करणे, मनः समाधौ, सत्त्वशुद्धौ, सदाचारपालने, विवेकबुद्धिजागरणे च बलमादधाति।

**अरस्तू**—महोदयः ( ३८४ ई० पू०-३२२ ई० पू० ) द्रव्यं ( MATER ) स्वरूप ( FORM ) भेदेन द्विविधं स्वीकरोति। जगदिदमनयोरेवाभिव्यक्तं रूपम्। मानवश्च द्रव्यस्य ( शरीरस्य ) स्वरूपस्य ( आत्मनः ) च सम्मिलितरूपेणाभिव्यक्तिरिति। उभयोश्च तुल्यमेव महत्त्वमङ्गीकृतम्। द्वयमपि परस्पराश्रयम्, शरीरं विना नैवात्मा कार्याणि करोति, शरीरञ्च निरात्मकमकिञ्चित्करमिति द्वयोर्मिथः सम्बन्धः स्थापितो वर्तते। उभयोश्च तन्मते समानमेव महत्त्वं स्वीकृतम्। अरस्तू-महोदयः 'तर्कशात्रं' समेषां विषयाणां प्रामाण्ये प्रमाणभूतमिति प्रतिजानाति। तर्कप्रक्रिययैव मानसव्यापाराणामालोचनं विदधाति। सुखदुःखाद्यनुभूतिविषये गाम्भीर्येण विमर्शस्तेन समुपस्थापितः।

एवञ्च एपिक्यूरस-स्टोइक-गेलेन-आगस्टीन-टामसएक्विनस-फांसिसबेकन-रेने-देकार्त-स्पिनोजा-टामसहाव्स-जानलाक-लाइवनित्ज-प्रभृतीनां मनोवैज्ञानिकानां मानसिकव्यापारेषु भौतिकेष्वाध्यात्मिकेषु च भूतविद्याविषयेषु रमणीयाः सन्दर्भाः विचारप्रणाल्यश्च समुपलभ्यन्ते।

अष्टादशशताब्द्याञ्च वर्कले-हार्टले-काण्ट-बोल्फप्रभृतयो मानसक्षेत्रे स्वस्वाभिमतान् ज्ञापयामासुः। एकोनविंशतिशताब्द्यां जर्मनमनोवैज्ञानिकाः-फीज-हरबार्ट-वेबर-मुलर-हेलमहोल्जमहोदयाः, फ्रेञ्चमनोवैज्ञानिकाः-बीरां-कजिन-पिनेल-रिबो-बेनप्रभृतयः, ब्रिटिशमनोवैज्ञानिकाः जेम्समिल-टामसब्राउन-जानस्टुअर्टमिल-चार्ल्स-डार्विन-अलेग्जेण्डरबेन-हरबर्टस्पेन्सरप्रभृतयो मनीषिणः रमणीयान् विचारानुपस्थापितवन्तः।

## आयुर्वेदेतरविदुषां मते भूतविद्या

पुरा असीरियादेशे बेबीलोनियादेशे च भारतीयाथर्वणविद्यावत् तान्त्रिकप्रयोगवच्च रोगोपचारपद्धतिः प्रचलिताऽऽसीत्। यथा अशुचिपुरुषैः सहवासेन, सम्पर्केण, भाषणेन, उच्छिष्टभोजनादिना च रोगागमः, रोगाणां भूतप्रेतपिशाचाद्युपसर्गरूपत्वं, दुर्दर्शभीषणमूर्त्यादिकल्पना च कृता दृश्यते। रोगनिरसनायाभिमन्त्र्य जलादिपानमौषधिविशेषभक्षणम्, औषधिविशेषधारणम् प्रतिसरबन्धनं ( ताबीजबन्धनं ) पिष्टकधूल्यादिभिः रोगिणामावरणम् ( विभूतिलेपनम् ), वृक्षविशेषपल्लवादिभिः रोगिणो मार्जनं, रोगकारकदुष्टदेवताभ्यः छागशूकरादिबलिदानम्, तान्त्रिकपद्धताविव प्रतिपक्षव्यक्तेः केशनखपादधूल्याद्यभिमन्त्रणेन प्रति-

कृतिं निर्माय अपमार्जनम्, ऋग्वेदोपलब्धमाडूकदेवतावत् माडूकनामकदेवताया उपासनेन रोगपरिहारश्चैवमादयो बहव आथर्वणतान्त्रिकादिभारतीयप्रयोगसमान-प्राया उपायादयो दृश्यन्ते ।

यथा आथर्वणसम्प्रदाये य एव शान्तिपुष्ट्यादिप्रयोगकारो धार्मिका आचार्यास्ते मान्त्रिक्या प्रक्रियया औषधप्रयोगेन च रोगपरिहर्तारो भिषजोऽप्यासन्, ये अथर्वाणोऽभिधीयन्ते, एवमेव मिश्रादिदेशेष्वपि पुरातने काले धर्मगुरव एव रोगाणामपि चिकित्सका ( Priest Doctors ) आसन् । धर्मगुरूणां निवासभूमयः देवालया एव प्राधान्येन चिकित्सालया अभूवन् ।

हेरोडोट्स्नामकः विद्वान् नीलनदीपरिसरं स्वास्थ्यप्रदत्वेन वर्णयति । असीरियादिप्रदेशान्तरेष्वित्र तत्रत्यानामपि जनानां भूतप्रेतदेवादिप्रकोपादितो रोगोत्पत्तिवादे नितरां विश्वास आसीत् । चिकित्साविषयका ग्रन्थाः मन्त्रमया आसन्, धार्मिकाः पुरोहिताः चिकित्सका अप्यासन् इति जार्ज फोकार्ट ( George Faucart ) महोदयो निरूपयति । सी० एफ्० वर्थेलोट ( C. F. Berthelot ) महोदयोऽपि समुल्लिखति, यत् प्राचीनमिश्रदेशेऽप्यथर्ववेदानुरूपमेव मन्त्रतन्त्र-सहितस्य चिकित्साविज्ञानस्य रसायनशास्त्रस्य च व्यवहार आसीदिति ।

रोमदेशीये इट्रुस्कन ( Etruscon ) जातेः प्राचीन इतिवृत्ते ग्रीकदेशीय-प्राचीनजातेश्च पूर्ववृत्तये देवतोपासनाप्रार्थनाबल्यादयो मान्त्रिका उपचारा अप्युप-लभ्यन्ते । केल्टिकजातीयविचारे वैद्यकस्य धर्मस्य च मिथो घनिष्ठः समबन्धः । तदीया ड्रुडनामका धर्मगुरव एव चिकित्सका अप्यासन् । आथर्वणपद्धताविव तेषामपि मान्त्रिके औषधसम्बन्धिनि चिकित्सिते दृष्टिरासीदिति 'टी वार्न' ( T. Barns ) महोदयो लिखति ।

यूरोपीय ट्यूटन—( Teuton ) जातेः प्राचीनचिकित्सायां मर्सबर्गस्य ( Mersseburg ) मान्त्रिकप्रयोगेण ( Charms ) सह कतिपयभारतीयवैदिक-मन्त्राणां सादृश्यमुपलभ्यते । एतज्जातेः प्राचीनेतिवृत्तविचारे भूतानां, देवानां पापानां च रोगे कारणत्वं दैवप्रकोपजे पशुबल्यादीनां प्रतीकारार्थमुपयोगः, रोग-परिहाराय वृक्षत्वगादौ तदीयमन्त्रं विलिख्य हस्तादौ धारणं मन्त्रपाठः, देवमूर्तीनां जलस्नानं धूपादिभिर्भूताद्यपसारणप्रक्रिया चासीदिति 'के. सुधोफ' (K. Sudhoff ) महाशयो जे० जोली ( J. Jolly ) महाशयोऽपि वर्णयति । एषां विषयाणामनु-सन्धाने आथर्वणप्रक्रियाया भारतीयायुर्वेदप्रक्रियायाश्च तत्रापि बहुधा साम्यमुप-लभ्यते ।

उत्तरमेरिकाया रेड इण्डियन च्यारोकी ( Cherokees ) जातीयानां प्राचीने मान्त्रिकभैषज्येऽपि आथर्वणमान्त्रिकप्रयोगस्य बहुधा साम्यमीक्ष्यते, इत्यपि जे० जोलीमहाशयो लिखति ।

इरानाभिजनानां पारसीकानाम् 'अवेस्ता'ख्ये ग्रन्थेऽथर्ववेदस्य देववाण्याश्च विशेषतः सन्निकर्षो दृश्यते । तेषामुपास्या देवता भारतीयैः परिचितस्यासुरस्यो-

च्चारणमात्रभेदेन 'अहुर' नाम्ना निर्दिश्यते। अग्न्युपासन-गोपूजन-सूर्योपासन-होमप्राधान्यमित्रादिदेवताप्रभृतिषु बहुषु विषयेष्वपि प्राचीनभारतपद्धतेरालोकस्तत्र भासते।

भारतीयायुर्वेदे रुद्रकोपादितो जनपदनाशकविविधरोगप्रादुर्भावो वर्ण्यते। प्राचीने ग्रीसदेशेऽपि दैवप्रकोपतः एवंविधरोगोत्पत्तेर्विश्वास आसीदिति 'होमर' लेखतः प्रतीयते। हिपोक्रिट्स पूर्वपुरुषस्य एस्क्लिपियस ( Asclepious ) महोदयस्याप्येवमेव विचार आसीत्। प्राचीनग्रीसमहाकवेर्होमरस्य ओडिशी ( Odyssey ) नामके ग्रन्थे दैवबलादेव रोगाणामुत्पत्तिः, तन्निवृत्तिश्च देवप्रसादादेव, पूजायज्ञ-मन्त्रोपासनादिभ्यो रोगा निवर्तन्ते इति निर्देशो दृश्यते।

'मिश्र' गतं प्राचीनं भैषज्यविज्ञानं किमात्मकमासीदित्यनुसन्धाने एबिरस-पेपिरस ( Ebers Papyrus ) नाम्ना ख्यातानि त्वक्पत्राणि प्राचीनभैषज्यविज्ञान-चिह्नान्युपलब्धानि। तत्र च पत्रे सर्पदंशनादयः विविधाश्च क्षयाद्याः ७०० परि-मिताः रोगा निर्दिष्टाः सन्तीति वर्णयन्ति विवेचकाः। कतिपयानि रोगप्रतिकार-व्यवस्थापत्राणि चोपलब्धानि, येषु पल्लीरुधिरं शूकरकर्णदन्तमांसमेदांसि, कच्छपमस्तिष्कं शयितायाः स्त्रियाः स्तन्यं, ब्रह्मचारिण्याः स्त्रियाः मूत्रं, मनुष्य-गर्दभ-श्वा-सिंह-मार्जार-शुक्रमित्यादीन्यौषधानि निर्दिष्टानि दृश्यन्ते। कतिपयपत्रेषु मान्त्रिकी प्रक्रियाऽपि निर्दिष्टाऽस्ति। प्रायस्ते मान्त्रिकप्रयोगेषु विश्वासवन्त आसन्। मिश्रे भैषज्यविद्यासम्बन्धिनो लेखास्त्वक्पत्र ( पेपरी ) रूपेण मन्दिरेषु स्थाप्यमाना आसन्। राजकुलेऽपि मान्त्रिकभैषज्यप्रक्रियायाः प्रतिष्ठा आसीत्। मनुष्याणां देवानां चारोग्यसम्पादकतया 'रा' नामकदेवतया निर्देशः 'एबिरस पेपिरस' पत्रे उपलभ्यते। भारतीयरविरेव तदीयो 'रा' देवः प्रतीयते।

एवञ्च विश्वस्मिन्नतिप्राचीनकालादेव 'भूतविद्या' लब्धप्रसरा विद्यते, इति तत्तद्देशीयवाङ्मयालोचनया स्पष्टमेवाख्यातं भवतीति।

## भूतविद्यायां प्रेतयोनिः

'कारणगुणाः कार्यगुणानारभन्ते' इत्यनुसारं त्रिगुणात्मिकया मूलप्रकृत्या समुद्भूते पुरुषे त्रिगुणममत्त्वं स्वाभाविकमेव। येषु मनुजेषु तमोगुणाधिक्यं भवति, त एव तादृशं मोहमयमसत्कर्मारभन्ते, यदुपभोगार्थं प्रेतत्वमधिगच्छन्ति। ये चाधार्मिकाः परपीडनपरायणास्ते हि यातनामयीं प्रेतयोनिमाप्नुवन्ति।

अत्र योनौ स्वकर्मानुसारमैश्वर्यं बलं सामार्थ्यं वा प्राप्यते। कश्चन सत्त्वगुणाधिकः कश्चन रजोऽधिकः कश्चन तमोगुणाधिको भवति। गुणानुसारमेव ते ह्याचरन्ति। पूर्वजन्मस्वभावानुसारमेव रागद्वेषपरिग्रहादयो भवन्ति। यदनुसृत्य कस्मैचन द्विषन्ति, कस्मैचन स्निह्यन्ति, क्वचन कर्मणि हितं क्वचन चाहितं विदधति। बाहुल्येन च पापात्मानः हिंसापरायणा द्वेष्टारो भवन्ति, प्रायश्च ते दुःखिन उद्विग्ना अशान्ताश्च भवन्ति।

**प्रेतत्वकारणानि**

कस्यचन जनस्य यदि संसारेऽस्मिन् कस्मिन्नपि वस्तुनि, कस्मिन्नपि जने वा विशिष्टोऽनुरागो भवति, प्रबलो वा द्वेषो भवति, अत्यन्तं परिग्रहो वा भवेत्तदा प्रेतत्वं भवति। यः खलु कस्मैचन नितरां द्वेष्टि, मृत्यूत्तरं स किल निकृष्टां प्रेतयोनिमापद्यते। यस्य मृत्यूत्तरं संस्कारो न सम्यग् जायते, शास्त्रोक्तविधिना तिलाञ्जलिः पिण्डदानं श्राद्धादि न विधीयते, सः प्रेतत्वमधिगच्छति।

ये हि भूतान् पिशाचांश्चोपासते, ये च दम्भाहङ्कारसंयुक्ताः कामक्रोधपरायणा आसुरीभावमापन्नास्ते तु प्रेतत्वं प्राप्नुवन्ति। अविधिना मद्यपाः, तस्करवृत्तयः, हिंसकाः, आचारहीनाः, शास्त्रनिन्दकाः, अधर्मरतास्ते हि प्रेता भवन्ति। आत्मघ्नाश्च प्रेता भवन्ति ये च कैश्चिन्मारितास्तेऽपि प्रबलद्विषः प्रतीकारभावनाग्रस्ताः प्रेता भवन्ति। एवंविधाश्चान्ये येऽधर्मपराः, परापवादरतयः, विषादग्रस्ताः, परवृद्धिद्विषः, गुरुसिद्धाचार्यद्विषः, त्यक्तसत्यलज्जाचारशीलगुणा अधमा जनाः प्रेतत्वं भजन्ते।

**प्रेतत्वविमुक्तिः**

प्रेतत्वपरिहारार्थश्च तर्पणं श्राद्धं यथाशास्त्रं विधेयम्। पुत्रश्च पित्रे पिण्डं ददाति, तर्पयति, श्राद्धकर्म करोति, एतावतेव स एव उत्तराधिकारी भवति। प्रेतत्वविमुक्तये च श्रीमद्भागवतसप्ताहश्रवणं विष्णुसहस्रनामजपं गायत्रीपुरश्चरणं भगवन्नामकीर्तनं द्वादशाक्षर (ॐ नमो भगवते वासुदेवाय) मन्त्रजपं गयाश्राद्धं तीर्थश्राद्धादिकश्चाचरणीयम्।

ये च शास्त्रमतयो मातृ-पितृ-गुरु-भक्तिभरिताः, सदाचाराः, सत्कर्मरताः, प्राणिपीडाप्रतीकारदक्षाः, भगवद्भजनलग्नाः, भगवन्नामसंकीर्तनशीला न ते प्रेता भवन्ति।

**प्रेतावेशः**—प्रेताश्चावरसत्वानपवित्रान् असदाचारान् गृह्णन्ति। अग्निहोत्रहीनं कदाचारं अतिथितिरस्कर्तारं भगवन्नामजपहीनं पीडयन्ति प्रेताः। मलिने स्थाने, जनाकीर्णे भक्षयन्तं मोदकं, एकान्तेऽन्धकारे, स्त्रियः नग्नस्नानकाले, जलाशयतटे, अश्वत्थवटखर्जूरतरुतले, शून्यागारे श्मशाने, चैत्यारामे, चतुष्पथे, मलमूत्रत्यागकाले च प्रेता गृह्णन्ति। जीर्णे दुर्गे, निर्जने वने, एकान्तवासे च प्रेता आक्रामन्ति।

**प्रेतबाधाप्रतीकारः**—न भयं कुर्यात्, भयकाले उच्चैः भगवन्नाम जपेत्। न च भयोद्विग्नः पलायनपरो भवेत्। निवासस्थानं वस्त्राणि शरीरञ्च निर्मलं विदध्यात्। भयकाले गायत्रीमन्त्राभिमन्त्रितं जलं अभितो मार्जयेत्। भयग्रस्तस्य जनस्य कर्णे गायत्रीमन्त्रं जपेत्। गायत्रीमन्त्राभिमन्त्रितेन जलेन स्नानं कारयेत्। इदं श्लोकं श्रावयेत्—

स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः[1]॥

---

१. श्रीमद्भग० ११।३६।

अनेन श्लोकेन जलमभिमन्त्र्य रोगिणं पाययेत्। अथ च '[1]दैवव्यपाश्रयचिकित्सां' समाचरेत्।

ख्रीष्टवाङ्मये इङ्गलिशवाङ्मये च प्रेतादिवर्णनमुपलभ्यते। मिल्टनमहोदयश्च 'पैराडाइज लास्ट' ग्रन्थे पिशाचस्य नरकस्य च वर्णनमकरोत्। सर्वेष्वेव सम्प्रदायेषु प्रेतादीनां मान्यता वर्तते प्रकारभेदेन। यूरोपीयदेशेषु इङ्गलैण्डप्रदेशे च परलोके जना विश्वसन्ति। शेक्सपियरमहोदयेन 'हैमलेट' नामकनाटके च हैमलेटमुखेन च निगदितं तत्—

There are more things in heaven and earth, Heratio, that is not dreamt of in your philosophy'

( होरेसियो ! सृष्टौ बहूनि तादृशानि वस्तूनि सन्ति, यानि वैज्ञानिकानां दृष्टिपथातीतानि सन्ति )।

**भूतविद्याया नैदानिक इतिहासः**

चरकमते—भूतविद्यान्तर्गतानां मानसरोगाणां कारणत्वेन शारीरा दोषाः, मानसा दोषा असात्म्येन्द्रियार्थसंयोगाः प्रज्ञापराधाश्चेति परिगणिताः। प्रायशश्च शारीरा मानसाश्चामयाः परस्परमनुबध्नन्ति। शरीरमनुविधीयते सत्त्वं, शरीरञ्च सत्त्वमनुविधीयते इति। एवञ्च शरीररोगा अपि मानसामयानुद्भावयन्ति। यथा च तेषु तेषु रोगेषु यानि मानसविकृतिचिह्नानि संलक्ष्यन्ते, तानि च शरीररोगचिकित्सयैव प्रशमं व्रजन्ति।

तथाहि शारीरा व्याधय मानसरोगाणां कारणानि भवन्ति, मानसाश्च शरीररोगाणां कारणतामवलम्बन्ते इत्यङ्गीकृतमास्ते। एवञ्च मानसव्याधयो न केवलं मनोदोषजा, अपितु शरीरदोषजा अपि। अनया दिशा समन्वितैव कारणता दृश्यते तदुभयव्यपाश्रयाणां रोगाणाम्।

**भूतविद्यायां भेषजेतिहासः**

सर्वतः प्रथमं चरकाचार्यः मानसरोगेषु औषधिप्रयोगनिर्देशमकरोत्। स हि शारीरम् आध्यात्मिकञ्च चिकित्सितम् प्रावोचत्, यतो हि तेन शारीरं मानसञ्च कारणमाम्नातं मानसरोगाणामुद्भवे। अतश्च शरीरचिकित्साऽपि वर्णिताऽस्ति। इयं हि चिकित्सा युक्तिव्यपाश्रयचिकित्सा उच्यते, यत्र दोषानुसारिणी भेषजव्यवस्था, पोषणार्थं पथ्यव्यवस्था च विधीयते। दैवव्यपाश्रयचिकित्सायाञ्च प्रार्थना मन्त्रजपः, देवदर्शनम्, यज्ञस्यायोजनं वातावरणशुद्धिश्च क्रियते। सत्त्वावजये च ज्ञानेन विज्ञानेन ( आध्यात्मिकज्ञानेन ) स्मृत्या [2]( स्मृत्यास्वभावं भावनां स्मरन् दुःखात्प्रमुच्यते ) समाधिभिश्च विप्लुतं मनः प्रकृतिं नीयते।

प्राक्तने च काले प्राधान्येन काष्ठौषधयः प्रयुज्यन्ते स्म तद्यथाशंखपुष्पती, ब्राह्मी, जटामांसी, बचा, अश्वगन्धा, कुष्ठम्, सर्पगन्धाप्रभृतयः।

---

१. च० सू० अ० ११।५४ द्रष्टव्यम्, २. च० शा० अ० १।१४७।

अनन्तरञ्च ७००-१००० ई० वर्षे मानसरोगाणां भेषजत्वेन रसरसायन-धातुभस्मनां प्रयोग आरब्धः। तदानीञ्च नालन्दाविश्वविद्यालयस्य प्रख्यातयशसोऽनुसन्धातारो धातुभस्मनां रस-रसायनानाञ्च भेषजीयप्रयोगे मतिमकुर्वन्। स्वर्ण-रजत-ताम्र-लौह-गन्धक-पारदादियोगैः नव्ययोगाश्चिकित्साविधौ प्रयोगपथमानीताः।

अनन्तरञ्च विविधाश्चूर्ण-वटी-कषाय-आसवारिष्ट-घृत-तैलादयो मानसरोगचिकित्सायां प्रयुज्यमाना आसन् साफल्येन। तेषु च भेषजेषु कतिचन योगा अनुभूतचरा दृष्टचरा परां ख्यातिमापुः।

उदाहरणरूपेण गृह्यतां तावदेका 'सर्पगन्धा' विश्वस्मिन् मानसरोगचिकित्साक्षेत्रे विश्वेषां चिकित्सकानां मनांसि आचकर्ष स्वगुणगरिम्णा। ये चायुर्वेदिकयोगा बाहुल्येन प्रयुज्यन्ते, त एते[1]—

| | |
|---|---|
| बृहद्वातचिन्तामणिः | हिमसागरतैलम् |
| योगेन्द्रः रसः | महानारायणतैलम् |
| चतुर्मुखरसः | चैतसघृतम् |
| चतुर्भुजरसः | महाचैतसघृतम् |
| नारदीयमहालक्ष्मीविलासः | सारस्वतचूर्णः |
| अश्वगन्धावटी | रत्नेश्वरः |
| जटामांसीवटी | अश्वगन्धारिष्टः |
| सर्पगन्धावटी | सारस्वतारिष्टः |
| विष्णुतैलम् | मकरध्वजः |
| महानारायणतैलम् | बृहत्कस्तूरीभैरवप्रभृतयः। |

**मानसामयेषु सिरावेधः**

आयुर्वेदवाङ्मयस्य प्राणभूते 'चरक-सुश्रुतसंहिते' मनोव्याधिषु चिकित्साविधौ सिरावेधस्य प्रतिपादनंकुरुतः। श्रूयते यद् भगवतो गौतमबुद्धस्य समकालीनः राज्ञो बिम्बिसारस्य राजचिकित्सको जीवकाचार्यः (५०० बी० सी०) शिरः कपालास्थ्नां विश्लेषणपूर्वकं मस्तिष्कस्य शल्यकर्मणि प्रवीण आसीदिति।

**मनः संक्षोभद्वारा चिकित्साः**

इयं चिकित्सा भारतवर्षे प्राचीनकालादेव लब्धप्रसरा आसीत्। अस्याञ्च रुग्णो जनः केनापि प्राणपीडाकरेण भयेन, संक्षोभेण, आवेगेन वा निःसंज्ञो विधीयते, पुनश्च लब्धसंज्ञे सति स धीधृतिस्मृतिबलमवाप्नोति।

मनः संक्षोभणार्थञ्च मनोव्याधितस्तमोमये शून्ये निर्जने गृहे निरुध्यते, अनन्तरञ्च राजपुरुषप्रतिरूपकास्तं तर्जयन्ति, उद्वेजयन्ति चाप्रियैर्भयजनकवचोभिः हननोद्यताश्च प्राणभयंजनयन्ति, अथवा उद्धृतदशनैः फणिभिर्भीषयन्ति। किंवा

1. भैषज्यरत्नावली द्रष्टव्या।

शिक्षितैः करिभिर्भयमुत्पादयन्ति, अन्येन वा प्रकारेण मनःसंक्षोभं कुर्वन्ति, येन चास्य विप्लुतं मनः प्रकृतिं व्रजेत् ।

गते च काले भेषजानि विविधानि दृष्टिपथमानीतानि, येषां प्रयोगसौष्ठवेन मनोव्याधिप्रशमने सौकर्यमभवत् । ततश्च मनः संक्षोभजननी चिकित्सा लुप्तप्रायाऽभवत् ।

**औषधालयीयचिकित्साप्रणाली**

अष्टादशशताब्दीपर्यवसानवेलायाः प्राक् नैवोपलभ्यते क्वचन कस्यचन मानसरोगचिकित्सालयस्य नामापि भारतवर्षे । सर्वप्रथमं १७९५ ईश्वीये वर्षे मद्रासनगरे २० रुग्णशय्यासीमितो मानसिकरोगचिकित्सालयः स्थापितः । सम्प्रति च तत्र सहस्त्राधिकरोगि निवासव्यवस्था कृता विद्यते ।

ततश्च वाराणसीनगरे १८०९ ई० वर्षे द्वितीयो मानसिकचिकित्सालयः स्थापितः । १९२८ ई० वर्षं यावत्तत्र अपराधाभियुक्ताः, मनोव्याधिताश्च सेव्यमाना आसन् । अनन्तरं तत्र केवलम् अपराधाभियुक्ता (Criminals) एव निगृहीता भवन्ति । द्विचत्वारिंशद्वर्षानन्तरं ………१८५१ वर्षे च धारवारनगरे मानसिकचिकित्सालयः २४२ रुग्णशय्यान्वितः प्रतिष्ठितोऽभवत् । ततश्च पञ्चाशद्वर्षानन्तरं नवचिकित्सालया आरब्धाः । तथा च १८६२ वर्षे बरेलीनगरे १८६३ वर्षे नागपुरे वाल्टेयरनगरे च । १८६९ वर्षे आगरानगरे, १८७० वर्षे त्रिवेन्द्रमनगरे, १८७२ वर्षे काजीकोडस्थाने, १८७६ वर्षे तेजपुरनगरे, १८९४ वर्षे हैदराबादनगरे, १८९८ वर्षे बरौदानगरे च मानसिकरोगचिकित्सालयाः स्थापिताः ।

विंशतिशताब्द्याञ्च अन्येऽपि चिकित्सालया जामनगरे पश्चिमबंगाले च स्थापिताः । एवञ्च सम्प्रति ३३ संख्याकाश्चिकित्सालयाः सन्ति, येषु च १२८०५ रुग्णशय्याव्यवस्था सम्पन्ना वर्तते ।

तथाहि भारतवर्षेऽद्य यावद् मानसिकरोगिणां चिकित्साव्यवस्था गम्भीरा वर्तते । देशेऽस्मिन् शिक्षितानामभ्यस्तानां वृत्तियोग्यानां मनोरोगचिकित्सकानामल्पीयसी संख्या दृश्यते । आध्यात्मिकीविद्याध्ययनक्षेत्रे चिकित्साक्षेत्रे च दान्तानां भिषजां दीक्षितानाञ्च परिचारकाणामभावो लक्ष्यते ।

यद्यपि बंगलोर-कलकत्ता-बम्बई-मद्रासनगरेषु मनोरोगविषये स्नातकोत्तरं प्रशिक्षणं क्रियमाणमास्ते, तथापि नैवैतेनावश्यकतापूर्तिः सम्भाव्यते विधातुम् । अतो हि सविस्तरं मानसिकरोगप्रशिक्षणकेन्द्राणि, स्वास्थ्यकेन्द्राणि योग्यपरिचारकयोग्याकरणकेन्द्राणि चापेक्षितानि सन्ति ।

प्रचलत्सु च मानसिकचिकित्सालयेषु केवलं पश्चिमीयचिकित्साप्रणाल्या चिकित्सा विधीयते । भारतवर्षे चाधुना एक एव मानसिकरोगचिकित्सालयो वर्तते, यत्र आयुर्वेदपद्धत्यनुसारं चिकित्साकर्म विधीयते तन्नाम च बंगीय-उन्माद-आश्रम-कलकत्ता' इति ।

एवञ्च भारतवर्षेऽतिप्राचीनकालाद् भूतविद्यारोगाणां सनिदाना चिकित्सा परिज्ञाताऽऽसीत् । वैदिके काले महाभारतकाले च केवलं धार्मिकी (दैवव्यपाश्रया)

सत्त्वावजयचिकित्सा वा प्रचलिताऽऽसीत्। चरकसुश्रुतौ हि भारतीयचिकित्सा-गङ्गायाः भगीरथौ। तावेव मानसरोगाणां विषये शारीरिकरोगाणामिव त्रिदोष-कारणताप्रतिपादकौ मनोदोषस्य चान्वेषकौ। ताभ्यामेव 'उपायाभिप्लुता' भेषज-प्रायोगिकी च चिकित्सा प्रवर्तिता मनोव्याधिहरत्वे।

स्वनामधन्यैः जीवकाचार्यप्रभृतिभिश्च रसरसायनभेषजानामाविष्करणेन गौरवपूर्णमाविष्करणमकारि मनोरोगचिकित्साक्षेत्रे। आयुर्वेदीयसङ्ग्रहग्रन्थेषु चाद्यत्वे प्रचलितानां भेषजद्रव्याणां यौगिकानाञ्च विस्तृता सूची समुपलभ्यते। तानि च भेषजजातानि दृष्टफलानि कार्मुकाणि च सन्तीति विश्वासोऽधुना लब्धप्रसरः।

भौतिकेषु वैभवेषु चाकचिक्यमनुदिनं प्रवर्धमानमास्ते। प्रायः सर्व एव जनो जीवनस्य यापनसाधनीभूतोपकरणसम्पदर्जनाय कृतप्रयासो ग्रस्यते मान-सैराधिभिर्नितराम्। सत्त्वस्य चावरत्वान्न सहन्ते साधारणीमपि वेदनानुभूतिमिति। तत्परिणतिश्च लक्ष्यतेऽनुदिनं प्रवर्धमानं कामक्रोधलोभशोकचिन्तोद्वेगपारावारम्। अतश्च जनानां मानसिकधरातलस्य समन्वयं विधातुमधुनातने काले भूतविद्या-सम्बन्धिविषयाणां प्रचारणं प्रसारणमत्यावश्यकं संलक्ष्यते। यथा च सामान्या चिकित्साव्यवस्था क्रियते शरीररोगाणां तथैव मानसरोगचिकित्सालयव्यवस्थापि नितरामपेक्षितेति।

एवञ्च भूतविद्याया वैदिककालादारभ्य आधुनिककालपर्यन्तमैतिहासिकं विवरणमुपन्यस्तं भवति।

प्रथमंकाण्डं समाप्तम्।



# द्वितीयं काण्डम्

**भूतविद्यायाः स्वरूपम् —**

आयुर्वेदशास्त्रे सर्वेषामेव रोगाणां[1] द्विविधा प्रकृतिराम्नाता । एके चामयाः वातपित्तकफेभ्यो[2] निर्वर्तन्ते, तथाऽन्ये रोगा मानसदोषाभ्यां रजस्तमोभ्यामभिनिर्वर्तन्ते, त एते सर्व एव निजा विकारा अभिधीयन्ते । अपरे चामयास्तादृशा भवन्ति, येषु न याथार्थ्येन दोष-दूष्य-हेतु-पूर्वरूप-रूपोपशयसम्प्राप्तिपूर्वकं निदानादिकं कर्तुं पार्यते । तादृशा हि रोगा [3]आगन्तवोऽभिधीयन्ते ।

आगन्तुजेषु रोगेषु विस्मयजनकानि विचित्राणि रूपप्रकृतिगतिचेष्टितानि लक्ष्यन्ते । ज्ञानविज्ञानवाक्चेष्टाश्चाद्भुता दरीदृश्यन्ते । यश्च व्याधितो न कामपि भाषामधीतवानस्ति, स आगन्तुना गृहीतस्तदाकारतां बिभर्ति देवगिरं आङ्ग्लभाषां, अन्यां वा भाषां वदति । स्वज्ञानसीमातिक्रान्तो विविधान् अश्रुतपूर्वान् संवादान् श्रावयति । शास्त्राणि चोपदिशति, वैदिकांश्च मन्त्रानुद्घोषयति । तस्य शीलं व्यावर्तते, प्रज्ञा परिष्कृता भवति, किमपि वैलक्षमण्यं तस्मिन् दृश्यते । एवं प्रतीयते यद् रोगी पारवश्यमधिगतः, केनापि सत्वेनाक्रान्तोऽसावपौरुषेयचरितान्याचरति । समाविष्टभूतानुकारितामेव व्यनक्ति विहाराहारसंकथासु[4] । अमद्यपो मद्यं पिपासति, अमांसादो मांसं जिघत्सति । मद्यपो वा विहायाविनयमाचरति देवानामुपचितिम्, साधुजनचरितमालम्बते । भक्तिर्विपरिवर्तते, बुद्धिर्बलश्चाद्भुतं समुपजायते । तस्मिन् सर्वमेव चरित्रं परिवर्तितमालक्ष्यते । अपौरुषेयं ज्ञानमुपजायते, वाग्मिता स्फुरति, विविधाश्च विलक्षणाश्चेष्टाः समुद्भवन्ति ।

तादृशेषु चातुरेषु कल्पनातीतं विकारजातमभिलक्ष्य महर्षिभिरन्य एव रोगाणामाविर्भावप्रकारो कल्पितो नैजविकारभिन्नः । एवञ्चासाधारणानि व्यञ्जनानि लक्ष्यीकृत्य प्राक्तनैराचार्यैरायुर्वेदस्यैकं विशिष्टमेवाङ्गं परिकल्पितं 'भूतविद्या' नाम ।

---

१. 'निजागन्तुविभागेन तत्र रोगा द्विधा मताः' अ० हृ० सू० १ ।

२. स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे ।
न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्त्वेव ततो विशिष्टाः ।। ( च० सू० ११।१७ )

३. अभिचाराभिशापाभ्यामभिघाताभिषङ्गतः ।
आगन्तुर्जायते .... ... ........ ।। ( मा० नि० ज्वर० )
ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः ।
नृणामागन्तवो रोगाः ( प्रज्ञा तेष्वपराध्यति ) ।।

४. मा० नि० उन्माद० ।

अस्मिश्चाङ्गे रोगाणां स्वातन्त्र्येण निदानादिकमाकलितमास्ते। अत्र च सङ्कलितानां रोगाणां नावश्यं वातादिजन्यत्वमुत वा रजस्तमोजन्यत्वमङ्गीकृतमपितु आगन्तव एव हेतवो भवन्ति तेषामित्याम्नातम्।

विशिष्टलक्षणदर्शनाच्च तेषां तेषां देवानां भूतादीनां ग्रहाणां पिशाच-डाकिनीशाकिनीप्रभृतीनामभिनिवेश एव कारणत्वेन परिगणितो भूतविद्यासम्बन्धि-रोगाणाम्। संहिताग्रन्थेषु न शल्यतन्त्रे (व्रणाध्याये) कौमारभृत्ये, सूतिकासु, शल्याक्रान्तेषु, अपचारिषु, अभिशप्तेषु, चैत्य-शूना-शून्यागारवासिषु वा रक्षः-प्रभृतीनामाक्रमणंभवतीति प्रतिपादितम्। तज्जानाञ्च विकारणां विनिश्चयार्थं सम्यग्ज्ञानार्थमुपशमनार्थञ्च वातादिदोषचिकित्साभिन्ना काचन [1]चिकित्साप्रणाली परिगृह्यते।

अत्र विभागे वर्णिताश्च शब्दाः स्वपरिभाषानुसारमर्थान् व्यञ्जयन्ति। रोगाणामुत्पत्तिः, नामानि, संस्थानादिकं सर्वमेव गूढमवतिष्ठते। एषा च विद्या औपनिषदिकयाऽपराविद्यया साम्यं भजते। उपनिषत्सु द्वे विद्ये प्रतिपादिते स्तः। १—परा, २—अपरा चेति। तत्र परा महद्गौरवास्पदा पुरुषस्य कैवल्यार्थमुप-दिष्टा। अपरा च महामोहमयी, प्रलयोदयदात्री, तमोमयी, सर्वासामापदां मूलम्। ये चात्मज्ञानोदयभूतां परां विद्यां नोपासते, ते भौतिकेषु विषयेषु लीनाः, साभिमाना दम्भिनो देवादींश्च तिरस्कुर्वन्ति, न च श्रद्दधते धर्माचरणे, पूज्यान् धर्षयन्ति, स्वैराचराः, सर्वाविनयानां भूमयो भवन्ति। क्रोधशोकभयहर्षविषा-देर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभादिभिरभिव्याप्ताः तिलपीडकवद्वम्भ्राम्यमाणा भूयो भूय आवध्यन्ते प्रलयोदयाभ्याम्, परिभ्रमन्ति [2]चासुरीष्वेव योनिषु।

एवञ्च यैरपराविद्या समुपास्यते, त एव भवन्ति भाजनानि [3]भूतविद्या-सम्बन्धिव्याधीनाम्। एतद्रहस्यञ्च भूतविद्यातन्त्रे वैशद्येन वर्णितमास्ते। समस्तमेव च भूतविद्यारोगजातं वैलक्षण्यमावहति। न च तत्र प्रमाणतो युक्तितो वाऽशङ्कं किमपि दोषदूष्यादिविवेचनं कर्तुं सुशकम्। अतश्चैषा 'भूतविद्या' आयुर्वेदतन्त्रे आगन्तुकरूपेण स्वकीयं पदमादधाति। ये च देवासुरादय आविशन्ति प्राणिषु,

---

१. मन्त्रोषधिमणिमङ्गलवल्युपहारहोमनियमव्रतप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातनादीनि—च० नि०, ७।१९।

२. असूर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥
अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः॥
—ईशा० उप० ३।१२

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय! पतन्ति नरकेऽशुचौ॥
—गीता १६-२०।

३. च० नि, ७-८ अध्यायौ द्रष्टव्यौ।

समाविश्य च स्वेषां रूपाणि दर्शयन्ति, न ते साक्षात्कर्तुमर्हाः । न च वास्तविकं किमपि रूपमाकलयितुं शक्यते तेषां । ते हिंसन्तोऽप्यदृश्याः [1]छायातपयोरिव प्रभावैर्विज्ञेया भवन्ति । यथा च धातुतन्तुषु विद्युद्धारा न परिलक्ष्यते, किन्तु तत्कार्यजातैस्तत्प्रभावाभिव्यक्तिः स्फुटीभवति, तद्वद् देवादयः रोगाक्रान्तेषु तथा तथाऽभिव्यञ्जकलिङ्गानि दर्शयन्ति, यैस्तेषामभिनिवेशः कल्प्यते, तदनुसारेण च दैवव्याश्रयचिकित्सया साफल्यमवलोक्यते । तथा च देवादयः स्वैस्तु गुणप्रभावैर-भिज्ञेया भवन्ति । पिशाचप्रेतादीनां प्रभावस्तु प्रायेणावरसत्त्वेषु जनेष्ववलाषु वा जायते । अवरसत्त्वास्तु भय-शोक-लोभ-मोहादिभिर्दृढं प्रपीडचन्ते, रौद्र-भैरव-द्विष्ट-विकृत-बीभत्ससंकथास्वपि मूर्च्छामाप्नुवन्ति । पशु[2]-पुरुषमांस-शोणिता-दीनि चावेक्ष्य विषाद-वैवर्ण्य-मूर्च्छोन्मादादिभिराक्रान्ता भवन्ति । ते हि स्वल्पमपि भयस्थिति सोढुमनर्हाः । प्राज्ञाः-दृढाः, धीराः, सत्त्वसारास्तु महोत्साहाः, विषाद-रहिताः, स्थिरबुद्धिस्मृतिप्रज्ञावन्तो पूताचारा भवन्ति, न तेऽभिभूयन्ते प्रेतादिभिः ये च भीरवः, स्वल्पानामपि वेदनानामसहाः, दुर्बलचेतसो भवन्ति, ते भृशमा-क्राम्यन्ते भूतादिभिः ।

ग्रामीणवसतिषु, वन्येषु चावसथेषु निवसन्तो जनाः कमपि रोगमवाप्य देवपितृपिशाचादीनामावेशनमेव तत्कारणमध्यवस्यन्ति, तत्प्रतीकारार्थं च तेषां तेषां देवादीनामर्चनं बल्युपहारदानं मन्त्रप्रयोगं तान्त्रिकं वा प्रयोगमाचरन्ति ।

नैकान्तेन ग्रामेषु, किन्तु नागरेष्वपि जनेषु भवन्ति तादृशा अवरसत्त्वा येऽभिभूयन्ते भूतादिभिः । येषाञ्च चेतः सुदृढं विश्वसिति भूतावेशे, तेऽनुभवन्ति यथाकल्पितमभिनिवेशनं देवादीनां भूताद्यपाकरणविधानेन धैर्य-धी-स्मृति-जाग-रणेन च स्वस्था भवन्ति ।

विविधाश्च शरीरदोषजा अपि विकारास्तादृशा भवन्ति, येषु दैवव्यपाश्रय-चिकित्सा सिद्धयति । होमोपहारेज्याञ्जलिनमस्कारादीनां प्रभाव उपलक्ष्यते । कतिचन रोगिणः स्वयमेव स्वात्मानं प्रेताधिष्ठितं मन्यमानास्तदपनयनार्थं विज्ञाप-यन्ति भिषजः, तेषाञ्च मनोविभ्रमं ज्ञान-विज्ञान-धैर्य-स्मृति-समाधिभिरेवाऽपह्रियते । जातप्रत्ययास्ते स्वेष्टदेवेभ्योऽर्चनादिकं विदधति, दैवव्यापाश्रयेण च नैरुज्यमनु-भवन्ति । एवञ्च भूतविद्या आगन्तुषु व्याधिषु कर्मजेषु च रोगेषु मनोऽधिष्ठा-निकेषु चामयेषु परिगण्यते । ( आयतनादिकञ्च यथास्थानं वर्णयिष्यते ) एवमादि-विषयाश्च यत्राङ्गे विचार्यन्ते सत्त्वात्मेन्द्रियाणाञ्च गभीरमध्ययनं यत्र विधीयते,

---

१. दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा ।
स्वर्मणि भास्करार्चिश्च यथा देहं च देहधृक् ॥
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणः ।
प्रविश्याशु शरीरं हि पीडां कुर्वन्ति दुःसहाम् ॥
मा० नि० उन्माद० ।

२. च० वि०—८।२१ द्रष्टव्यम् ।

यत्र त्रिविधक्लेशपरिहाणार्थं तादात्विकसुखोपेक्षणपूर्वकं मानसिकं धरातलं सदाचारैरवचार्यते, तदायुर्वेदाङ्गं 'भूतविद्या' रूपेणावसीयते तज्ज्ञैरिति ।

## भूतविद्यायाः निर्वचनम्

भूत[1] न० भू-क्त । न्याय्ये, उचिते, पृथवी-जल-तेजो-वायु-गगनरूपेषु गन्धादिविशेषगुणवत्सु द्रव्येषु, जन्तुषु, सत्ये, यथार्थे, वास्तविके 'भूतमप्यनुपन्यस्यं हीयते व्यवहारतः' इति स्मृतिः तत्त्वानुसन्धाने च 'छलं निरस्य भूतेनेति स्मृतिः ।' पिशाचादौ, कुमारे, योगीन्द्रे, कृष्णपक्षे प्राणिनि च पु० । अतीते वृत्ते, सदृशे प्राप्ते सत्ये च त्रि० । कृष्णचतुर्दश्यां स्त्री टाप् ।

[2]विद्या-स्त्री० विद् क्यप् । ज्ञाने । तत्त्वसाक्षात्कारे 'विद्ययाऽमृतमश्नुते' इति श्रुतिः । दुर्गायां गणिकारिका वृक्षे, तन्त्रोक्त देवीमन्त्रे च । 'तस्य विद्या न सिद्धयति इति श्यामास्तवः ।

'सा विद्या या विमुक्तये'
''विद्या शक्तिः समस्तानां शक्तिरित्यभिधीयते'
'विद्यते देशकालानवच्छिन्नत्वेन वर्तते सा विद्या'
'सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ।
संसारबन्धहेतुश्च सैव सर्वेश्वरी ।।
( उपनिषत् )

सर्वज्ञतास्य शक्तिर्परिमिततनुरल्पवेधमात्रपरा ।
ज्ञानमुदयादयन्ती विद्येति निगद्यते बुधैराद्यैः ।।
( तत्त्वसन्दोहः )

'ओं सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि ।
बुद्धिं यो नः प्रचोदयात् ।।'
( देवी भागवतम् )

विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते ।
गुणत्रयाक्षया विद्या सा विद्या च तदाश्रया ।।
( बृहज्जाबालोपनिषद् )

विद्याः समस्तास्तव देवि भेदाः,
स्त्रियः समस्ताः सकला जगत्सु ।
त्वयैकया पूरितमम्बयैतत्,
का ते स्तुतिः स्तव्यपरा परोक्तिः ।।
( दुर्गासप्तशती )

---

१. तारकनाथभट्टाचार्यः—शब्दस्तोममहानिधिः ।

२. शब्दस्तोममहानिधिः ।

**दशमहाविद्याः—**

काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी च्छिन्नमस्ता च विद्या धूमावती तथा॥
मातङ्गी सिद्धविद्या च कथिता बगलामुखी।
एताः दशमहाविद्याः सर्वतन्त्रेषु गोपिताः॥

**कोषान्तरे भूतशब्दविमर्शः**

भूतं क्ली ( भू + क्तः ) युक्तम्। न्यायः, क्ष्मादिः-पृथिव्यप्तेजोवाय्वाकाश-पञ्चकम्। यथा मनुः—

तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः॥ ( १२।१४ )

'स च त्रिविधो वैकारीकस्तैजसो भूतादिरिति। भूतादेरपि तैजससहाया-त्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूप-तन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति। तेषां विशेषाः शब्द-स्पर्श-रूप-रस-गन्धा-स्तेभ्यो भूतानि। व्योमानिलानलजलोर्व्यः।' इति सुश्रुते (शा० स्था० १) ऋतम् सत्यम् इत्यमरभरतौ। पिशाचादिः, तथा श्रीभागवते—

एषा घोरतमा बेला घोराणां घोरदर्शना।
चरन्ति यस्यां भूतानि भूतेशानुचराणि ह॥ (३।१४।२१)

जन्तुः, इति मेदिनीशब्दरत्नावल्यौ। तथा मनुः—

स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः।
दाता नित्यमनादाता सर्वभूतानुकम्पकः॥ (६।८)

स्थावरजङ्गमात्मकं द्रव्यम्। यथा मनुः—

रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन्।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः॥ ( ८।३०६ )

वस्तुतत्त्वम्। यथा—

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः॥

छलं प्रमादाभिहितम् निरस्य परित्यज्य भूतेन वस्तुतत्त्वानुसरणेन व्यवहा-रान्नयेन्नृपः यस्माद् भूतमपि वस्तुतत्त्वमपि अनुपन्यस्तं अनभिहितं हीयते, हानि-मुपगच्छति, व्यवहारतः व्यवहारेण साक्ष्यादिभिः। तस्माद् भूतानुसरणं कर्तव्यम्। यथार्थिप्रत्यर्थिनौ सत्यमेव वदतस्तथा सभ्येन सभापतिना यतितव्यं सामादि-भिरुपायैस्तथा सति साक्ष्यादिनैरपेक्ष्येणैव निर्णयो भवतीति। अथ सर्वथापि भूतानुसरणं न शक्यते कर्तुं तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः। यथोक्तम्—

भूतच्छलानुसारित्वाद् विगतिः समुदाहृता।
भूतन्तत्त्वार्थयुक्तं यत् प्रमादाभिहितं छलम्॥ इति

तत्र भूतानुसारी व्यवहारो मुख्यः। छलानुसारी त्वनुकल्पः। (इति मिताक्षरायां व्यवहाराध्यायः)

अन्यत्र च भूतं, त्रि०। भाव्यतेऽस्मेति। आधृषाद्वेति णिजभावः। भू + क्तः। भूतिरस्त्यस्येति वा। अर्श आदित्वाट् अच्। अभवदिति वा। भुवो गत्यर्थे इति भूतार्थे कर्तरि क्तः। प्राणी, जन्तुः (यथा ऋग्वेदे—'धिया चक्रे वरेण्यो भूतानां गर्भमादधे'—३।२७।९) यथा च चरके (शा० स्था० १) 'भूतानां चतुर्विधा योनिर्जरायु-अण्ड-स्वेद-उद्‌भिजः'। अतीतम् (यथा कथासरित्सागरे—

भूतं भवद् भविष्यद् वा किं तत् स्यात् जगति प्रिये।
भवती यन्न जानीयादिति शर्वोऽप्युवाच ताम्॥

वृत्तम्—यथा सुश्रुते—'गोशकृद्‌भूतानां यवानां शक्तून् कारयित्वा।' (चि० स्था० १०) सदृशम्, समम् इत्यमरभरतौ। प्राप्तम्—यथा महाभारते—

यद् ब्राह्मणमुख्यात् प्राप्तं प्रतिगृह्णाति त्रै वचः।
भूतात्मानो महात्मानस्ते न यान्ति पराभवम्॥ (१३।३४।१५)

भूतः प्राप्तो वशीकृत आत्मा चित्तं यैस्ते। इति तट्टीकायां नीलकण्ठः। सत्यम्—इति मेदिनीरत्नावल्यौ। यथा शाकुन्तले प्रथमाङ्के सूत्रधारः—(सस्मितम्) आर्ये! कथयामि ते भूतार्थम्'। भूतकालस्य पर्यायो यथा—वृत्तम्। अतीतम्। ह्यस्तनम्। निभृतम्। गतम्। इति राजनिघण्टुः। उत्तरपदस्थ एव भूत शब्दः समार्थं इति शाब्दिकाः। यथा—दैवभूतोऽयम् इति भरतः। उत्तरपदस्थ-भूतशब्दः स्वरूपार्थोऽपि। यथा मनुः—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ (१।५)

भूतः, पुं० (भू—कर्तरि क्तः) देवयोनिविशेषः। स च अधोमुखोर्ध्वमुखादिः पिशाचभेदो रुद्रानुचरो बालग्रहः (इत्यमरभरतौ) यथा मार्कण्डेयपुराणे—

विक्षिपेज्जुहुयाच्चैवानलं मित्रश्च कीर्तयेत्।
भूतानां मातृभिः सार्धं बालकानां तु शान्तये॥ (५१।५३)

कुमारः इति मेदिनी। योगीन्द्रः इति शब्दरत्नावली। कृष्णचतुर्दशी इति त्रिकाण्ड-कोषः। भूतनाशकौषधं यथा—

श्वेतापराजितामूलं पिष्टं तण्डुलवारिणा।
तेन नस्यप्रदानं स्याद् भूतवृन्दस्य विद्रवम्॥
अगस्त्यपुष्पनस्यो वा समरीचश्च भूतहृत्।
भुजङ्गवर्म्म वै हिङ्गुनिम्बपत्राणि वै यवाः॥
गौरसर्षप एभिः स्याल्लेपो भूतहरः कृतः।
गोरोचना मरीचानि पिप्पली सैन्धवं मधु॥
अञ्जनं कृतमेभिः स्याद् ग्रहभूतहरं शिव॥

अपि च—

बचा त्रिकटुकञ्चैव करञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटुगोमूत्रेणावघर्षितम् ।
नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा ॥
अपस्मारविषोन्मादशोथालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥
—इति गारुडपुराणे ( १९२।१९९ अ० )

अथ च—

हृते वराहस्य गणे गर्भमासाद्यते गणाः ।
चतुर्भागाः स्वयंभूत्वा भूतं कर्मेति वै जगुः ॥
भूतत्वमभवत्तेषां चतुर्भागवतां तदा ।
वचनात् पद्मजातस्य भूतग्रामास्ततो मताः ॥
यो लोकविदितः पूर्वं भूतग्रामश्चतुर्विधः ।
यतस्तेभ्योऽधिका यत्नैस्तद्भूतग्राम उच्यते ॥

इति वः सर्वमाख्यातं भूताः शम्भुगणाः यथा ॥ इति कालिकापुराणे २९ अध्यायः । वसुदेवस्य पौरवीगर्भजातत्वाद्द्वादशपुत्राणां ज्येष्ठतमः यथा भागवते—

पौरव्यास्तनया ह्येते भूताद्या द्वादश अभवन् । ( ८।२४।४७ ) ( शब्दकल्पद्रुमः )

एवञ्च शब्दकोषानुसारं भूतशब्दार्थोऽवगन्तव्यो भवति । अतः परं भूतविद्यामधिकृत्यायुर्वेदमतमाकलयामः ।

**भूतविद्या—**

स्वस्थातुरपरायणस्य चायुर्वेदशास्त्रस्य 'भूतविद्या'[1] हि रहस्यभूत—मन्यतमङ्गम् । तत्र को भूतः ? का वा विद्या ? इत्युभयोः पदयोर्निवचनमन्तरा न शक्यते शब्दार्थयाथार्थ्यावगमनम् । अतश्चाप्तोपदेशप्रामाण्यात्तयोर्निवचनमुपस्थापितं प्रागेव ।

समासतस्तु—'भूतविद्यमानदेवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम् ।' ( सु० सू० १।७(४) ) ये च वधक्रीडना देवासुरादयस्तेषाञ्च भूतसंज्ञाऽऽयुर्वेदशास्त्रे[2] समुदाहृता ।

---

१. च० सू०—३०।२८ तथा सु० सू० १।७ ।
२. हिंसाविहारा ये केचिद्देवभावमुपाश्रिताः ।
भूतानीति कृता संज्ञा तेषां संज्ञाप्रवक्तृभिः ॥ (सु० उ० ६०।२६ )

यस्मिंश्च[1] पुरुषेऽपौरुषेयं ज्ञानं, विज्ञानं, बलं, वाक्, चेष्टादिकं परिलक्ष्यते, तत्र च भूतग्रहावेशो मन्यते। ग्रहाश्च[2] गुप्तमपि वस्तु विदन्ति, अनागतमपि जानन्ति, क्रोधना अनवस्थितगतयश्च भवन्ति, ते चातिमानवं कर्म समाचरन्ते। तथा हि ग्रहाक्रान्तो जनोऽप्येवमादि कर्म कर्तुं प्रभवति ग्रहावेशप्रभावात्। ग्रहशब्देन च सूर्यादयो नवग्रहाः, स्कन्दादयो बालग्रहाः, रेवती जातहारिण्यादयश्च उच्यन्ते। तेषाञ्च ग्रहणे शौचाचारहोम-बलि-शान्तिकर्म-प्रभृतिप्रशस्तकर्मणामनारम्भादीनि एव प्राधान्येन कारणानि समाख्यातानि[3]। तत्सर्वं निदानविमर्शे विस्तारयिष्यते।

एवञ्च ग्रहाणां भूतानां डाकिनी-शाकिनी प्रभृतीनां मनसि यथा यथा प्रभावो भवति, यथा च प्रभावोऽवमृज्यते तत्सर्वं यत्र विचार्यते, सा विद्या भूतविद्या[4] निगद्यते। वास्तविकरूपेण विचारणायान्तु भूतविद्यायां[5] प्राधान्येन मानसरोगाणां परिगणनमवलोक्यते। अत्र ह्युन्मादस्य-अपस्मारस्य-अमानुषोपसर्गस्य सहेतुलक्षणचिकित्सितवर्णनं दरीदृश्यते।

सुश्रुताचार्येण च स्वकृत 'भूतविद्या' परिभाषायां[6] देवाद्युपसृष्टचेतसाम्—इत्याख्यातम्, तेन चावगम्यते, यद्देवादीनां मनस्येवावेशो जायते। भूतविद्यासम्बद्धरोगेषु च मनोविकारलक्षणानि स्पष्टमेव लक्ष्यन्ते। यथा च उन्मादे—

धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च।
अवद्धवाक्त्वं हृदयं च शून्यं सामान्यमुन्मादगदस्य लिङ्गम्॥
(मा० नि० उ०)

एवञ्च सिद्ध्यति, यद् यदा मनोवहानि स्रोतांसि दूष्यन्ति, तदैव भूतविद्यासम्बन्धिनो रोगाः पदमादधते।

आयुर्वेदे चाम्नातं यत्—भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते' इति, तदत्र विषये सूक्ष्मेक्षिकया निरीक्ष्यमिदमास्ते, यद् यदि चिकित्सिते भूतानेवोद्दिश्य चिकित्सा विधीयते, तर्हि मानसव्याधिषु अस्ति कश्चन महाभूतैः सह सम्बन्धो न वेति ?

---

१. लक्षयेज्ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम्।
पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत्॥ (अ० हृ० उ० ४।१)

२. सु० उ०—६०।४।

३. काश्यपसंहिता—रेवतीकल्पाध्यायः।

४. ग्रहसंज्ञानि भूतानि यस्माद्वेत्त्यनया भिषक्।
विद्यया भूतविद्यात्वमत एव निरुच्यते॥ (सु० उ० ६०।२७)
ग्रहभूतपिशाचाद्याः डाकिनीशाकिनी तथा।
एतेषां निग्रहोपायो भूतविद्या निरुच्यते॥ (भेलसं०)

५. उन्मादप्रतिषेधश्च तथापस्मारिको गदः।
अमानुषनिषेधश्च भूतविद्या निगद्यते॥ (सुश्रुत सूत्र० ३।४१)

६. सु० सू०—१।७।

अन्यत्र च 'भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः' इत्याख्यातम्। तेन चेन्द्रियाणाम् भौतिकत्वमङ्गीकृतमेव। मनश्चेन्द्रियमस्ति, तेन मनोऽपि भौतिकमिति वक्तुं शक्यते। मनसश्च सत्त्वादयो[1] गुणा महाभूतेष्वनुस्यूता एव। मनश्चेन्द्रियम्। तस्य च महाभूतेभ्यः सामञ्जस्यं कथं संगच्छते? कथं च मनोगुणानां महाभूतेषु सन्निवेशो भवति? कथं वा मनोविकारेषु महाभूतविकृतयो भवन्ति? इत्येवमादिप्रश्नानां जिज्ञासाशान्तिविधेयतामर्हति इत्यवधार्य विचिन्त्यते।

अस्मिंश्च सन्दर्भे मनसो महाभूतानाञ्च प्रागुत्पत्तिः कुतो जातेति विमर्शणीयमस्ति। कुतो मनः समभवत्? कुतो महाभूतानि उत्पन्नानि? कानि चैषां लक्षणानि? कानि कार्याणीति चिन्तनीयम्?

तथाहि एतद्विचारसरणौ समस्तसृष्टेराद्युत्पत्तिहेतुर्विचेयो भवति। आयुर्वेदनये सर्वशरीरकारणानां भूतानामेव चिकित्सायां प्रयोजनमिति कृत्वा भूतज्ञानं प्राथम्येन ज्ञेयमस्ति। तच्चेह समुपन्यस्यते यथाक्रमम्।

**तत्र सृष्टिक्रमः**

मूलप्रकृत्यपरपर्यायमव्यक्तं सर्वभूतानां कारणम्, अव्यक्तस्य च प्रकृतिः, प्रधानं मूलप्रकृतिरिति पर्याया। तच्चाव्यक्तं[2] सर्वभूतानां कारणं सत्त्वरजस्तमोलक्षणम्, अष्टरूपम् (अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणीत्यष्टौ रूपाणि यस्य तत्तथा) समस्तस्य जगतः सम्भवहेतुरस्ति। तस्मात् सत्त्वरजस्तमोलक्षणादव्यक्तात् 'महान्' (बुद्धितत्त्वं) व्यक्तीभवति। स च सत्त्वरजस्तमःस्वभाव एव जायते। सत्त्वरजस्तमःस्वभावाच्च महतः सत्त्वरजस्तमःस्वभाव एव 'अहङ्कार' उत्पद्यते। अहङ्कारश्च सत्त्वरजस्तमोलक्षणत्वात् त्रिविधो भवति, वैकारिकः (सात्त्विकः) तैजस (राजसः) भूतादि (तामसः) रिति। तत्र सात्त्विकादहङ्काराद् राजससहायात् तमोमात्रयाऽनुविद्धाद् एकादशेन्द्रियाणि[3] समुत्पद्यन्ते, तानि हि सत्त्वस्य प्रकाशलक्षणत्वात्[4] प्रकाशलक्षणानि भवन्ति।

---

१. 'सत्त्वबहुलमाकाशं प्रकाशकत्वात्, रजोबहुला वायुश्चलत्वात्, सत्त्वरजो बहुलोऽग्निः प्रकाशकत्वाच्चलत्वाच्च, सत्त्वतमोबहुला आपः स्वच्छत्वात् प्रकाशकत्वाद् गुरुत्वादावरणत्वाच्च, तमोबहुला पृथिवी अत्यन्तावरकत्वात्।'—सु० शा० १।२० डल्हणटीका।

२. 'सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम।'—सु० शा० १।३।

३. श्रोत्रत्वक्चक्षुर्जिह्वाघ्राण-वाग्घस्तोपस्थपायुपाद-मनांसि एकादशेन्द्रियाणि, तत्र पूर्वाणि पञ्चश्रोत्रादीनि बुद्धेराश्रयत्वाद् बुद्धीन्द्रियाणि, पराणि वाक्प्रभृतीनि कर्मण आश्रयत्वात् कर्मेन्द्रियाणि। बुद्धीन्द्रियाणां कर्मेन्द्रियाणाञ्च मनोऽधिष्ठिनानामेव प्रवृत्तेः मनस्तु बुद्ध्यात्मकं कर्मात्मकञ्च।

४. सत्त्वं लघुप्रकाशमिष्टमुपष्टम्भकं चलञ्च रजः।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥

यथा प्रदीपः परस्परविरुद्धतैलाग्निवर्तिसंयोगात् पदार्थान् प्रकाशयति, एवमेव सत्त्वरजस्तमांसि विरुद्धान्यपि पुरुषार्थं निष्पादयन्ति। (सां० का० १३)

भूतादेः[1] ( तामसात् ) अहङ्काराद् राजसहायात् सत्त्वमात्रयाऽनुविद्धात-ल्लक्षणान्येव ( मोहादिलक्षणान्येव ) अनुद्भूतस्वभावानि बाह्येन्द्रियाग्राह्याणि शब्दतन्मात्र-स्पर्शतन्मात्र-रूपतन्मात्र-रसतन्मात्र-गन्धतन्मात्राण्युत्पद्यन्ते। तानि च अविशेषाणि, यतस्तानि पुनरनुभवयोग्यैः सुखदुःखमोहरूपैर्धर्मैर्विशेष्टुं न शक्यन्ते। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः।

ताभ्यः पुनः पञ्चतन्मात्राभ्य ( शब्दतन्मात्रादिभ्यः ) एकैकतन्मात्रोत्तर-वृद्ध्या व्योमादय उत्पद्यन्ते। तद्यथा—शब्दतन्मात्रात् शब्दगुणं व्योम, शब्दतन्मात्र-सहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणो वायुः, शब्दस्पर्शतन्मात्रसहितात् रूपतन्मा-त्रात् शब्दस्पर्शरूपगुणकं तेजः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी समुत्पन्ना।

एवञ्च अव्यक्तं-महान्-अहङ्कारः-एकादशेन्द्रियाणि-पञ्चतन्मात्रा-पञ्चमहा-भूताश्चेति चतुर्विंशतिको राशिपुरुषोऽभिधीयते। अस्मिंश्चतुर्विंशतिके[2] तत्त्वराशौ प्रकाशकत्वेन बुद्धिः ( महान् ) अहङ्कारः, एकादशेन्द्रियाणि च प्रधानभूतानि। एषाञ्च बुद्ध्यहङ्कारश्रोत्रादिबुद्धीन्द्रियाणां वागादिकर्मेन्द्रियाणां मनसश्च स्वः स्वो विषयो भूतेष्वधितिष्ठति। एतानि बुद्ध्यादीनि त्रयोदश अध्यात्मसंज्ञकानि, यत एतानि आत्मनो विषयभूतानि[3] सन्ति। अथ च या या देवता विश्वरूपस्य विष्णोरवयवादुत्पन्ना, सा सा तस्य तस्यावयवस्याधिदैवत्वमापन्ना बोद्धव्या। यथा बुद्धेर्ब्रह्माधिदैवतम्, अहङ्कारस्य रुद्रः, मनसश्चन्द्रः, दिशः श्रोत्रम्, त्वचो वायुः, चक्षुषः सूर्यः, रसनाया आपः, घ्राणस्य पृथिवी, वाचोऽग्निः, हस्तयोरिन्द्रः, पादयो-र्विष्णुः, पायोर्मित्रः, उपस्थस्य प्रजापतिरिति।

एवञ्च कारणस्याव्यक्तस्य सत्त्वरजस्तमोगुणा भूतेष्वपि सन्ति, तैश्च भूतैरखिलः स्थावरजङ्गमात्मको भूतग्रामः समजनि। पञ्चमहाभूतारब्धभूतग्रामस्य चायुर्वेदचिकित्सिते चिन्तनं[4] क्रियते।

आयुर्वेदिकश्च पुरुषः पञ्चमहाभूतशरीरि[5] ( आत्म ) समवाय उच्यते। तेन

---

१. भूतादिः, भूतानां पृथिव्यादीनां आदिर्मूलकारणमिति भूतादिः।

२. सु० सू०–१।७ स्थले डल्हणटीका द्रष्टव्या।

३. 'बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः'—च० शा० १।७२।

४. तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत्।
तैश्च सल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत॥
तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा।
भूतेभ्यो हि परं किञ्चिन्नास्ति चिन्ता चिकित्सिते॥
( सु० शा०–१।१२–१३। )

५. 'तत्रास्मिन् पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते, तस्मिन् क्रिया, सोऽधि-ष्ठानम्, कस्मात्? लोकस्य द्वैविध्यात्, लोको हि द्विविधः–स्थावरो जङ्गमश्च, तस्मिन् पुरुषः प्रधानं तस्योपकरणमन्यत्'–सु० सू० १।२२।

पञ्चभूतानामेव चिकित्सितोपकरणत्वम्। तस्य पुरुषस्य सम्भवद्रव्याणि शुक्र-शोणितादीनि च यानि सन्ति, तेषां समुदायो भूतादिरित्युच्यते।[1]

अतश्च पञ्चमहाभूतारब्धशुक्रशोणितसमवायारब्धस्य पुरुषस्य पाञ्चभौतिकत्वं सिद्ध्यति। एवमेव श्रवण-रसन-स्पर्शन-दर्शन-घ्राणादीन्द्रियाणि चायुर्वेदे भौतिकानि[2] मतानि। इन्द्रियार्थाश्च शब्दादयोऽपि[3] भौतिकाः समाख्याताः। भौतिकत्वञ्चेन्द्रियाणां स्पष्टमेव प्रतीयते। यतो हि यत्रेन्द्रिये यस्य भूतस्य आधिक्यमास्ते, तेन इन्द्रियेण तस्यैव भूतस्य शब्दादयो गुणा गृह्यन्ते। भूतं हि स्वयोनिमेवाभिधावति, तेन तैजसं चक्षुस्तैजसमेव रूपमादत्ते, पार्थिवं घ्राणेन्द्रियं पार्थिवमेव गन्धमादत्ते, आप्यं रसनमाप्यमेव रसमादत्ते, वैहायसं श्रोत्रं वैहायसमेव शब्दमादत्ते, वायवीयं स्पर्शनं वायवीयमेव स्पर्शमादत्ते, एकहेतुभूतत्वात्।

प्रकृते च मनसा सह पञ्चमहाभूतसम्बन्धो विचारणीय आस्ते। एतद्बोधायैव सृष्टिक्रमस्य यथाक्रममुद्धरणमुपस्थापितमत्र। तेन च भूतादेरहङ्कारान्मनस उत्पत्तिरिति दर्शितम्, मनश्चेन्द्रियम्, तच्च भौतिकमस्ति, अत एव तुल्ययोनित्वात्तेषु तेषु शब्दस्पर्शादिष्वर्थेषु प्रवर्त्तते।

ये च मनसो गुणाः सन्ति, तेऽपि पाञ्चभौतिकाहारेण वर्धन्ते क्षीयन्ते वा। यतो हि प्रत्यक्षमेवावगम्यते यत् रस्य-स्निग्ध-स्थिर-हृद्यगुणान्वितेन पाञ्चभौतिकाहारद्रव्येण मनसि सात्त्विकगुणोदयो[4] भवति। कट्वम्ललवणात्युष्णतीक्ष्णरुक्ष-विदाहिनां पाञ्चभौतिकाहाराणामासेवनेन मनसि राजसो गुणः प्रवर्धते। पूतिपर्युषितामेध्योच्छिष्टभोजनेन च मनस्तमोऽभिभूतं भवति।

सन्ति च तादृशानि पाञ्चभौतिकानि द्रव्याणि येषामुपयोगेन बुद्धिर्वर्धते, विवेको वर्धते, मेधा बलवती भवति। मेध्यानि[5] च रसायनानि रसायनाध्याये वर्णितानि। अन्यानि च बुद्धिह्रासकराणि कुन्दुरुप्रभृतीनि। उपनिषदि च अन्न-रसान्मनसः पोषणम्भवतीति निर्दशितम्। प्रत्यक्षमेव चानुभूयते यदनाहारदशायां मनः क्षुब्धं जायते, क्रोधो वर्धते। यदि चेत्क्रुद्धो जनः स्वादु इष्टवर्णगन्धरसस्पर्श-मन्नमश्नाति तदा तस्य क्रोधोऽपमार्जितो भवति।

---

१. भूतादिः भूतं पृथिव्यादिकमादिर्मूलकारणं यस्य स न्थः

२. खं श्रोत्रे स्पर्शने वायुर्दर्शने तेज उत्कटम्।
सलिलं रसने भूमिर्घ्राणे तज्ज्ञैर्निरूपितम्॥

३. शब्दो वैहायसः स्पर्शो वायवीयः प्रकीर्तितः।
रूपमाग्नेयमाप्योऽत्र रसो गन्धस्तु पार्थिवः॥

४. गीता–१७।८८१० ।

५. भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्।
कर्मात्मकत्वान्न तु तस्य दृश्यं दिव्यं बिना दर्शनमस्ति रूपम्॥
भूतानि चत्वारि तु कर्मजानि यान्यात्मलीनानि विशन्ति गर्भम्॥
(च० शा० २, ३१, ३५)

ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यप्रपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिपाकमेति ।।

( मा० नि० )

यद्वा मनसि विकारोपहतेऽभ्यवहृतमन्नजातं न सम्यक् परिपाकमेति ।

एवञ्च दृष्टचरमेतद् यत्पाञ्चभौतिकैर्द्रव्यैः पाञ्चभौतिकैर्विषयैः पाञ्चभौतिकैराहारैरन्यैर्वा पाञ्चभौतिकैर्जागतिकैर्भावैर्मनोऽनुविद्धं भवति । तेन चावगम्यते, यन्मनसः पञ्चभूतैः सह महान् घनिष्ठः सम्बन्धो वर्त्तते ।

अथ च शरीरवियोगेऽपि मनःलिङ्गशरीरमधितिष्ठति तच्च सप्तदशिकं अष्टादशिकं वा समाख्यातम् । लिङ्गशरीरे च कर्मेन्द्रियाणि, ज्ञानेन्द्रियाणि पञ्चतन्मात्राः मनः अहङ्कारो महांश्च सन्नद्धम्भवति । एवञ्च स्पष्टमेवैतत्, यन्मनः पञ्चतन्मात्रासंगतमेव तिष्ठति । पञ्चतन्मात्राश्च पञ्चमहाभूतानामेव सूक्ष्मरूपाणि । इदञ्च लिङ्गशरीरमधितिष्ठति जीवात्मा । तत्र च कर्माणि सन्नद्धानि भवन्ति, वासनाश्च[1] पूर्वजन्मार्जिताः । अत एव च तदनुसारमेव संसरति तिर्यग्योनिमानुषदेहेषु[2] धर्माधर्मनिमित्तं जीवात्मा ।

मनश्च रजस्तमोभ्यां[3] हेतुभूताभ्यां सर्वैः सूक्ष्मैर्भूतैरनुबद्धं भवति । अपरिदृश्यमानाऽपि भूतचतुष्टयी मनःप्रवृत्तियुक्ता शरीरोत्पादने समर्था भवति । लिङ्गशरीरात्मस्थसूक्ष्मभूतादेव[4] बीजरूपाच्छुक्रशोणितयुक्ताद् गर्भजन्म भवति । तदपि गर्भजननं कर्मवशादेव जायते । आतिवाहिकशरीरं ही स्वकृतकर्मानुसारमेव गर्भशरीरञ्जनयति । कारणसदृशं कार्यं भवति । तथा हि गर्भाकृत्यादयो[5] रजस्तमोगुणानुरूपा एव भवन्ति ।

एवञ्च मनः पञ्चमहाभूतैराबद्धमेव तावद् भवति, यावन्न सत्या बुद्धिरुदेति, यावन्न कर्मक्षयो भवति, न रजस्तमसी निलीयेते, न तत्त्वस्मृतिबलमुपजायते । तथा च मनसः पञ्चतन्मात्राविरहाभावात् पञ्चमहाभूतैः सह सततमेवानुबन्धो भवतीति निश्चप्रचमेव ।

यावच्च जन्म-मरणसम्बन्धो भवति, यावच्चातिवाहिकशरीरसम्बन्धो भवति, तावन्मनः पञ्चतन्मात्रासहचरितत्वात् पञ्चमहाभूतानुगं भवत्येव । एतच्च

---

१. पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ।। ( सां का० ४० )

२. सु० शा०—१।१६ ।

३. रजस्तमोभ्यां हि मनोऽनुबद्धं ज्ञानाद्विना तत्र च सर्वदोषाः ।

४. अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तरूपः ।
न कर्मणा नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः ।।

५. रूपाद्धि रूपप्रभवः प्रसिद्धः कर्मात्मकानां मनसो मनस्तः ।
भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमस्तत्र च कर्महेतुः ।।

( च० शा०, २।३८, ३७, ३६ )

सर्वं मनोव्यापारेणैव निरूपितं भवति । तच्च प्रपञ्चितं मनोविचयप्रस्तावे साकल्येन ।

वस्तुतस्तु आयुर्वेदे प्रकृतिपरिणामस्यैवोपादानकारणत्वस्वीकारेण जगदुत्पत्तौ पञ्चमहाभूतानामेव पदमाम्नातम्, पञ्चमहाभूतारब्धस्य भूतग्रामस्य चिकित्साकरण-निर्देशात् । सर्वस्य द्रव्यस्य पाञ्चभौतिकत्वं स्वीकृतम्, इन्द्रियाणाञ्च भौतिकत्व-मङ्गीकृतम् । अतश्च शारीरमानसरोगाणां पञ्चमहाभूतविकारजायमानत्वात् तथा 'क्षीणा वर्धयितव्याः बृद्धाः ह्रासयियव्याः समाः पालयितव्याः' इति राद्धान्ताङ्गी-कारात् पञ्चभूतानां किल महदुपयोगित्वं स्वीकृतम् । तथा हि पाञ्चभौतिकसृष्टौ सन्ति कतिचन रहस्यानि, यानि ह्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमा-कुलीकुर्युरतस्तेषां याथार्थ्येन गभीराध्ययनाय भूतरहस्यविज्ञानार्थं पृथगेव भूतवि-द्यातन्त्रं भूतविद्येति नाम्ना निर्दिष्टम् ।

अथ च ये किल देवासुरगन्धर्वयक्षादयो[1] विवेच्याः सन्ति भूतविद्यायाम्, तेऽपि भौतिके सर्गे परिगणिताः । चतुर्दशभूतानि पञ्चमहाभूतसर्गे भवन्ति । तत्र दैवसर्गः ( देवयोनिः ) अष्टविकल्पो भवति तद्यथा-ब्राह्म-प्राजापत्य-सौम्य-ऐन्द्र-गान्धर्व-यक्ष-राक्षस-पैशाचमिति । तिर्यग्योनिः पञ्चधा, एकविधश्च मानुषः सर्गो भवति ।

महाभूतानाञ्च सत्त्वरजस्तमोभिरनुगतत्वं स्वाभाविकमेव, यदा च रजस्त-मोभ्यां सत्त्वमुत्कटं भवति, तदा दैवयोनिरुपलभ्यते । तादृशाश्च भावा मानुषेऽपि देहे गुणानुसारं भवन्ति । तत्रापि च त्रिष्वपि गुणेषु रज एव उपष्टम्भकं भवति, उपष्टम्भकञ्च उद्द्योतकमस्ति, तेन च समानगुणेषु भावेषु साक्षात्कृतेषु समुद्योगं विधत्ते । यथा च वृषो वृषदर्शने उत्कटमुपष्टम्भं करोति, एवमेव रजोगुणाधिका अवरसत्त्वा जनाश्चित्तचाञ्चल्याद् देवासुर-गन्धर्वयक्षरक्षःपिशाचभावाननुसन्धाय मनसा तादृशमेव चेष्टाचारविभ्रममातन्वते ।

अथ च आभ्यन्तरं करणम् ( बुद्ध्यहङ्कारमनांसि ) त्रैकालिकज्ञानवद् भवति । तेन च भूतमपि देवासुरादिचेष्टाप्रत्ययमनुस्मरति । कदाचित् तदा चावि-श्यते देवादिचेष्टितैरिति । यथा च स्वप्नावस्थायामदृष्टमप्यज्ञातमपि वस्तु प्रकाशते, कल्पनातीतं रहस्यं दृष्टिपथमानीयते । तत्सर्वमाभ्यन्तरकरणसहकृतमेव प्रतिभाति ।

एवञ्च भूतविद्यायां पञ्चमहाभूतानां सत्त्वादिगुणानां मनसश्च रहस्यात्मकं यत्किमपि प्रभावजातम्भवति, तत्सर्वमध्येयमम्भवति । मन्ये यथा औपनिषदिकी विद्या रहस्यभूता वर्तते, तथैव च भूतग्रामस्य चेष्टाचारविभ्रममखिलं रहस्यात्मक-मेव । अतश्च तादृशी रहस्यविद्या 'भूतविद्या' निरुच्यते ।

---

१. अष्टविकल्पो दैवस्तैर्यग्योनेश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥
( सां० का० ५३ )

## देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाणां निर्वचनम्—

**देवशब्दार्थः**—"दिवु" क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ( वै० सि० कौ० ) इति धातोः 'अ' प्रत्यये कृते सति देवशब्दः सिद्ध्यति। सर्वतः प्रथमं दिवुधातोरर्थाः विचारणीया भवन्ति । तदनन्तरमेव देवशब्दार्थः निर्णेतुं शक्यते । दिव्धातोरर्थाः—(१) क्रीडा ( to sport ) (२) विजिगीषा ( to conquer ) (३) व्यवहारः ( to traffice ) (४) द्युतिः ( to Shine ) (५) स्तुतिः ( to praise ) (६) मोदः ( to be glad ) (७) मदः ( to gratify ) (८) स्वप्नः ( to sleep ) (९) कान्तिः ( to desire ) (१०) गतिः ( to move ) (११) दानम् ( to give ) अर्थात् क्रीडाप्रवृत्तिः, विजयेच्छा, व्यवहारे प्रावीण्यं, तेजस्विता, प्रशंसायोग्यता, प्रसन्नता, सन्तुष्टिः, गतिः परोपकारश्चेति।

ज्ञानप्राप्तिश्च[1] देवलक्षणम् । सायणाचार्येण च मनुष्यार्थेऽतिदेवशब्दः प्रयुक्तः ।

(१) देवा ऋत्विजादयो ब्राह्मणाः[2] ।
(२) देवा व्यवहर्तारो यजमानाः[3] ।
(३) देवा व्यवहर्तारो मर्त्याः मनुष्याः[4] ।

तथा च राज्ञां कृते नरदेवः, ब्राह्मणानां कृते भूदेवः, । एवञ्च धनदेवादिशब्दाः प्रयुज्यन्ते मनुष्यविशेषार्थे। उपनिषत्सु च—'ये कर्मणा देवानपि यन्ति[5] ।' मानवेषु च देवाः सन्ति[6] ।

देवाः गमनवन्तो व्यवहरन्तो वा इन्द्रियसंज्ञकाः[7] ।
देवाः द्योतनाद् वाश्चक्षुरादीनि इन्द्रियाणि[8] ।

**मनुष्यदेहे देवः**—इन्द्रियाणां क्रीडाप्रवृत्तिः, तासां विजयविषयिणी वृत्तिः, शरीरस्य समस्तमेव व्यवहारजातं, तेजस्विता, सन्तोषः, विश्रामः, निद्रा, प्रेम, दानादिकं सर्वं कर्म इन्द्रियद्वारेणैव सम्पद्यते ।

**देवानामुद्भवः**—

'अधारयो रोदसी देवपुत्र प्रत्ने मातरा बह्वी ऋतस्य[9]' अत्र 'देवपुत्रे रोदसी' इति कथनेन रोदसी ( पृथ्वीलोकः—द्युलोकः ) देवपुत्रे स्तः । अर्थात् ययोः पुत्रा देवाः सन्ति तादृशे। एतेन च पृथ्वीद्युलोकयोर्मध्यस्थमन्तरिक्षमपि रोदसी पदेन ग्रहीतुं शक्यते। तेन त्रिप्रस्थानीया देवा भवन्तीति सिद्ध्यति। पृथिवीप्रस्थाना, अन्तरिक्षप्रस्थाना, द्युप्रस्थानाश्चेति। एवञ्च रोदसी देवानां मातृस्थानीये स्तः।

---

१. 'विद्वान्सो हिं देवाः'—शतपथब्रा० ३।७।३।१०। २. ऋ० वे० १।२३।१९।
३. ऋ० वे० १।१४७।१। ४. ऋ० वे० १।१९०।१। ५. तै० उ० २।८।
६. सुश्रुत० शा० अ० १। ७. ऋ० वे० १।१६४।३९ सायणभाष्यम्।
८. यजु० वे० ४०।४। ९. ऋ० वे० ६।१७।७।

**देवानां पितृविषये च श्रुतिः—**

'देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्[१]' अत्र च 'देवानां पितरं ब्रह्मणस्पतिं' इति कथनेन देवानां पिता ब्रह्मणस्पतिरिति प्रतीयते। एवं ही—देवानामेकः पिता, द्वौ मातरौ स्तः। पिता-ब्रह्मणस्पतिः, मातरौ-रोदसी ( द्यावा-पृथिव्यौ )। ऋग्वेदे समुपलभ्यते यत्—

परि प्रजातः क्रत्वा बभूथ भुवो
देवानां पिता पुत्रः सन्[२] ॥

**अर्थात् प्रजातः**—प्रसूतः क्रत्वा-स्वपुरुषार्थबलेन परिबभूथ-सर्वश्रेष्ठोऽभवत्। स खलु देवानां पिता पुत्रः सन् ( पुत्रत्वेन समुद्भूतः )। अत्र पिता एव पुत्र इति भणितम्, तेनेदमवम्यते, यत्—आत्मा वै पुत्र नामासि'[३] इत्यनुसारमात्मा एव जायायां प्रविश्य पुत्ररूपेण प्रकटीभवति। अथ च—'आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः'[४] अर्थात् देवानां आत्मा एक एवास्ते, स तु भुवनस्य गर्भः—लोकस्य प्रसवभूमिः, यथावशं स्वेच्छया चरति। एवञ्च—

'आत्मा देवानां जनिता प्रजानाम्[५]'
'आत्मा देवानामुत मानुषाणां[६]'

अर्थात् देवानामात्मा प्रजानां जनकः। आत्मा च देवामां मानुषाणां वा एक एव।

'देवो देवानां जनिमा विवक्ति[७]'
'देवो देवानामभयः शिवः सखा[८]'
'देवो देवानामसि मित्रो अद्भुतः[९]'

'देवो देवानां पवित्रमसि'[१०] एभिश्च सन्दर्भैः स्फुटमेवाभिव्यज्यते, यदेक एव देवशब्द आत्मापरक देवपरको वा प्रयुक्तो विद्यते। तथ्यं त्विदम्प्रतिभाति, यदेक एवात्मा सर्वेषु देवेषु निगूढः। तस्यैव शक्तिमंशतो गृहित्वा देवाः शक्तिमन्तो भवन्ति। तस्य भासा सर्वमिदं विभाति'।

'तेन देवत्वमृभवः समानश[११]।'
'तेन देवा अमृतमन्वविन्दन्[१२]'
'तेन देवा अयजन्त[१३]'
'तेन देवा असहन्त शत्रून्[१४]'

'तेन देवा व्यसहन्त शत्रून्'[१५] एभिश्च वचनैः सिद्ध्यति यत् तेनैवात्मना देवा अमरत्वं देवत्वं, शत्रुभिः सह युद्धसामर्थ्यञ्चाभजन्। तस्यैवात्मनः शक्तिरन्येषु देवेषु व्याप्ता विद्यते।

---

१. ऋ० वे० २।२६।३। २. ऋ० वे० १।६९।१। ३. शतपथब्रा० १४।९।४।२६।
४. ऋ० वे० १०।१६८।४। ५. ऋ० वे० ४।३।७ ६. अ० वे० ७।१११।१।
७. ऋ० वे० ९।९७।७। ८. ऋ० वे० १।३१।१। ९. ऋ० वे० १।९४।१३।
१०. तै० सं० १।४।२।१। ११. ऋ० वे० ३।६०।२। १२. अ० वे० १३।१।७।
१३. ऋ० वे० १०।९०।७। १४. सा० मं० ब्रा० २।३।२१। १५. अ० वे० ३।१०।१२।

'तव श्रिया सुदृशो देव देवा पुरु दधाना अमृतं सपन्तः[१]।'

हे देव ! तव शोभयैव देवाः दर्शनीया अभवन्। तवैव महिम्ना देवा अमरत्वमभजन्।

'महत्तद्वः कवयश्चारुनाम यद्ध देवा भवथ विश्व इन्द्रे'[२]

अर्थात्—एकस्यैव तस्य सत्यस्वरूपस्य सर्वव्यापिनः परमेश्वरस्य आश्रये सर्व एव भवन्तो वसन्ति। एतदेव भवतां यशः। तस्यैव दिव्यतत्त्वस्याङ्गत्वेन भवतां स्थितिरस्ति। एको देवः सर्वभूतेषु गूढः। देवाश्च यदा परब्रह्मगुणैरनुस्यूतास्तदैव ते देवत्वममरत्वञ्चावाप्नुवन्।

'मर्त्या ह वा अग्रे देवा आसुः। यदैव ते ब्रह्मणापुरथामृता आसुः[३]।'

'ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत।

'इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत्[४]॥

ब्रह्मचर्यतपसैव देवा अमरतां गताः। ब्रह्मचर्येणैव इन्द्रो देवेभ्यः स्वः-तेजः आभरत्-दत्तवान्। स्वस्मिंश्च शरीरे प्रत्यक्षमेवानुभूयते यदिन्द्रियाणि ब्रह्मचर्य-तपसैव तेजस्वितां बिभ्रति। आत्मशक्त्यैव च तेषु शक्तिरुपजायते।

पुरा[५] सर्वे देवाः समाना एवासन्। तेषु च सूर्योऽग्निरिन्द्रश्च स्वोत्कर्ष-प्रख्यापनाय तपश्चक्रुः। अग्निराचकाङ्क्ष यन्मयि तेजोवृद्धिः संजायेत, स च तेजस्वी बभूव। इन्द्रः बलमाचकाङ्क्ष, सोऽपि महाबली जातः। सूर्यश्चात्मनो भ्राजिष्णुतामकामयत, सोऽपि प्रकृष्टद्युतिपुञ्जोऽभवत्। एवञ्च ते देवास्तपोबलेन विशिष्टप्रभाववन्तोऽभवन्, तथा सम्भाव्यते मनुष्येष्वपि। ये खलु दृढनिष्ठया प्रबलेनात्मबलेन पौरुषमाचरन्ति, तेषां यशो वर्धते, बलं वर्धते किमपि वैशिष्ट्य-मुपजायते तेषु।

देवाश्च द्विविधाः समाख्याताः—कर्मदेवा आजानदेवाश्चेति। तथा च—

'ये कर्मणा देवत्मभिसंपद्यन्तेऽथ ते शतं कर्मदेवानामानन्दा स एक आजान-देवानामानन्दः'[६]

---

१. ऋ० वे०—५।३।४। २. ऋ० वे०—३।५४।१७।

३. शत० ब्रा०—११।२।३।६। ४. अ० वे०—११।५।१९।

५. सर्वे ह देवाः अग्रे सदृशा आसुः, सर्वे पुण्यास्तेषां सर्वेषां सदृशानां सर्वेषां पुण्यानां त्रयोऽकामयन्तातिष्ठावानः स्यामेत्यग्निरिन्द्रः सूर्यः ॥ १ ॥ ते अर्चन्तः श्राम्यन्श्चेरुः॥ ......तेऽतिष्ठावानोऽभवन्........ ॥ २ ॥ नो ह वा इदमग्रेऽग्नौ वर्च आस। यदिदमस्मिन् वर्चः सोऽकामयतेदं मयि वर्चः स्यादिति ......ततोऽस्मिन्नेतद्वर्चं आस ॥ ३ ॥ नो ह वा इदमग्र इन्द्र ओज आस। यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजः स्यादिति ...... ततोऽस्मिन्नोज आस ॥ ४ ॥ नो ह वा इदमग्रे सूर्ये भ्राज आस। यदिदमस्मिन्भ्राजः, सोऽकामयतेदं मयि भ्राजः स्यादिति ....ततोऽस्मिन्नेतद् भ्राज आस ॥ ५ ॥ (शत० ब्रा०, ४।५।४)

६. बृ० उ०—४।३।३३।

ये च जन्मना देवत्वमापन्नास्ते आजानदेवाः, ये च कर्मणा देवत्वमापन्नास्ते कर्मदेवा उच्यन्ते। तयोश्च कर्मदेवापेक्षया आजानदेवाश्शतगुणा उच्चैर्भवन्ति। एकत्र च दैवा मनोभवाः समाख्याताः—

ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते।
नौ अवन्तु ते नः पान्तु तेभ्यः स्वाहा[1]॥

अर्थाद् ये देवा मनस उत्पन्नाः, मनसैव सह निवसन्तो दक्षतापूर्वकं यज्ञकर्म समाचरन्ते, तेऽस्मानवन्तु। एतेन सर्वे देवाः मनसः पुत्राः मनसा च सह निवासशीला उक्ताः। अन्यत्र चैवमुक्तं यत्[2] ये देवा विविधसंभारसंभृता आसन्, ते पुरुषमाविविशुः। विराड्रूपस्य ब्रह्मणश्च पुरुषे प्रवेशो जातः। तस्य च विराट्पुरुषस्य सूर्यश्चक्षुरजायत, वातः प्राणोऽभूत्। अन्ये च भावा विविधैः रूपैः पुरुषमध्यतिष्ठन्। अतश्च विद्वान्स इमं पुरुषं 'ब्रह्म' मन्यन्ते। अस्मिश्च पुरुषे सर्वे देवा गावो गोष्ठे यथाऽध्यासते, तथा निवसन्ति।

एवञ्चेदमवसीयते, यदस्मिन् 'पुरुषे' सर्वा देवतास्तिष्ठन्ति। यथा लोके सूर्यचन्द्रवाय्वादिदेवास्सन्ति, यथैव पुरुषेऽपि पुरुषावयवभूतास्ते सन्ति। इन्द्रियाणि च गावः सन्ति। यश्च जीवात्मा स खलु गोपालः। यदा सः सर्वाणीन्द्रियाणि संयम्य समुचितेषु विषयेषु विनियुङ्क्ते, तदा सः यज्ञमातनुते। स च यज्ञो गोमेध इत्याख्यायते। यथा चेन्द्रियाणि वाजिन इवास्मिन् शरीररथे संनद्धानि मन्यन्ते, तदाऽसौ जीवात्मा सारथिरुच्यते। स चाश्वविनियन्त्रणादश्वमेधयज्ञमाचरति। एवञ्चायं पुरुषः शतं वर्षाणि यावत् पुरुषार्थयज्ञाचरणेन शतक्रतुरुच्यते। यश्च शतक्रतुः, स इन्द्रो भवति। इन्द्रश्च देवाधिपः इन्द्रियाणि च देवा उच्यन्ते, इन्द्रियाणाञ्चात्माधीनत्वादात्मा[3] 'इन्द्र' इत्युच्यते—

'इन्द्र आत्मा स इयते लिङ्ग्यतेऽनुमीयते येन तदिद्रियम्[4]'

(च० इ० १, चक्रपाणिः)

---

१. अ० वे०—४।११।

२. संसिचो नाम ते देवा ये संभारान् समभरन्।
सर्वं संसिच्य मर्त्यं देवाः पुरषमाविशन्॥ १३॥
गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन्॥ १८॥
रेतः कृत्वाऽऽज्यं देवाः पुरुषमाविशन्॥ २९॥
या आपो याश्च देवता या विराड् ब्रह्मणा सह।
शरीरं ब्रह्म प्राविशच्छरीरेऽधिप्रजापतिः॥ ३०॥
सूर्यश्चक्षुर्वातः प्राणं पुरुषस्य बिभेजिरे।
अथास्येतरमात्मानं देवाः प्रायच्छन्नग्नये॥ ३१॥
तस्माद्धि विद्वान् पुरुषमिदं ब्रह्मेति मन्यते।
सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते॥ ३२॥ अ० वे० ११।८।

३. 'इन्द्रशब्देन आत्मा उच्यते'—च० इ० १।२ (चक्रपाणिः)।

४. 'इन्द्रः शक्रादित्यभेदयोगभेदान्तरात्मसु' अमरकोषः १।३।४१ (रामाश्रमी टीका)।

एवञ्च संकल्पात्मकं मनः कल्पवृक्षो भवति। यथा च मनः संकल्पते, तथैव फलमश्नुते। अतश्च देवानां यथैकस्मिन्देवाधिदेवे सन्निवेशो भवति, तथैव सर्वेन्द्रियाणामध्यात्मत्वमायुर्वेदे समाम्नातमास्ते। आत्माश्रयत्वेन 'आत्मबुद्धिमन-इन्द्रियाणि' आध्यात्मिकान्युच्यन्ते।

अत्रेदमवधेयमस्ति यत् पुरुषोऽयं जीवात्मरूपो वेदे आलङ्कारिकरूपेण वर्णित आस्ते। ये चेन्द्रादयो देवाः सर्वे ते मानवदेहे समधितिष्ठन्ति। ये चाहङ्कारादव्यक्तादुद्भूतास्ते सर्वे शरीरे देवात्मकाः सन्तीति सततमनुसन्धेयम्। शरीराङ्गभूतानाञ्चैतेषामात्मा अधिष्ठानम्। एष आध्यात्मिकः पक्षः। यथा लोके सर्वव्यापक ईश्वरो जगन्नियन्ता वर्तते, यदधीना देवादयः स्व-स्वकर्माणि सञ्चालयन्ति, तथा शरीरे जीवात्मा भवति, यश्चेन्द्रियादीनि प्रेरयति शरीरव्यापारनिर्वहणाय। एष आधिदैविकः पक्षः[1]। एवञ्च लोकपुरुषयोः साम्यमगवन्तव्यम्। यतो हि लोके पुरुषे च समान एव नियमो वरीवर्ति। लोके परमात्मशक्तिमवाप्यैव सूर्याग्निवाय्वादिदेवाः स्वव्यापारेषु संलग्ना भवन्ति, तथैव देहेऽपि जीवात्मशक्तिमवाप्यैव नेत्रादीनीन्द्रियाणि स्वविषयेषु प्रवर्तन्ते। देवतानां वास्तविकं स्वरूपवगन्तुं पूर्वोक्तदिशा विचारणमावश्यकम्। नहि देवतानां स्वरूपज्ञानं विनेन्द्रियाणां याथार्थ्येन शक्यते।

मानवजीवनमेकं विशिष्टं यज्ञमास्ते। तस्मिंश्च यज्ञे समस्तानीन्द्रियाणि प्रत्यक्षमेव देवताः सन्ति, येषामर्चनं सन्तुष्टिराजीवनं विधीयते। एकस्मिन् मन्त्रे[2] वर्णितं यद् अथर्वणः शिरः संरक्षितो देवकोशोऽस्ति। प्राणस्तं शिरोऽभिरक्षति, अन्नं मनश्च तच्छिरः रक्षतः। अथर्वा ( अपगतः थर्वा—चाञ्चल्यं यस्मात् ) पदेन समाहितचित्तवृत्तिको योगी उच्यते। तस्य शिरसि देवकोशो वर्त्तते। इन्द्रियाणां समू-

---

१. 'स्वः स्वश्चैषां विषयोऽधिभूतं, स्वयमध्यात्मं, अधिदैवतं तु, बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य, वाचोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः पायोर्मित्रः, प्रजापतिरुपस्थस्येति। ( सु० शा० १।७ ) एवमयं लोकसंमितः पुरुषः—यावन्तो हि लोके भावविशेषणाः, तावन्तः पुरुषे, यावन्तः पुरुषे, तावन्तो लोके इति, बुधास्त्वेवं द्रष्टुमिच्छन्ति।' ( च० शा० ४।१३ ) ……यथा ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यन्तरात्मिकी विभूतिः। ब्रह्मणो विभूतिर्लोके प्रजापतिरात्मनो विभूतिर्लोके सत्त्वम्, यस्त्विन्द्रो लोकेऽहंकारः सः आदित्यस्त्वादानम्, रुद्रो रोषः:, सोमः प्रसादः, वसवः सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्वेद्रियाणि सर्वेन्द्रियार्थाश्च, तमो मोहः, ज्योतिर्ज्ञानम्, यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानम्, यथा त्रेता तथा यौवनम्, यथा दापरं तथा स्थाविर्यं, यथा कलिरेवमातुर्यम्, यथा युगान्तस्तथा मरणमिति। एवमेतेनानुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणामग्निवेश ! सामान्यं विद्यात्। ( च० शा:—५।५ )

२. तद्वा अथर्वणः शिरो देवकोशः समुब्जितः।
तत् प्राणो अभिरक्षति शिरो अन्नमथो मनः॥ ( अ० वे० १०।२।२७ )

होऽधिष्ठितः। नेत्रे, कर्णौ, नासिके, जिह्वा चेति सप्त देवाः शिरसि प्रतिबद्धाः। आत्माधिष्ठिते च देहे तानि स्वस्वचेष्टाश्चेष्टयन्ति।

तत्र च द्विविधेषु देवेषु–पूर्वोक्तानीन्द्रियाणि आजानदेवकोटौ परिगणनीयानि। तदितराणि च हस्तौ, पादौ, मुखं, गुदोपस्थे च सप्तकर्म-देवकोटौ सन्निवेश्यानि।

ब्राह्मणग्रन्थेषु[1] च देवानामध्यात्मत्वमुररीकृतं विद्यते। अथ च श्रुतिरुपलभ्यते यद् जीवात्मनः पुरुषशरीरेऽवस्थानं ये[2] विदन्ति, त एव लोके प्रसृतं परब्रह्म-वेत्तुमर्हा भवन्ति। यत उभयत्रापि साधर्म्यं विद्यते। यथा जीवात्मा साकमिन्द्रियैः शरीरमध्यास्ते, तद्वत्परब्रह्म सूर्यादिदेवैः सह सृष्टौ समवतिष्ठते।

अथर्ववेदोदितेन ज्ञानेन सर्वेषामेव देवानां शरीरेऽधिष्ठानमिति ज्ञानमेव परमात्मसंवेदकरम्। तथा चैष देहो देवानामात्रसथभूतमास्ते। उदात्तकर्मभिश्चायं पुण्यमयो यथा भवेत्तथा यतितव्यम्। विशुद्धेन, पूतेन, सदाचरणेन शरीरमिदं बलवत्तरम्; द्रढिष्ठमाशिष्ठं स्यादिति यत्नो विधेयः। शरीरेऽस्मिन्[3] प्राणोऽग्निः वागग्निः, श्वासोच्छ्वासावश्विनौ, इन्द्रो मनः, दिशः श्रोत्रं, आपो वीर्यं एवमेव सर्वे देवाः समाविष्टाः। लोकपुरुषयोः[4] साधर्म्यज्ञानं हि निःश्रेयसे प्रभवति। शरीरे देवाधिदेवो परमपुरुषः साक्षिरूपेणावतिष्ठते। जीवात्मा च कर्मानुसारमनुसरति संसारम्। देवगणाः पुरुषे लोके च स्व-स्वधर्मं समाचरन्ति।

देवाः शरीरमिदमधितिष्ठन्तीति कृत्वा सत्यान्न प्रमदितव्यम्, धर्मान्न प्रमदितव्यम्, भूत्यै न प्रमदितव्यम्[5]। अथ च रजस्तमोभ्यां निर्मुक्ता ज्ञानवन्तो रागद्वेषरहिता आप्ता यद्युपदिशन्ति, तदनुवर्तनीयम्। उपदिष्टार्थस्य च सम्यगवगमो विधेयः। पापाचाराः, शठाः, क्रूराः, निष्कृपाः, ईर्ष्यालवो नराधमास्त्यक्तलज्जाचारशीलसद्गुणास्त्याज्याः। धैर्यस्मृतिमन्तो वृद्धाः, सन्मार्गोपदेशकाः,

---

१. प्राणो वै समिधः। प्राणो वै तनूनपात्। वाग् वै त्वष्टा (ऐ० ब्रा० २।४)
मनो वै यज्ञस्य मैत्रावरुणः वाग् यज्ञस्य होता (ऐ० ब्रा० २।५)

२. ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् (अ० वे० १०।७।१७)
......एवमयं लोकसंमितः पुरुषः—यावन्तो हि लोके भावविशेषाः, तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके इति बुधास्त्वेवं द्रष्टुमिच्छन्ति (च० शा० ४।१३)।

३. अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥ (ऋ० वे० १०।१२५।१)

४. लोके विततमात्मानं लोकं चात्मनि पश्यतः।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति॥ (च० शा० ५।२०)

५. तैत्तिरीयोपनिषद्—अनु० ११ द्रष्टव्यः।

गतशोकादिव्यथाः, सर्वभूतहिते रताः सदाचारपरायणा आप्ता यमनियमपराश्च सेव्याः[१]।

यतो हि विकारैरुपसृष्टे चेतसि देवाः कुप्यन्ति विविधाश्चापदः समापतन्ति। अतश्च देवबुद्धया स्वशरीरस्य सर्वमेव कृत्यमनुष्ठेयम्। इदं मानवशरीरं महता पुण्यपण्येन क्रीतं भवाब्धिपोतं महनीयपुरुषार्थपूर्त्यर्थञ्च परमेश्वरेणादायि। अतो नेदं मानवजन्म मानवबुद्ध्याऽपि तु देवबुद्ध्या नेयम्। तथा हि जीवनमभ्युदयोन्मुखमुत्कृष्टं जायेत, संसारोऽयं देवायतनमिव परमशान्तिमयं सम्भवेत्।

अथर्ववेदे[२] चैवं समाम्नातं यद् देहोऽयं देवानां पूः=नगरी, सा च अष्टाचक्रा—( मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्ध-ललना-आज्ञा-सहस्रारचक्राणि ) नवद्वाराणि—( द्वे श्रोत्रे, द्वे अक्षिणी, द्वौ नासापुटौ, मुखं, मूत्रद्वारं, मलद्वारञ्चेति नवद्वाराणि ), अयोध्या ( अजय्या ) तस्यां ज्योतिषाऽऽवृतः ( ज्ञानालोकसमन्वितः ) हिरण्ययः कोशः ( हृदयकोशः ) स स्वर्गः ( सुष्ठु अर्ज्यते इति स्वर्गः )।

तत्र तेजोमये कोशे त्रयोऽराः[३] ( सत्त्वं रजस्तम इति त्रयो गुणाः )। तत्र जीवात्माऽधितिष्ठति, तत्तु ब्रह्मज्ञानिनो विदन्ति। एवञ्च जीवात्मा हृद्यवस्थितो भवति। अथ च पुण्डरीके जीवात्मा वसति[४], तद् ब्रह्मविदो विदुः। छान्दोग्योपनिषदि (८।१।१) च इयं देवपुरी ब्रह्मपुरनाम्नाऽभिहिता। हृदयञ्चात्मनो[५] निवासस्थानमाख्यातम्।

---

१. आप्तोपदेशप्रज्ञानं प्रतिपत्तिश्च कारणम्।
विकाराणामनुत्पत्तावुत्पन्नानां च शान्तये॥
पापवृत्तवचः सत्त्वाः सूचकाः कलहप्रियाः।
मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः॥
परापवादरताश्चपला रिपुसेविनः।
निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः॥
बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः।
वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः॥
सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः।
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः॥ ( च० सू० ७।५५-५९ )

२. अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः॥ ( अ० वे० १०।१।३१ )

३. हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।
तस्मिन् यत् यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः॥ ( अ० वे० १०।२।३१ )

४. पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्।
तस्मिन् यत् यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः॥ ( अ० वे० १०।२।३२ )

५. अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म।

'देवानां पूः' इत्यनेन देवनगरी—इन्द्रियग्राम इति ज्ञेयम्। देवाश्चेन्द्रियाण्यधिष्ठिता इति प्रागुक्तम्। पुनश्च विशद्यतेऽयमर्थः—चतुर्विधस्थूलशरीराणि (जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि) यानि तानि मातापितृभुक्तान्नोत्पन्नत्वेनात्माच्छादकत्वेन[1] चान्नमय-कोशाख्यानि। सुखदुःखादिभोगाधारत्वेन च स्थूलशरीरम्, तत्तदिन्द्रियैस्तत्तद्विषयोपलब्धेश्च 'जाग्रत्' इत्युच्यते। एतच्चतुर्विधस्थूलशरीरव्यष्ट्युपगतं चैतन्यं सूक्ष्मशरीराभिमानमजहत् प्रत्येकं स्थूलशरीरे 'अहम्' इत्यभिमत्य वर्तमानमिति 'विश्वः' कथ्यते। एतत्समष्ट्युपहितं चैतन्यं सर्वप्राणिसमूहेषु 'अहम्' इत्यभिमानेन वर्ततेऽतो वैश्वानरः, विराट् इति च कथ्यते।

पूर्वोक्त जाग्रदवस्थायामेतौ विश्व-वैश्वानरौ दिग्वायुसूर्यवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेन्द्रियपञ्चकेन क्रमशः शब्द-स्पर्श-रूप-रस-गन्धान् तथा अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वाक्-पाणि-पाद-पायूपस्थेन्द्रियपञ्चकेन क्रमशो वचनादानगमनमलत्यागानन्दान् एवं चन्द्रचतुर्मुखशंकरविष्णुभिः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमशः संकल्पनिश्चयाहङ्कारचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतः।

अत्र च तेषां तेषामिन्द्रियाणां तत्तद्देवनियन्त्रितत्वख्यापनादिन्द्रियाणां देवाधीनत्वमाख्यातम्। अतश्च शरीरमिदमिन्द्रियवशगमित्येतावता देवानां पूरुच्यते। शतपथब्राह्मणे (१२।९।१।१३-१४) तथा ऐतरेयब्राह्मणे (१।१८) द्यावापृथिवी, सूर्याचन्द्रमसौ, द्वौ नासापुटावश्विनाविति ख्यातौ। तैत्तिरीयब्राह्मणे (१।७।३) 'अश्विनौ वै देवानां भिषजौ' इत्युक्तम्। तत्र अश्विशब्देन प्राणापानौ समाख्यातौ, तौ चेन्द्रियदेवानामहर्निशं चिकित्सां विदधतः। निरुक्ते (१३।२६) देवानां देवकर्मणां इन्द्रियाणामित्युक्तम्। बृहद्देवतायाञ्च (७।१२६)—

सूर्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्मृतौ।
अहोरात्रौ च तावेव स्यातां तावेव रोदसी॥

---

१. स्थूलशरीरमन्नविकारत्वादन्नमयकोशः, स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्रदिति व्यपदिश्यते। एतद् व्यष्ट्युपहृतं चैतन्यं विश्व इत्युच्यते, स्थूलशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात्। एतत्समष्ट्युपहृतं चैतन्यं वैश्वानरो विराडित्युच्यते, सर्वशरीराभिमानित्वाद् विविधं राजमानत्वाच्च। 'एतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धानग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वागीन्द्रियपञ्चकेन क्रमाद्वचनादानगमनविसर्गानन्दांश्चन्द्रचतुर्मुखशंकराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहंकारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात्संकल्पनिश्चयाहंकारचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतः 'जागरितस्थानो बहिःप्रज्ञः' इत्यादि श्रुतेः।

—वेदान्तसारः, पृ० ४५ (स्थूलप्रपञ्चनिरूपणम्)।

एभिश्च सन्दर्भैरिन्द्रियार्थे देवशब्दप्रयोगस्य आर्षत्वमुपपादितमेव ।

असात्म्येरिन्द्रियार्थसंयोगाच्चेन्द्रियाणामैन्द्रियकरोगाः प्रादुर्भवन्तीति कृत्वा, देवाभिधेयैरिन्द्रियैर्व्याधयो जायन्ते इति स्पष्टमेव ।

तथा च भूतविद्यायां सर्वतः प्राक् देवनिर्वचनमत्यन्तमुपयुज्यते । प्रज्ञापराधाच्चेन्द्रियाण्यनियन्त्रितानि स्वविषयेषु प्रवर्तन्ते, तथा सति प्रज्ञापराधजासात्म्येन्द्रियार्थसंयोगाद् व्याधयो भवन्ति । यथा च 'देव'शब्देन इन्द्रियाणि गृहीतानि भवन्ति, तत्सर्वमत्र विशदं निरूपितम् ।

**देवयोनिविशेषा :**

विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।।
( अमरकोषः १।१।११ )

विद्याधराः—विद्यानां चतुर्दशविद्यानां धारका वेत्तारः ।

अप्सरसः[1]—अद्भ्यो याः सरन्ति, नन्दनकाननपुष्करिणीवारिविहरणशीला देवाङ्गनाः ।

यक्षाः[2]—यक्ष्यन्ते पूज्यन्ते ये ते पूजार्हा देवविशेषाः ।

रक्षांसि—रक्षन्त्येभ्य आत्मानं जना इति रक्षांसि, 'रक्ष पालने' ।

गन्धर्वाः[3]—गन्धं सौरभमर्वन्ति ये ते गन्धप्रियाः देवाः, 'अर्व गतौ' ।

किन्नराः[4]—अश्वमुखत्वात् कुत्सिता नराः, किन्नराः ।

पिशाचाः—मांसभोजिनो भूतविशेषाः ।

गुह्यकाः[5]—गूहन्ति निधिं रक्षन्ति ये ते गुह्यकाः, 'गुहू संवरणे' गुह्यं गोपनीयं कं सुखं येषां ते गुह्यकाः ।

सिद्धाः[6]—सिद्धिरस्त्येषामिति सिद्धाः ।

---

१. स्त्रियां बहुष्वप्सरसः स्ववेश्या उर्वशीमुखाः ।
घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ।।
सुकेशीमञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः ।। ( अमर० १।१।५१-५२ )

२. कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ।।
किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविलः श्रीदपुण्यजनेश्वराः ।। ( अमर० १।१।६९ )

३. हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् । ( अमर० १।१।५२ )

४. स्यात् किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः । ( अमर० १।१।७१ )

५. निधिं रक्षन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञकाः—व्याडिः ।

६. सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः · नित्ये प्रसिद्धे इति हैमः ।

भूताः[1]— भूतिरैश्वर्यमस्त्येषामिति भूताः ।

अमी विद्याधरादयो दश, देवा योनिरेषां ते देवयोनयः, देवांशका भवन्ति ।

**देवशब्दस्य परिभाषा—**

यो हि धनधान्यादिकं ददाति, यश्च दीप्तिमान्, यश्च कांत्या विद्योतते, यस्य स्थानं दिवि ( आकाशे ) वर्त्तते, स खलु देव एव देवतापदवाच्यः । तथा च—

देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा ।

यो देवः सा देवता[2] ।

निरुक्तकारेण च सर्वा देवताः श्रेणित्रये विभक्ताः— १. भूमिदेवाः, २. अन्तरिक्षदेवाः, ३. आकाशदेवाश्च । तत्राग्निदेवस्य स्थानम्— भूमिः । वायोरिन्द्रस्य वाऽन्तरिक्षम् । सूर्यस्य स्थानम् द्युः आकाशः । एतेषामैश्वर्यशालिनां देवानां बहूनि नामानि सन्ति । विभिन्नैश्च नामभिर्विभिन्नानां कर्मणां बोधो जायते । यथा हि— अमरः, निर्जरः, देवः, त्रिदशः, विबुधः, सुरः, सुपर्वा, सुमनाः, त्रिदिवेशः, दिवौकाः, आदितेयः, दिविषत्, लेखः, अदितिनन्दनः आदित्यः, ऋभुः, अस्वप्नः, अमर्त्यः, अमृतान्धः, बर्हिमुखः क्रतुभुक्, गीर्वाणः, दानवारिः, वृन्दारकः, दैवतम् ( पु—न ) देवता ( स्त्री ) इति षड्विंशतिः देवनामानि[3] । स्वं स्वमर्थमभियुञ्जन्ति ।

नवविधाश्च गणदेवता भवन्ति—आदित्याः ( अदितेरपत्यानि पुंमांसः ), विश्वे ( विशन्ति कर्मस्विति विश्वे 'विशप्रवेशने' धातुः ) वसवः—( वसन्तीति वसवः 'वसनिवासे' धातुः ), तुषिताः ( तुष्यन्तीति तुषिताः 'तुष् तुष्टौ' धातुः ), आभास्वराः ( आ समन्ताद् भासनशीलाः 'भासृ दीप्तौ' धातुः ), अनिलाः ( अनन्त्यनेनेत्यनिलाः 'अन प्राणने' धातुः ), महाराजिकाः ( महती राजिः पंक्तिर्येषां ते ), साध्याः ( साध्यं सिद्धिः साऽस्त्येषामिति साध्याः, 'साध संसिद्धौ' धातुः ), रुद्राः ( रोदयन्त्यसुरानिति रुद्राः, 'रुदिर् अश्रुविमोचने' धातुः, ) इत्येतेषाञ्च विशिष्टा भेदा भवन्ति । तद्यथा—आदित्याः १२, विश्वे १०, वसवः ८, तुषिताः ३६, आभास्वराः ६४, अनिलाः ४९, महाराजिकाः २२२, साध्याः १२, रुद्राः[4] १० संख्याका भवन्ति ।

**असुराः**—अस्यन्ति क्षिपन्ति देवानिति असुराः 'असु क्षेपणे' । यद्वा न सुराः असुराः, सुरद्वेषिणः सुरविरुद्धाः । अथवा असुषु रमन्ते ये ते असुराः, यद्वा असून् प्राणान् रान्ति आददते इति असुराः ।

**असुरनामानि**— असुरः, दैत्यः, दैतेयः, दनुजः, इन्द्रारिः, दानवः, शुक्र शिष्यः, दितिसुतः, पूर्वदेवः, सुरद्विट् इति दशनामानि ।[5]

---

१. भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते ।
प्राप्ते वित्ते समे सत्ये देवयोन्यन्तरेषु च ॥ ( मेदिनीकोषः )

२. निरुक्तम्—७।४।१५ । ३. अमरकोषः—१।१।७-८ ।

४. अमरकोषः—१।१।१० रामाश्रमीटीका । ५. अमरकोषः—१।१।१२ रा० टी० ।

ऋग्वेदेऽसुरशब्देनोत्कृष्टानां देवानामभिधानं कृतमास्ते। यथा वरुणोऽग्निरिन्द्रश्चासुरा आख्याताः। परन्त्वत्र सर्वथा वैपरीत्येनासौ शब्दः देवशत्रुषु राक्षसेषु च रूढोऽभवत्। ब्राह्मणग्रन्थेषु च राक्षसपर्यायत्वेनाय शब्दो व्यवहृतः। देवासुरयोश्च कलहवर्णनं दरीदृश्यते। तैत्तिरीयब्राह्मणानुसारं प्रजापतिः स्वोच्छ्वासेनासुरान् जनयामास। तत्रैवान्यस्मिन् स्थले चेदं प्रतिपादितं यत् प्रजापतिः स्वयमेव सगर्भोऽजायत तदुदराच्चासुरा उत्पन्ना इति शतपथब्राह्मणे तु ब्राह्मणः निःश्वसितेनासुराणां जन्म निगदितम्। तैत्तिरीयारण्यकस्त्वेवं स्वमतमुपस्थापयति यत् प्रजापतिः जलाद् देवान्, मनुजान्, पितॄन्, गन्धर्वान् अप्सरस उत्पादयामास। जलस्य बिन्दवो भूमौ पतितास्ते चासुराः राक्षसाः पिशाचाश्च समुद्भूताः। मनुश्च प्रजापतिमेव तेषां जनयितारं मनुते। विष्णुपुराणानुसारं ते ब्रह्मण उदरोरुमध्यादजायन्त। वायुपुराणानुसारञ्च ते प्रजापतेरेव पुत्राः। ब्राह्मणग्रन्थानुसारं असुशब्दः श्वासे वर्तते, श्वासाच्च ते समुद्भूताः, अतस्तेऽसुरा इति कथ्यन्ते। अतिप्राचीनकालाच्छब्दोऽयं देवानां शत्रुषु व्यवहृतो वर्तते, तेषु च दैत्याः, दानवाः, अन्ये च कश्यपवंशजा गृह्यन्ते।

यास्काचार्येण महाप्राणा अमरधर्माणोऽसुरा व्याख्याताः। असुराश्च प्रकृतितः प्राणवन्तो दुर्धर्षा महाबलशालिनो मायाविनो भीमाः, महापराक्रमाः, दुष्परिहार्यवीर्याः, भयङ्कराः क्रुद्धाः संहारकारकाः, विपुलप्रभावा भवन्तीति बहुत्र समवाप्यन्ते तादृशाः सन्दर्भाः।

ऋग्वेदे तु महान्तो देवा असुरसंज्ञयाऽभिहिताः। तत्र चासुरशब्दाभिधानस्य तात्पर्यादिदमवगम्यते, यत् ते 'दिव्यगुणशालिनो रक्षितारः कृपालवोऽपि सन्तः क्रुद्धाः सन्तोऽपकारकारिणोऽप्रतिवार्यवीर्या महाभयङ्करा भवन्ति' इति द्योतनार्थमेव तेषामसुरसंज्ञाकृता। तथा च—

गभीरवेपा असुरः, सुनीथः (सविता),[1] हिरण्यहस्तोऽसुरः, सुनीथः (सविता),[2] बृहच्छ्रवा, असुरो बर्हणाकृतः (इन्द्रः),[3] द्यौरसुरो (द्यौः),[4] त्वमग्ने असुरो महो दिवः (अग्निः),[5] पिता यज्ञानामसुरो विपश्चिताम् (अग्निः),[6] घृतप्रसत्तो असुरः सुशेवो (अग्निः),[7] गावा चेतिष्ठो असुरो मघोनः (अग्निः),[8] अतूर्तपन्था असुरो मयोभूः (रुद्रः),[9] पूषा असुरो दधातु नः (पूषन्),[10] असुरः पिता न (पर्जन्यः),[11] असुरो न होता (इन्द्रः),[12] जनानां यो असुर विधर्ता (मरुद्गणः),[13] असुरो विश्वे देवा (वरुणः),[14] प्रीन्त्स्नमूर्ध्नो असुरश्चक्र आरभे (पवमानः सोमः),[15] सोमो असुरो वेदभूमनः (सोमः),[16] असुरो वेपतेमती (अग्निः),[17] हव एषामसुरो

१. ऋ० वे० १।३५।७। २. १।३५।१०। ३. १।५४।३। ४. १।१३१।१।
५. २।१।६। ६. ३।३।४। ७. ५।१५।१। ८. ५।२७।११।
९. ५।४२।१। १०. ५।५१।११। ११. ५।८३।६। १२. ७।३०।३।
१३. ऋ० वे० १।५६।२४। १४. ८।४२।१। १५. ९।७३।१। १६. ९।७४।७।
१७. १०।११।६।

मक्षत (अग्निः)[१], असुरः प्रचेता (वरुणः),[२] नृन् पाह्यसुर त्वमस्मान् (इन्द्रः)[३]...... वरुणः-असुरः (वरुणः),[४] इकावां एषो असुर प्रजावान् (अग्निः)[५] त्वा नूनमसुर (इन्द्रः),[६] प्रपस्त्यमसुर हर्यतं (इन्द्रः),[७] महो असुर (इन्द्रः)[८]।

एवञ्च रजस्तमोभ्यामुपहतमासुरभावमापन्नं मनः 'असुर' शब्देनाभिधेयं भवति, तच्चेह प्रकटीकृतमसुरशब्दनिर्वचनेन ।

**गन्धर्वाः**—गन्धर्वाः देवैः सह सम्बद्धाः। ऋग्वेदे चैतेषां स्तुतिमन्त्रा उपलभ्यन्ते। एते किल प्रोज्ज्वलायुधाः, प्रलम्बकेशा वर्णिताः। अथर्ववेदे यजुर्वेदीयतैत्तिरीयसंहितायाञ्च सूर्यश्चन्द्रो मेघश्च गन्धर्वसंज्ञयाऽभिहिताः।

सूर्यो गन्धर्वो यस्य मरिचयोऽप्सरसः।
चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसः ।।
पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसः[९] ।

गन्धर्वश्च 'अभ्रिय' शब्देनान्तरिक्षवासित्वेन परिगणितः। २७, २८ चान्द्रनक्षत्राणि दक्षस्य सुतात्वेन स्वीकृतानि, चन्द्रश्च गन्धर्वस्तासां पतिरुक्तः[१०]।

गन्धं सौरभमर्वति इति गन्धर्वः 'गन्धर्वस्तु नभश्चरे' इति हैमः। एते स्वर्गीया देवयोनिविशेषाः रहस्यवेत्तारः। ते हि स्वर्गीयं महिमानमुद्भावयन्ति। ते किल गगनचारिणो वायुमण्डले वा विचरणशीलाः। ते च देवेभ्य सोमरसनिर्माणं विदधति। ते स्त्रीविषये नूनं पक्षपातिनः स्त्रीषु च तेषां किमपि विलक्षणं साभिलाषं मनः। अथर्ववेदे च तेषां संख्या ६३३३ कथिता। ते हि इन्द्रसद्मनि विविधेषु कार्येषु नियोज्यन्ते। ते च साङ्गीतिकाः, गायकाश्च देवानामुत्सवेषु व्यापृता भवन्ति। विष्णुपुराणे तु तेषां योनिर्ब्रह्मा निगदितः। अन्यत्र च ते कश्यपेन स्वभार्यायां अरिष्टायां जाता इति प्रतिपादितम्। हरिवंशपुराणानुसारं तु ते ब्रह्मण नासिकातो जाताः। अन्यत्र च गन्धर्वाः मुनिना कश्यपेन स्वभार्यायामुत्पन्ना इति वर्णितम्। गन्धर्वेषु चित्ररथः प्रधानोऽभवत्। तेषां स्त्रियः अप्सरसोऽभूवन्। तेषां नगराणि समृद्धानि शोभायुक्तानि समाख्यातानि, विष्णुपुराणे गन्धर्वाणां नागैः सह युद्धवर्णनमास्ते। गन्धर्वैश्च नागानां राज्यं धनञ्चापहृतम्। नागैश्च स्वरक्षार्थं विष्णुः प्रार्थितः। विष्णुश्च पुरुकुत्साभिधेयतया तेषां साहाय्यं चकार। गन्धर्वांश्च पराजितवान्[११]।

**अप्सरसः**—अप्सरसः किल देवेन्द्रस्याधिपत्ये दिव्यलोके तिष्ठन्ति। वेदेषु न तासां विशिष्टं पदमाख्यातम्। उर्वशीप्रभृतयस्तु महाकाव्येषु वर्णितचराः। रामायणे पुराणेषु च तासां प्रसूतिः समुद्रमन्थनादित्याम्नातम्। तासामुत्पत्तिवेलायां

---

१. ऋ० वे० १०।७४।२। २. १।२४।१४। ३. १।७४।१। ४. २।२७।१०।
५. ४।२।५। ६. ८।९०।६। ७. १०।९६।११। ८. १०।९९।१२।
९. तै० सं० ३।४।७।१-२। १०. तै० सं० २।३।५।१-३।
११. जोन डाउसन-क्लासिकल डिक्शनरी।

नैव देवा न चासुरास्ता अङ्गीचक्रुरपि तु ताः समस्तस्य समाजस्योप-भोग्यतां गताः।

पुराणेषु विभिन्ननामभिस्तासामनेके गणा उक्ताः। वायुपुराणे चतुर्दश, हरिवंशपुराणे सप्तभेदा वर्णिताः। तत्र काश्चन दैविकाः काश्चन लौकिका आसन्। तत्र दैविकाः दश, लौकिकाश्चतुस्त्रिंशत्। ताः किल स्वर्गीयमानन्दमभिवर्षन्ति, शूरांश्च प्रीणयन्ति। उर्वशी-मेनका-रम्भा-प्रभृतयस्तु तपस्विनां तपोभङ्गाय सुरेश्वरेण प्रयुक्ताः। काशीखण्डे तु पञ्चत्रिंशल्लक्षपरिमिता संयाताः, तासु च षष्ट्य-धिकसहस्रसंख्याकाः प्रमुखाः। ताश्च गन्धर्वाणां पत्नीत्वेनाभिहिताः। काले काले च ताः पदच्युता मर्त्यलोके प्रेषिताः। एताश्च स्वस्य आकृतिभेदमुपकल्पयितुं प्रभवन्ति[1]।

निरुक्तिः—अद्भ्य सरन्ति सरतेरसुन् ( उ० ४।२३७ )

स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः।
घृताचीमेनकारम्भा उर्वशी च तिलोत्तमा॥
सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः[2]॥

अप्सु सरन्तीति अप्सरसः। अपपूर्वकात् 'सृ'धातोः—औणादिकसूत्रेण ( ४।२३७ ) असिप्रत्यये कृते सति अप्सरा इति रूपं सिद्ध्यति[3]।

यजुर्वेदे ( १८।३९ ) सूर्यो गन्धर्व इत्याख्यातः, तद्गभस्तयश्चाप्सरसः। कतिचन मन्त्रेषु च-अग्निः, चन्द्रः, वायुः, मनश्च गन्धर्व इत्याख्यातः, ओषधयः, नक्षत्राणि, आपश्च तेषामप्सरसः समाख्याताः, तत्र गन्धर्वाप्सरसोर्दाम्पत्यमिव, वह्निसूर्ययोरोषधिकिरणयोर्दाम्पत्यं वर्णितम्। तेषाञ्च मन्त्राणां वैवाहिके कर्मणि पुंसोर्मिथुनीभावोपदेशाय प्रयोगो विधीयते। अन्यत्र च यजुर्वेदे ( १५।१५-१९ ) अग्निवायुसूर्यमेघवर्णनेन सह पुञ्जिकस्थला, क्रतुस्थला, मेनका, सहजन्या, प्रम्लो-चन्ती, विश्वाची, घृताची, उर्वशी, पूर्वचित्ति-प्रभृत्यप्सरसां द्वन्द्वं वर्णितम्। इह चाप्सरसां वर्णनस्य सङ्गतिः कथं संगच्छते, इति जिज्ञासायामप्सरःपदस्य यौगिकार्थपर्यालोचनेन अप्सु सरन्तीति व्युत्पत्त्या 'अप्सरः' इति पदेन 'विद्युत्' शब्दग्रहणं कर्तुं शक्यते।

अप्सरा 'अप्सारिणी विद्युत्' इत्याख्याने विद्युता सह अपां सम्बन्धोऽपि भवति। शतपथब्राह्मणे च विद्युदपां ज्योतिः कथ्यते[4]। ऐतरेय[5]ब्राह्मणे विद्युद्

---

१. जोन डाउसन-क्लासिकल डिक्शनरी।

२. अमरकोषः-१।१।५२ रामाश्रमी टीका।

३. यास्क-निरुक्तम्-५।१३।

४. 'विद्युद्वाऽपां ज्योतिः'-शतपथब्रा० ७।५।२।४९।

५. 'वृष्टिर्वै याज्या विद्युदेव, विद्युद्धीदं वृष्टिमन्नाद्यं संप्रयच्छति।' ( ऐतरेयब्रा० २।४१ )

जलमभिवर्षतीति वर्णितम्। जैमिनिब्राह्मणे[1] विद्युद् जले तिष्ठतीति कथितम्। तैत्तिरीयोपनिषदि[2] च वैद्युतोऽग्निः अपां सन्धानमाचरतीति वर्णितम्। यजुर्वेदे[3] (१५।१८) विश्वाची-घृताचीसंज्ञे द्वे अप्सरसी वर्णिते, जलं चायुधरूपेण वर्णितम्। ऋग्वेदे (९।७८।३) अप्सरसः समुद्रीया आख्याताः। अन्यत्र च ऋग्वेदे (१०।१०।४, १०।१५।१०) अत्या, अप्या, योषा (जलस्त्रियः) इत्याख्यातम्। अथर्ववेदे (२।२।३) अप्सरसां निवासस्थानं समुद्र[4] आख्यातः। तत्रैव (२।२।४) एकं सम्बोधनं 'अभ्रिये दिद्युत्' इत्यास्ते। दिद्युत्पदस्य विद्युदित्यर्थः ग्रिफिथमहोदयेन प्रतिपादितः।

अथर्ववेदे[5] (४।३।७३) अप्सरसां नदीगमनमाख्यातम्। एभिश्च सन्दर्भैरप्सरा जलविहारिणी विद्युदिति प्रतीयते। 'घृतमश्वतीति घृताची' इति व्युत्पत्त्या घृताची विद्युद् जलेन संबद्धाऽभिहिता। घृतञ्च जलपर्यायत्वेन निघण्टु (१।१८) ग्रन्थे निगदितम्। 'मोनियर विलियम्स'[6] महोदयः अप्सरसामप्सु वारिदमण्डले च सञ्च-रणम्, समुद्रमन्थनाच्च तासां प्रसूतिमाख्याति।

यजुर्वेदे (१५।१९) उर्वशी-पूर्वचित्तिसंज्ञे द्वे अप्सरसी वर्णिते, तत्र च विद्युद्-ध्वनिः विद्युज्ज्योतिश्च हेति (आयुधः) प्रहेति (महानायुधः) पदेनेरितम्। अथ च ऋग्वेदे (१०।९५) शतपथब्राह्मणे च (११।१।५।१) पुरुरवा उर्वशी च सहैव वर्णिते। 'पुरूरवापदस्य निर्वचनेन च (पुरु-बहुधा रोरूयते-स्तनयित्नुलक्षणमनेक-विधमत्यर्थं शब्दं करोतीति पुरुरवा) मेघार्थकोऽयं शब्दः प्रतीयते। तत्सहचरि-तत्वात् (पत्नीत्वेनाङ्गीकारात्) उर्वशी च विद्युदेवेति संगच्छते।

निरुक्ते (१०।४६ स्थले) पुरुरवा (११।३५ स्थले) च उर्वशी वर्णिता। तत्र "स्कन्दस्वामी"[7] विवृणोति यत् पुरुरवा कश्चन मध्यस्थानीयो पदार्थः। स हि अनेकविधं विद्युद्गर्जनलक्षणं शब्दं करोति। एतेन च पुरुरवापदो मेघार्थक एव प्रतीयते। यजुर्वेदे[8] शतपथब्राह्मणे[9] च मेघो गर्जतीत्याख्यातम्।

---

१. 'अग्निः पृथिव्यां वायुरन्तरिक्षे, आदित्यो दिवि, चन्द्रमानक्षत्रेषु, विद्युदप्सु'
(जैमिनिब्राह्मणे—१।२८२)

२. 'अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपः सन्धिः, वैद्युतः सन्धानम्'
(तै० उ० १।३)

३. विश्वाची च घृताची चाप्सरसे आपो हेतिः·······। (यजु० वे० १५।१८)

४. 'समुद्र आसां सदनम्'—अथर्व-वे०, ४।३।७३।

५. 'नदीं यन्त्वप्सरसोऽपां तारम्'—अथर्व० ४।३।७३।

6. (Going in the waters or between the waters of clouds)···they··· are said to have been produced at the churming of the ocean. (Monier Williams–Sanskrit–English Dictionary)

७. पुरुरवा मध्यस्थानः····। सः कस्मात्? बहुधा रोरूयते।
अनेकविधमत्यर्थं स्तनयित्नुलक्षणं शब्दं करोतीति पुरूरवा।

८. 'कनिक्रदद्देवः पर्जन्यः'—यजु० ३६।१०।

९. क्रन्दतीव पर्जन्यः—शतपथ० ६।७।३।२।

निरुक्ते[1] (११।३६), ऋग्वेदीयमन्त्रटीकायां (१०।९६।१०) दुर्गेणैवं प्रतिपादितं यत्–विद्युद्रूपा उर्वशी मेघान्तराले भूयोभूयः व्रजन्ती विद्योतते मेघेभ्यः जलमभिवर्षन्ती प्रददाति दीर्घमायुरिति। आयुश्च जीवनमुच्यते (जीवनं वर्तते नीर-प्राणधारणयोरपि इति मेदिनी)। जीवनञ्च[2] जलमाख्यायते निरुक्ते[3] च आयुः शब्द उदकार्थं उक्तः। "आचार्यवररुचिरपि"[4] निरुक्तसमुच्चयकल्पे उर्वशी अन्तरिक्ष-व्यापिनी विद्युदिति स्वीकरोति।

एवञ्च विद्युदप्सरा विद्यते, सा चोर्वशीप्रभृतिनामभिर्व्यवह्रियते। शतपथ-ब्राह्मणे[5] च स्पष्टमेवाख्यातं यद् उर्वशी अप्सरा, पुरुरवा च तस्याः पतिरिति। तयोश्च सन्ततिरायुः। यतः पुरुरवा मेघः, उर्वशी च विद्युदिति प्राक् प्रतिपादितम्, तथा च तयोर्जात आयुः, उदक एव नान्यः।

ऋग्वेदे च ( १०।१५।१७ ) उर्वशी विशेषणे 'अन्तरिक्षप्रां रजसां विमानीम्' इत्याख्यातम्। तेन विद्युदुदये राजसो मानसामयः सम्भावितो वर्तते। अत एवाध्ययनविधिषु विद्युत्कालेऽकालस्तनयित्नुमेघे चाध्ययनं प्रतिषिद्धमास्ते[6]— 'अकालविद्युत्स्तयित्नुघोषे'। उन्मादरोगस्य च ये किल अभिघातकाला व्याख्यातास्तत्र च 'विगुणे वाध्ययनबलिमङ्गलहोमप्रयोगे' इत्युक्तम्। तेन च अकाल-विद्युत्[7] स्तनयित्नुमेघादीनां मनोविकारकारित्वमुपलभ्यते। तथा 'भूतविद्या' रोगाणां विद्युदप्सरसोऽपि कारणीभवन्तीति।

यक्षाः—ते हि कुबेरस्य ( यज्ञाधिपस्य ) सेवकत्वेन वर्णितचराः। तेषाञ्च स्वरूपं मानवोत्तरं वर्ण्यते। तेषाञ्च संज्ञा 'पुण्यजनाः' इति। कार्यकारणानुरोधेनैव तेऽपकुर्वते, सामान्यतस्तु ते नापकर्तारो भवन्ति। 'यक्षो गुह्यकमात्रे च

---

१. विद्युन्न विद्युदिव संप्रत्यर्थेवानकारः। या पतन्ती गच्छन्त्यन्तरिक्षे मेघोदरेषु दविद्योत्। पुनः पुनर्द्योतते भरन्ती हरन्तीमे मम स्वभूतानि अप्यानि काम्यानि उदकानि योर्वशी सा यदैवमुदकानि हरन्ती मेघेभ्य पतन्ती भृशं स्वयं विद्योतते··· प्रोर्वशी प्रवर्द्धयते। दीर्घमायुः।

२. पयः कीलालममृतं जीवनं भुवनं वनम् ( अमरकोषः—१।१०।३ )

३. आयोरयनस्य मनुष्यस्य ज्योतिषे वोदकस्य ( निरक्तम्—१०।४१ )

४. उर्वशी विद्युत्। उरुविस्तीर्णमन्तरिक्षमश्नुते इति ( कल्प ४ मं० १४ )

५. उर्वशी वाऽप्सराः, पुरुरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुः।
( शतपथब्रा० ३।४।१।२२ )

६. कृष्णेऽष्टमी तन्निधनेऽहनी द्वे, शुक्ले तथाप्येवमहर्द्विसन्ध्यम्।
अकालविद्युत् स्तनयित्नुमेघे स्वतन्त्रराष्ट्रक्षितिपव्यथासु॥
श्मशानयानायतनाहवेषु महोत्सवौत्पातिकदर्शनेषु।
नाध्येयमन्येषु च येषु विप्रा नाधीयते नाशुचिना च नित्यम्॥
( सु० सू० २।९-१० )

७. सु० सू० अ० २४।

गुह्यकाधीश्वरेऽपि च' इति मेदिनी। इः कामः, तस्येवाक्षिणी अस्येति वा, इः अक्षिषु यस्येति वा—बहुव्रीहौ सक्थ्यक्ष्णोः (५।४।४३) इति षच्। यक्ष्यते पूज्यते 'यक्ष पूजायां' (चु० आ० से०) 'अकर्तरि च कारके संज्ञायाम्' (३।३।१९) इति कर्मणि घञ्[1]।

**राक्षसः—पर्यायाः—**

राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः।
रात्रिचरो रात्रिचरः कर्बुरो निकषात्मजः॥
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी[2]॥

रक्षत्यस्मात्। 'रक्ष पालने' (भ्वा० प० से०) 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९) इत्यसुन्। प्रज्ञाद्यणि (५।४।३८) राक्षसः। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि (प० ५।३।६८) इति पुंस्त्वम्। 'राक्षसो यातुधाने स्याच्चण्डायां राक्षसी स्मृता' इति मेदिनी (१७२।३२)।

राक्षसास्त्रिधा समाख्याताः १—यक्षाः २—राक्षसाः देवद्रुहः ३—दैत्याश्चेति। दैत्याश्च यज्ञविध्वंसिनः, शवप्रियाः मानवानामुच्छेत्तारो मानवोत्पीडकाश्च भवन्ति। एते हि पुलस्त्यवंशजाः कथ्यन्ते। अन्यत्र चैतेषां समुत्पत्तिर्ब्रह्मणः पादाभ्याम् वर्णिता। विष्णुपुराणे तु एते दक्षसुतायां (खसा) कश्यपेन जाता इत्याख्यातम्। राक्षसानां बहुविधं चरित्रं बहुविधाश्च चेष्टा वर्णिताः। ते च नानाऽभिधेयतामर्हन्ति। तथा च—अनुसराः, असाराः, हनुषाः, इष्टिपचाः, नक्तञ्चराः, सान्ध्यबलाः, रात्रिचराः, नृजग्धाः, पलादाः, पलङ्कुशाः, क्रव्यादाः, अस्रपाः, असृक्पाः, किलापाः, रक्तपाः, दन्दशूकाः, प्रघासाः, मलिनमुखाः, कर्बुराश्चेति (क्लासिकल डिक्सनरी—जोन डाउसन)।

**पितरः**—अथातः पितॄन् वक्ष्यामः। स्थानप्रकृतिभेदात्पितरस्त्रेधा व्याख्याताः। दिव्यपितरः, ऋतुपितरः, प्रेतपितरश्चेति प्रत्येकमेतेष्वग्नियमसोमा अन्वाभक्ता द्रष्टव्याः।

त्रिविधा हि दिव्यपितरो भवन्ति। अन्नविधाः, अन्नादविधाः, अनुभयविधाश्चेति। अग्निष्वात्ताः, सोमसदः, बर्हिषदः—इत्येते त्रयः सौम्या अन्नविधाः। अग्निषु ये भवन्त्यात्ता येऽग्निषु गृह्यन्ते तेऽग्निष्वात्ताः। ओषधिवनस्पतयो हि बर्हींषि भवन्ति। बर्हिषु शुष्कद्रव्येषु सीदन्ति, मुक्तस्तिष्ठन्ति ते बर्हिषदः। अथ ये पुनरार्द्रद्रव्येषु उदकादिषु सीदन्ति मुक्तास्तिष्ठन्ति ते सोमसदः।

अन्नादविधास्त्रय आग्नेयाः—हविर्भुजः, आज्यपाः, सोमपाः। देवभोग्यमन्नं हविः, तेजोरस आज्यम्, अनुभयविधाः सुकालाः, सुकालिनः, सुस्वधा वा संज्ञायन्ते। एवञ्च सप्तविधा दिव्यपितरो भवन्ति। १—अग्निष्वात्ताः, २—बर्हिषदः, ३—

---

१. अमरकोषः—१।१।६९ रामाश्रमी टीका। २. अमरकोषः—१।१।५९-६०।

सोमसदः, ४—हविर्भुजः, ५--आज्यपाः, ६--सोमपाः, ७--सुकालिनश्च। एते त्रिप्रकृतिका सप्तैते दिव्यपितरो भवन्ति।

**ऋतुपितरः—**

वसन्तः सोमपाः पितरः।
ग्रीष्मः आज्यपाः ।
वर्षा हविर्भुजः ।
शरत् सोमसदः ।
हेमन्तो बर्हिषदः ।
शिशिरोऽग्निष्वात्ताः ।
अहोरात्रे अग्नीषोमौ दिवसः--स पिता।
पूर्वापरपक्षौ अग्नीषोमौ मासः--स पितामहः।
उदग्दक्षिणायने अग्नीषोमौ संवत्सरः--स प्रपितामहः।

अथातः प्रेतपितरो व्याख्यायन्ते। पृथिवीलोकस्था भूतात्मानो देहत्यागादूर्ध्वं गान्धर्वशरीरा नाक्षत्रैस्त्रयोदशमासैश्चन्द्रमसं गच्छन्ति। तेऽमी प्रेता पितरस्त्रेधा निष्पद्यन्ते—परा, मध्यमा, अवराश्च।

अथ ये तृतीयाः पितरस्ते प्रेता मनुष्यपितरः, ते वायुपुराणे स्मर्यन्ते—

ब्रह्मचर्येण तपसा यज्ञेन प्रजया तथा।
श्रद्धया प्रज्ञया चैव प्रदानेन च सप्तधा॥
कर्मस्वेतेषु ये युक्ता भवन्त्यादेहपातनात्।
देवैस्ते पितृभिः सार्द्धं मोदन्ते सोमपाज्यपैः॥

**ब्रह्मपुराणे च—**

पिता पितामहश्चैव तथैव प्रपितामहः।
त्रयोऽश्रुमुखा ह्येते पितरः परिकीर्तिताः॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोचिताः।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते॥

**मार्कण्डेयपुराणे च—**

ये स्युर्पितामहादूर्ध्वं ते स्युर्नान्दीमुखा इति।

पितृसंज्ञा च त्रिषु भिन्नजातीयेषु जीवेषु प्रयुज्यते। १--प्रथमे ते पितरः, येऽस्माकं पितृपितामहादयो मृताः। येभ्यः पिण्डं दीयते, जलञ्च दीयते पितृपक्षादिकाले। २--दक्षप्रजापतयः, ये मनुष्यजातेः जनयितारः कथ्यन्ते। ३--हरिवंशपुराण-वायुपुराणाख्यानकानुसारं पूर्वे पितरो देवानां पुत्रत्वेन स्वीकृताः।

देवा ब्रह्मणा सह केनापि कारणेन असन्तुष्टा जाताः। देवैश्च ब्रह्मणः पूजा त्यक्ता। ब्रह्मा च तान् शशाप--'यूयं मूर्खाः स्युः' इति। यदा च ते देवाः पश्चात्तापमकुर्वन्, तदा ब्रह्मा उपदिदेश यद् भवन्तः स्वपुत्रेभ्यः शिक्षां गृह्णन्तु।

अनन्तरं देवाः स्वसुतेभ्यो यदा प्रायश्चित्तविधानं तपश्चरणविधानञ्च विजज्ञिरे, तदा देवास्तान् पितृत्वेन सम्बोधयाञ्चक्रुः। तदा प्रभृति ते देवपुत्राः प्रथमे पितरोऽभूवन्। एतदाख्यानमनेकेषु पुराणेषु समानमेव वर्णितम्।

ते पितरः सप्तविधाः परिगणिताः। त्रयस्तु निराकाराः किं वा मानसिकाः स्वेच्छया मायारूपधारिणः। चत्वारः शरीरधारिणः। मानसिकाः पितरः—वैराजाः, अग्निष्वात्ताः, वर्हिषद इति। एषु प्रथमे शुभस्वराः सोमसदः सौम्याश्च कथ्यन्ते। शारीरिकास्तु सुकालाः अथवा सुकालिनः, अङ्गिरसः। सुस्वधाः सोमपाश्चेत्युच्यन्ते। सुकालाश्च ववचन मानसाः कथ्यन्ते, सोमपाश्चोष्मपा इत्युच्यन्ते। आंगिरसश्च हविष्मन्तः, हविर्भुजः, उपहूता वा कथ्यन्ते। सुस्वधास्तु आज्यपाः क्रव्यादा वा। वैराजास्तु तपस्विनः। अग्निष्वात्ता देवानां पितरः। वर्हिषदः राक्षासानां पितरः। सोमपा ब्राह्मणानां पितरः। हविष्मन्तः क्षत्रियाणां पितरः। आज्यपा वैश्यानां पितरः। सुकालिनः शूद्राणां पितरः। विष्णुपुराणे तु रश्मिपाः, फेनपाः, क्षुधावन्तः, गार्हपत्याः, एकश्रृङ्गाः, चतुर्वेदाः कालाश्चेति नामान्यपि सन्ति। ऋग्वेदे मनुस्मृतौ च पितृणां प्रकारद्वयं वर्णितम्—अग्निदग्धा अनग्निदग्धाश्चेति। पितृणां च राजा यमः, स्वधा च तेषां माता[1] ( विष्णुपुराणम् )।

**पिशाचः—**

पिशितमाचामन्ति ये ते पिशाचाः। 'पिशितमश्नाति। 'अश् भोजने' ( क्र्या० प० से० )। 'कर्मण्यण्' ( ३।२।१ ) 'पृषोदरादिः' ( ६।३।१०९ ) मध्यतालव्यः[2]। एते दुरात्मनः राक्षसेभ्योऽपि नीचाः, द्रोहिणः, महाक्रोधाश्च भवन्ति। ब्राह्मणग्रन्थेषु, महाभारते च तेषामुत्पत्तिर्ब्रह्मणोऽभूदिति वर्णितम्। असुरैः राक्षसैश्च सममेव तेऽजायन्त। मनुस्तु तेषामुत्पत्तिं प्रजापतिश्चकारेति स्वीकरोति। पुराणेषु ते कश्यपेन स्वभार्यायां क्रोधवशायां कपिशायां वा समुत्पादिता इति वर्णितम्।

**नागाः**—नगे भवाः। 'तत्र भवः' ( ४।३।५३ ) इत्यण्। यद्वा न गच्छन्तीति। अगाः। न अगाः। 'सुप्सुपा' ( २।१।४ ) इति समासः। अनन्त्वान्न न लोपः। 'नागो मतङ्गजे सर्पे पुंनागे नागकेसरे। क्रूराचारे, नागदन्ते मुस्तके वारिदेऽपि च। देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः। नागं रङ्गे सोमपत्रे स्त्रीबन्धे करणान्तरे' इति हैमः[3]।

नागाः किल देवनिभाः कीर्तिताः। ते मानवाकृतयः सपुच्छाः सर्पग्रीवाश्च कथिताः। जातिभेदाच्च तेषां संज्ञा सहस्रधा। तेषां जननी कद्रू आसीत्। सा च कश्यपस्य पत्नी। तेषां राज्यं भूमेरधस्तात् पाताललोके विराजते। क्वचिच्च तेषां मातृनाम 'सुरसा' इति। 'सुरसा नाम अहिन की माता' इति तुलसीदासः। कश्यपेन ऋषिणा पाताललोकं सनाथीकर्तुमेते समुत्पादिताः। यथा च विभिन्नेषु लोकेषु विभिन्नाः स्वामिनः स्वस्वराज्यं शासति स्म—अतलं महामाया, वितलं

---

१. जोन डाउसन—क्लासिकल डिक्शनरी। २. अमरकोषः—१।१।११।
३. अमरकोषः—१।८।४ रामाश्रमी टीका।

हाटकेश्वरः; सुतलं बालिः, तलातलं माया, महातलं सर्पाणां विशिष्टजातिः, रसातलं दैत्यजातिः, तथैव पातालं ( सर्वतोऽधस्तात् ) वासुकिः शशास । नागाश्च पातालमध्यतिष्ठन्[1] ।

एवञ्चैते किलावरसत्त्वं प्राणिनमाक्रामन्ति, रजसि तमसि वा प्रवृद्धे । यद्वा मनसि क्षुब्धे रजस उपष्टम्भात्ते ते चिह्नास्समुपजायन्ते, ये भवन्ति नागाक्रान्ते जने। एवञ्च भूतविद्यासम्बन्धिनां देवादीनां निर्वचनं यथा प्रसङ्गमाख्यातं भवति ।

## भूतविद्यायाः क्षेत्रम्

यद्यपि 'रोगस्तु दोषवैषम्यम्' इत्यनुसारं शारीर-मानसदोषाणां वैषम्यगमनं हि 'रोग' इत्याख्यातः । अथ च त्रिजागन्तुविभागेन तत्र रोगा द्विधा मताः' इत्युक्त्वाऽऽगन्तवोऽपि रोगा आख्याताः । किन्तूभयत्रापि दोष-दृश्य-सम्प्राप्त्यादि-विचारः सम्भाव्यते । निजे तु प्राक् दोषोच्छ्रयः, आगन्तुके तु वेदनाविर्भावानन्तरं दोषानुबन्धो भवति; परन्तु सन्ति तादृशा अपि व्याधयो यत्र न च प्राक् पश्चाद्वा दोष-दूष्यकल्पना कर्तुं पार्यते । ते च रोगा देवासुरगन्धर्वयक्षरक्षः पिशाचादी-नामावेशेन जायन्ते, ते हि स्वयमदृश्या अपि दर्पणे छायातपयोरिव रोगिणमावि-शन्ति । स्वैश्च प्रभावैस्तथा विधान् रूपान् दर्शयन्ति । तादृशा हि व्याधयो भूतविद्यायाः क्षेत्रभूताः समाम्नाताः । यथा चाह सुश्रुतः—

'भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम्[2] ।' तत्र डल्हणः—'भूतानि अष्टौ तानि वेत्ति अनया इति भूतविद्या अथवा भूतावेशापाकरणार्था विद्या भूतविद्या' । 'भूतानां राक्षसादीनां ज्ञानार्था प्रशमार्था च विद्या भूतविद्या[3] ।'

तथा हि सामान्यग्रहाः[4], बालग्रहाः, सूर्यादयो ग्रहाः, डाकिनी-शाकिनीप्रभृत-यश्च रोगानुद्भावयन्ति विविधान् । तेषाञ्चामयानां यथास्वमध्ययनं प्रतीकारादयश्च भूतविद्याविषयभूताः । पुराणेषु च वैशद्येन ग्रहोपद्रवाणां शान्त्यै तान्त्रिकाः मान्त्रिकाः प्रकाराः, बलिमङ्गलहोमोपहाराद्याश्च समुपवर्णिताः । तत्सर्वमेव भूतविद्यावैषयिकमेव । आगन्तुकव्याधिषु च भूतविद्यात्वं समुपलभ्यते । ये [5]चागन्तवोऽभिघाताभिचाराभिषङ्गाभिशापातिभ्यो जायन्ते । तत्र अभिचारो-विपरीतैर्मन्त्रैर्लोहस्रुचा सर्पादिहोमः । अभिषङ्गः कामादीनां भूतादीनां च सम्बन्धः, यदुक्तं चरके--

---

१. जोन डाउसन, क्लासिकल डिक्शनरी । २. सु० सू० १।७ ।

३. च० सू० ३०।२८ चक्रपाणिः ।

४. ग्रहभूतपिशाचाश्च डाकिनी शाकिनी तथा ।
एतेषां निग्रहोपायो भूतविद्या निगद्यते ॥ ( हा० सं० रो० अ० १ ) ।

५. अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः । आगन्तुर्जायते--मा० नि०, ज्वर० ।

कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः ।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः[1] ॥

अभिशापो ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिशंसनम् । [2]नियमव्रतादीनाम् असम्यगाचरणेन मिथ्याकृतेन च पूर्वजन्मकृतकर्मणा देवता-ऋषि-पितृ-यक्षादीनाम-भिघर्षणेन आवेशेन च आगन्तुक उन्मादो भवति । एवञ्चागन्तुको विषमज्वरः, भूतोत्थ उन्मादः, आगन्तुकापस्मारः, अपतन्त्रको बालग्रहाश्च भूतविद्याङ्गा एव । एषु चामयेषु दैवव्यपाश्रया सत्वावजयचिकित्सा वा सफला भवति । क्वचिच्च आधिभौतिकेन, क्वचिद् आधिदैविकेन, क्वचिद् आध्यात्मिकेन विधिना क्वचिद्वा मन्त्रप्रयोगेण चिकित्सा सफला भवति ।

आधिदैविकाश्च व्याधयोऽत्र समावेशमर्हन्ति । तथा च 'दैवबलप्रवृत्ता ये देवद्रोहादभिशप्तका अथर्वणकृता उपसर्गजाश्च, तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च । पुनश्च द्विविधाः—संसर्गजाः, आकस्मिकाश्च ।[3]

आयुर्वेदश्चाथर्ववेदस्योपाङ्गः । अथर्ववेदे च भूतविद्याया मन्त्रचिकित्सायाश्च प्राचुर्येण वर्णनमुपलभ्यते । मान्त्रिकश्च चिकित्सकश्चिकित्सकेषु महनीयं पदमादधाति । तथा हि—

'आसुरी मानुषी दैवी चिकित्सा त्रिविधा मताः ।
शस्त्रैः कषायैर्लोहाद्यैः क्रमेणान्त्या सुपूजिता ॥
अधमः शस्त्रदाहाभ्यां मध्यमो मूलकादिभिः ।
उत्तमो रसवैद्यस्तु सिद्धवैद्यस्तु मान्त्रिकः ॥

अथ च अधिष्ठानभेदेन रोगाणां द्विधात्वमाम्नातम्, शारीरमानसभेदेन । यथा शारीररोगोत्पादे वातादीनां कारणत्वम्, तथैव मानसामयानामुत्पादे रजस्तमसीकारणभूते स्तः । शारीरव्याधिषु शरीरे विविधानां लक्षणानामुत्पत्ति-र्जायते, यानि चाभिलक्ष्याणि भवन्ति, किन्तु नैव तथा मानसामयेषु शारीरलक्षणा-भिव्यक्तिर्भवति । चिकित्सादृष्टचा च तयोर्भेदोऽस्ति ।

'मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः' इति ( च० सू० १ ) । तथाहि–मद-मूर्च्छा-सन्न्यास-अपस्मार-योषापस्मार-उन्माद-अपतन्त्रकप्रभृतिव्याधिषु प्रायेण दैवव्यपाश्रयचिकित्सैव सिद्धचति । एवंविधाश्च रहस्यभूता मानसामया भूतविद्याविषये समाविशन्ति । तादृशाश्च गूढतमा व्याधयोऽप्रतर्क्या भवन्ति, न च तेषु युक्तिव्यपाश्रयं चिकित्सितं साफल्यं व्रजति निश्चयेन । न च शक्यते तेषामाम-यानां याथार्थ्येन नैदानिकं विवरणं समुपस्थापयितुम् । न च बहुशोऽनुभूताश्चिकित्सा-

---

१. च० चि० अ० ३ ।

२. देवर्षिगन्धर्वपिशाचयक्षरक्षःपितॄणामभिधर्षणानि ।
आगन्तुहेतुर्नियमव्रतादिमिथ्याकृतं कर्म च पूर्वदेहे ॥ ( च० चि० ९।१६ ) ।

३. सु० सू० २४।७ ।

[1]विध्यः प्रयोगसौष्ठमामनन्ति; अपि तु शान्तिकर्महोमोपहारनमस्कारमन्त्रप्रायोगिकं सफलं भवति। अतश्च तादृशा जटिला व्याधयो भूतविद्याविदामेव साध्याः। एवञ्चागन्तवो मानसामयाश्च भूतविद्यायामापतन्ति। अपरे च पूर्वजन्मकृतपापकर्मणा जायमाना व्याधयो ये सन्ति, ते हि कर्मजाः रोगा भवन्ति। तथा च—

निर्दिष्टं देवशब्देन कर्म यत् पौर्वदैहिकम्।
हेतुस्तदपि कालेन रोगाणामुपलभ्यते॥
न हि कर्ममहत् किञ्चित् फलं यस्य न भुञ्जते।
क्रियाघ्नाःकर्मजाःरोगाः प्रशमं यान्ति तत्क्षयात्[1]॥

एवञ्च पूर्वजन्मकृतपापकर्मानुसारं दैवव्यपाश्रयचिकित्सया यज्ञदानहोमप्रायश्चित्तादिना चिकित्साकर्म विधीयते। यथा च—

धूर्तः अपस्मारी ब्रह्मकूर्चमयीं धेनुं दद्यात्[2]।

……………यस्तु ब्राह्मणं वैष्णवं पितरौ द्विजादिकं मानार्हं च नार्चयेत्, परं निन्देत्, स मृतः पुरीषाख्ये नरके अधः दुःखभाग् भवेत्। ततः कर्मक्षये मानुषीं तनुमुपलभ्य उन्मादरोगवान् जायते। तथा येन च ब्राह्मणे गुरौ च दम्भाचारः कृतः, तेभ्यः स्मृतिभ्रमकराणि द्रव्याणि च दत्तानि, सोऽपि जन्मान्तरे उन्मादरोगवान् भवेत्।

एवञ्च तथाविधा हि रोगा दृश्यन्ते, येषां कारणोपलब्धिर्न जायते। ते ह्यकस्मादेवोत्पद्यन्ते जनयन्ति च तांस्तान् विकारान्। मन्त्रादिप्रयोगेण दैवव्यपाश्रयेण चोपशमं व्रजन्ति, तेऽपि भूतविद्यासम्बन्धिनो भवन्ति। केचिच्च गन्धर्वाप्सरोपिशाचरक्षप्रभृतीनां शाब्दिकार्थपर्यालोचनयाऽदृश्यानां सूक्ष्मजीवाणूनां तज्जानाञ्च व्याधीनां भूतविद्यासम्बन्धमभिलषन्ति। तथाहि औपसर्गिका आमया अपि एतदन्तर्गता एव मन्यन्ते।

वस्तुतस्तु—भूतविद्याङ्गे प्राग् वर्णितानां देवादिप्रकोपजानामुन्मादादीनाम्, सात्त्विक-राजस-तामसप्रकृतिजानां विकाराणाम्, मदमूर्च्छादीनां मानसामयानां आगन्तूनाञ्च भूताभिषङ्गादीनां कर्मजानामामयानां गुरुसिद्धाद्यभिधर्षणजानाँ व्याधीनां रहस्यमयानां गूढतमानां दुरधिगम्यहेतुदोषदूष्य-पूर्वरूप-रूपोपशय-सम्प्राप्तानां विविधानामामयानामत्र भूतविद्याप्रकरणे समावेशः कर्तुं शक्यते। ये चावरसत्वजा आमयाः, काम-क्रोधमोह-मानेर्ष्यासूयादिमनोविकारजा व्याधयो भवन्ति, प्रज्ञापराधजा अदृष्टापचारजास्तेऽप्यत्र समाविशन्ति। एतच्च समासतः क्षेत्रं भूतविद्याया आमनन्ति चरकादयो महर्षयः।

### भूतविद्यायाः प्रामाण्यम्

यद्यपि प्रमाणसंख्याविषये आचार्याणां बहूनि मतानि दरीदृश्यन्ते, तथापि आयुर्वेदशास्त्रे आप्तोपदेश-प्रत्यक्ष-अनुमान-उपमाना[3] इति चत्वारि प्रमाणानि अङ्गीकृतानि आचार्यैः।

---

१. च० शा० १।११६–११७। २. शातातपस्मृतिः—३।१३।

३. युक्तेरनुमानान्तर्गतत्वादेव न पृथक्करणम्।

तत्राप्तोपदेशः —

रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ।।
आप्ता.शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् ।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः ।।

एवंविधाः ज्ञानवन्तो भवन्त्याप्ताः, तेषामुपदेशः प्रमाणीभूतः, आप्तोपदेशस्तावद् वेदस्तथा वेदानुगतानि पुराणोपनिषद्धर्मशास्त्रायुर्वेदादिशास्त्राणि च प्रमाणभूतान्युपलभ्यन्ते । तथा च वेदब्राह्मणोपनिषत्सु विविधेषु स्थलेषु भूतविद्यासम्बन्धिविषियाः समुपवर्णिताः ( ये चात्र इतिहासप्रकरणेऽनुस्यूतास्तत्रैव द्रष्टव्याः ) ।

वृहदारण्यकोपनिषदि च नामग्राहं वर्णनमुपलभ्यते—ऋग्वेदं भगवोऽध्यैमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं च पञ्चमं वेदः, पित्र्यं, निधिं, राशिं, देवनिधिं, वाकोवाक्यं, एकायनं, देवविद्यां, ब्रह्मविद्यां, भूतविद्यां, क्षत्रविद्यां, नक्षत्रविद्यां, सर्पदेवयजनविद्यामेतद् भगवोऽध्येमि ।' एवं आप्तोदेशाद् भूतविद्यायाः प्रामाण्यं स्पष्टमेवावगम्यते ।

आप्ता[1] हि निश्चयेनानुभवेन च कात्स्न्येंन भावान् जानते । यथार्थदर्शी निर्दोषश्चाप्तो भवति । प्रमाणनिचयेषु चाप्तोपदेशस्य प्राथम्यमास्ते । अत एवाह चरकः "...' .. .. ..... ..पूर्वमाप्तोप्रदेशाज ज्ञानम् । ततः प्रत्यक्षानुमानाभ्यां परीक्षोपपद्यते, किं ह्यनुपदिष्टं पूर्वं यत्तत् प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात् ।'[2]

एवञ्चाप्तोपदेशात्—'भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् अमर्त्यवाग्विक्रमवीर्यचेष्टः सन्तुष्टः शुचिरतिदिव्यगन्धमाल्यः' निस्तन्द्रीरवितथसंस्कृतप्रभाषी, 'तेजस्वी स्थिरनयनः वरप्रदाता' प्रभृतीनि लक्षणजातानि देवभूताविष्टे जने प्रत्यक्षीभवन्ति । दृश्यते खलु, यद् विद्याविहीनो जनः परिष्कृतया देवगिरा भाषते, अन्यासामपठितानां भाषानामङ्ग्रेजीप्रभृतीनां संभाषणं विधत्ते । तेन प्रत्यक्षतो भूतविद्यायाः प्रामाण्यमङ्गीक्रियत एव । भूताभिनिवेशजेषु चामयेषु युक्तिव्यपाश्रयासत्त्वावजया वा चिकित्सा कामं भवेदसफला; किन्तु महत्कौतूहलजनकमेतद्वैलक्षण्यमास्ते, यद् भूतविद्यासम्बन्धिरोगेषु दैवव्यपाश्रया चिकित्सा—बलिहोमोपहारेज्याञ्जलिनमस्कारदानादिरूपा नूनं सफला भवति ।

मणिमन्त्रप्रयोगैश्च[3] भूतविद्याजाता आमयाः प्रशाम्यन्ति । अतश्च अचिन्त्यशक्तिजेषु साधनेषु भेषजात्प्रागेव मणिमन्त्रयोर्पाठः कृत इत्यवगम्यते । तथा च—'अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः' । एवञ्च प्रत्यक्षमेव भूतविद्यायाः निदानचिकित्सिते परिलक्ष्येते ।

---

१. आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपदर्शिनश्च । तेषामेवं गुणयोगाद्यद्वचनम् तत्प्रमाणम् । अप्रमाणं पुनर्मत्तोन्मत्तमूर्खवक्तृदुष्टादुष्टवचनम् ।' ( च० वि०, ४।४ ) ।

२. च० वि०—४।७ ।

३. अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।

अनुमानतः—

"अनुमितिकरणमनुमानम् । परामर्शजन्यं ज्ञानमनुमितिः ।

व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः[1] ।" एवं हि व्याप्तिपरामर्शज्ञानाधीनमनुमानम् । तथा 'प्रत्यक्षपूर्वं त्रिविधं त्रिकालश्चानुमीयते। वह्निर्निगूढो धूमेन मैथुनं ... इत्येवं यस्य विषयस्य पूर्वं प्रत्यक्षं भवति, तदभावे व्याप्तिविशिष्टपक्षधर्मताज्ञान-पूर्वकं परामर्शो भवति, तत्रैवानुमानं जायते ।

भूताविष्टं नरं दृष्ट्वा तत्र जायमानस्य लक्षणस्य च प्रत्यक्षत्वात् तत् आप्तोपदेशात् प्रत्यक्षज्ञानाद् भूताविष्टोऽयं नर इति सम्यग् ज्ञाने अन्यत्र विद्या-विहीने नरे सहसा संस्कृतभाषायां भाषणपाटवमभिलक्ष्य किं वा अकस्मात् कस्मै किं ददामीत्यादिवचनैः वरप्रदातारं संवीक्ष्य भूताविष्टे जने पूर्वमिमानि लक्षणानि दृष्टानि, तेनानुमीयते यदसावपि भूताविष्ट इति । एवं हि अनुमानेन च भूतविद्या सिद्धिर्भवति । अन्ये च येऽनुमानज्ञेया भावाः समाख्याताः, तेऽपि प्रायशो भूतविद्या-( मानसरोग ) सम्बद्धा एव बाहुल्येन । तथा च —

'... ... रजःसङ्गेन, मोहमविज्ञानेन, क्रोधमभिद्रोहेण, शोकं दैन्येन, ... .... ... भयं विषादेन ... ... श्रद्धामभिप्रायेण, मेधां ग्रहणेन, स्मृतिं स्मरणेन परीक्षेत' ।[2]

**उपमानतः**—उपमितिकरणमुपमानम् । यथा दण्डेन दण्डकस्य, धनुषा धनुः स्तम्भस्य । गोसदृशो गवयः इति श्रुत्वा वनं गतो गोसदृशं जन्तुमवलोक्य गवयोऽयमित्यवगम्यते । एवं यथा देवदत्तो भूताविष्टः सन् अमुकामुकलक्षणैर्ग्रस्तोऽ-भूत्, तथैव तत्सदृशलक्षणानि मोहने दृष्ट्वा तमपि भूताविष्टं मन्यते । यथा च देवदत्तस्य दैवव्यपाश्रय–बलिहोमोपहारेज्याञ्जलिप्रभृतिभिः चिकित्सया रोगशान्तिर्जाता, तथा मोहनस्यापि भवेदिति ज्ञायते ।

एवं येभ्यः प्रमाणेभ्यः सर्वमेव प्रमेयं प्रमीयते, तेभ्य एव प्रमाणचतुष्टयेभ्यः भूतविद्याया अपि प्रामाण्यमवगन्तव्यमिति ।

## भूतविद्याया युगानुरूपसन्दर्भे प्रयोजनम्

आयुर्वेदाष्टाङ्गेषु भूतविद्या एकमङ्गमाख्यातम् । एषा च विद्या आध्या-त्मिकी विद्या वर्त्तते । या च औपनिषदिकी विद्या, तस्या उपलब्धिरेव भूतविद्यायाः परमं प्रयोजनमालक्ष्यते । ये च आमया भूतविद्यायां परिगणिताः, तेषु रजस्त-मोभ्यां चेतसि आवृते प्रज्ञाया अस्थैर्यं धीधृतिस्मृतिविभ्रंशाश्च जायन्ते ।

सम्प्रति कोलाहलपूर्णे जगति अभितः अशान्तिकारणानि बाहुल्येन परिलक्ष्यन्ते । विश्वस्मिन् जीवनस्य मूलभूता आवश्यकताः स्वसीमानमतिक्रम्य व्यात्तानना दृश्यन्ते । यत्समाधानाय विश्वेषां जनानां चिन्ता जागर्ति, अशान्तिश्च

---

१. तर्कसङ्ग्रहे अनु० खण्डे  २. च० वि०—४।१० ।

प्रवर्धमाना लक्ष्यते। मानसिकञ्च क्षेत्रं क्षुब्धप्रायमेवावलोक्यते। स्वाभाविकीञ्च जीवनपरम्परां समुत्सृज्य सर्वं एव जना महत् संरम्भपूर्णं कृत्रिमचाकचिक्यमयं जीवनं निर्वोढुं दत्तचित्ताः सन्ति।

पुरातने तु काले जनाः स्वभावत एव स्वस्थवृत्तनिर्दिष्टदिनचर्यारात्रिचर्या-ऋतुचर्योदितानां नियमानां स्वास्थ्यसमृद्धिकामनया पालनमकुर्वन्। तेषाञ्च मते –'तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते। रज्यते न तु विज्ञाता'[1] इति सिद्धान्त आसीत्। तेषाञ्च मनसि सन्तोष आसीत्, अतश्च प्राक्तने काले क्वचिदेव जना मानसरोगाणां भाजनानि बभूवुः, किन्तु साम्प्रतिके काले जना न चाचारपरम्परां पालयन्ति। हीनक्रियाः प्रमादवन्तो रागद्वेषाभिनिविष्टाः कामक्रोधादिपरायणाः सन्तो द्रुतमेव समाक्राम्यन्ते मानसैरामयैरिति। मनश्च व्याघ्रवद् विषयारण्यभूमिषु सञ्चरति। तच्च चञ्चलस्वभावं दुर्निग्रहम्। तस्य च संयमने यमनियमादीनां योगाङ्गानां अभ्यासवैराग्ययोश्च पालनमपेक्षितम्।

दुर्भाग्यवशादधुनातनीपारिवारिकीसमस्याः, समाजस्य चाचाराः, चलचित्रम्, सहशिक्षा, औपन्यासिकग्रन्थादयश्च तादृशा हेतवः सन्ति समुज्जृम्भिताः, यैः किल मनोनिग्रहणे कृत एवाशनिसंपातः। अत एतदालोच्य इदमेव वक्तुं पार्यते, यद् धर्माचारादृते, स्वस्थवृत्तविहितविधिपालनादृते च नान्यः पन्था भवितुमर्हति श्रेयसे।

अधुना असदुपायाश्रयणेन, चौर्येण, परोपघातनेन, छद्मना, पण्योपघातेन (Black Marketing) वा यथाकथञ्चन धनार्जनमेव बुद्धिमत्तायाः परिचायकत्वेन परिगण्यते। विशेषतश्च शैशवे विद्याभ्यासवेलायां येन केनाप्युपायेन परीक्षोत्तीर्णतायै छात्राः प्रयतन्ते। यौवने तु शिरसि निहिते गार्हस्थ्यभारे अधिकाधिकधनार्जनलिप्सया व्यापारपरायणाः, कार्यालयेषु च कर्णिकाः, यन्त्रालयेषु च कर्मकरा असदुपायाश्रयणेन, उत्कोचग्रहणेन धनार्जनमभिलषन्ति। तेनैव चान्यायोपार्जितेन धनेन स्वबन्धुजनस्य भरणं पोषणञ्च क्रियते। तथा च स्वाभाविकमेवैतत् यदन्नानुसारिणी दुर्मतिरुपजायते। यादृशञ्चान्नमुपभुज्यते, तदनुरूपैव भवति बुद्धिः।

एवञ्चाधुनातनस्य मानवजनस्य बौद्धिकदृष्ट्या स्खलनमेव दृष्टिपथमायाति। जनानाञ्च मनांसि प्रभूतेनापि साधनेन न सन्तोषमावहन्ति, नैराश्यं प्रतिपदं प्रवर्धते। रागद्वेषकामक्रोधादिग्रहाः समुज्जृम्भन्ते मानवसागरेऽस्मिन्।

एतच्च निर्विवादमेव, यत् समेषां व्याधीनां यानि कारणानि निर्दिष्टानि, तेषु असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधश्चेत्युभौ मनोविकारजावेव। मानसदोषं विना न च शारीरा अपि रोगाः समुद्भवन्ति। अतो हि शारीरमानसोभयविधव्याधिप्रशमनाय मानसीशुद्धिरपेक्षिता। सा च शुद्धिः धर्मसापेक्षा।

---

१. च० सू० — २९।५४।

धर्म्याः क्रिया हर्षनिमित्तमुक्ताः
ततोऽन्यथा शोकवशं नयन्ति[1]।

तथाहि भूतविद्यायां ग्रहाणां ( रेवत्यादीनां ) विस्तरेण वर्णनमुपलभ्यते। ग्रहग्रहणकारणेषु च आचारविभ्रंशस्य कारणत्वं निगदितम्[2]। जातहारिणीग्रहग्रहणे आचारविभ्रंशस्य कारणता सम्यगुदिता। यः किल विहितं कर्म न करोति, न चाहारनियमान् पालयति, अधर्ममाचरति, निर्दयो भवति, यश्च क्रूरः, स एव जातहारिण्या ग्रस्यते। एवमेव सर्वेषामेव ग्रहाणां ग्रहणे देवादीनामभिधर्षणादिकं कारणं निगदितम्[3]।

अथ च भूतविद्याङ्गं मानसदोषपरिमार्जनार्थमेव महर्षिभिरासीत् प्रवर्तितम्। अस्याश्च विद्यायाः प्रयोजनं मानवमनसः सर्वात्मना परिष्करणमेव। सत्त्वगुणसमुद्रेकेन प्रज्ञापराधकारणीभूतानां कर्मणां मनसा, वाचा, कर्मणा सर्वथा परित्यागपूर्वकं धियः परिमार्जनमेव। एतदेवाभिलक्ष्य पुरातनैराचार्यैः सर्वोत्कृष्टा 'सत्यनारायणीव्रतकथा' प्रचारिता। यथा च जनाः असत्पथपरित्यागपूर्वकं सत्पथानुसरणे मतिं विदध्युरिति।

अथ च सर्वेष्वेव मन्त्रेषु गायत्रीमन्त्र एव महत्तमः परिगणितः। यत्र च धियः परिमार्जनमेव प्रार्थितम्। अन्ये च विविधा आचारा लोकेऽस्मिन् प्रचारिताः, यथा च मनसि सत्त्वगुणोदयो भवेत्। दृश्यते किल यद् ये जना धार्मिकाः, सत्यपरायणाः, तपःस्वाध्यायनिरताः, स्वल्पसाधना अपि ते नोद्विजन्ति महतीष्वपि पीडासु।

एतद्वैपरीत्येन ये जना यथाकथञ्चन विविधभोगपरायणाः सर्वसाधन-सम्पन्नाः, ते हि स्वल्पानामपि वेदनानां सहनेऽसमर्थाः समुद्विग्नाः प्राणोत्सर्गमपि कर्तुमुन्मत्ता भवन्ति। एतेन च सिद्ध्यति; यत् सांसारिकी विभूतिर्नहि सर्वथा सुखावहा, अपि तु सात्त्विकः धर्मानुमोदितो मनःशान्तिकरो भूतविद्यानिर्दिष्ट एव पन्थाः श्रेयसे

एवञ्चाद्यतने प्रवर्तमानानां शोकचिन्तोद्वेगादीनां प्रशमनार्थं धैर्यधीस्मृति-प्रभृतीनां प्रयोगनिर्देश आवश्यकः। तदर्थञ्च मानसविकारप्रशमनार्थं भूतविद्याया अध्ययनमध्यापनं प्रसारणञ्च नितरामपेक्षितम्। तथा सति—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥

इति लक्ष्यं पूरितं स्यादिति।

---

१. च० शा० — २४१।		२. काश्यपसंहितायाः रेवतीकल्पाध्यायो द्रष्टव्यः।
३. प्रधर्षणं देवगुरुद्विजानाम् —मा० वि०।

## भूतविद्याया उपयोगिता

गीतायां स्थितप्रज्ञस्य, आदर्शपुरुषस्य च वर्णनमुपलभ्यते।[१] सा च स्थितिर्विश्वस्य शान्त्यै सुखाय समृद्धये च प्रभवति। तदर्थञ्च मानसिकक्षेत्रस्य गभीरमध्ययनमपेक्षितम्। वैयक्तिकरुपेण सामाजिकरूपेण च शान्तिस्थापनार्थं 'भूतविद्याध्ययनस्य' किमपि विशिष्टं महत्त्वमास्ते।

लोकतन्त्रप्रणाल्याञ्च जनसम्मतेर्मूल्यं प्रमुखमास्ते। यदा च जनता विभिन्नाभिः सामाजिकदशाभिः पूर्णरूपेण परिचिता भवति, तदा हि शासनव्यवस्था सुचारुरूपेणावतिष्ठते। प्रबुद्धायाः जनतायाश्च व्यवस्थासम्पादने सहयोगप्राप्ति-सम्भावना भवति।

एवञ्च लोकतन्त्रप्रणालीसाफल्याय भूतविद्यासम्बन्धिज्ञानं तथा तत्सम्बद्ध-मानसामयप्रतीकारविधानञ्चावश्यकमिति कृत्वा भूतविद्यायाः प्रयोजनवत्ताव-धारणमङ्गीकार्यमस्ति सुतरामिति।

१. गीता — २।५५-६२, १२।१३-२०।

## तृतीयं काण्डम्

# भूतविद्यायाः पुरुष एवाधिकरणमतः पुरुषनिरूपणमारभ्यते

पुरुषविमर्शः—चिकित्साधिकृतः पुरुषः कर्मपुरुषः, संयोगिपुरुषः राशिपुरुषो वा उच्यते।

आयुर्वेदे[1] सत्त्वात्मशरीरसंयोगस्त्रिदण्ड इत्याख्यातः। स एव त्रिदण्डः परस्परसंयोगविधृतः पुमान् इत्युच्यते, स एव लोकस्तत्र च कर्मफलादिव्यवस्थितम्। स एव पञ्चमहाभूतात्मसमवायः पुरुषः, स एव [2]कर्मपुरुषः, चिकित्साधिकरणभूतश्च। चिकित्स्यपुरुषमधिकृत्य चायमायुर्वेदः प्रावर्तत।

आकाशवाय्वग्नितोयपृथिवीसंयोगश्चेतनाधातुश्च पुरुषः[3]। एवञ्च भूयः पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, उभयात्मकं मनः, पञ्चभूतार्थाः, अव्यक्तं महानहङ्कारः पञ्चतन्मात्राश्चेति चतुर्विंशतिकः पुरुषः। स किल पुरुषः[4] मोहेच्छाद्वेषकर्मभिर्जायते। पूर्वजन्मकृतशुभाशुभसंस्कारवशात् कर्मपुरुषो तिर्यग्देवमानुषदेहेषु समुत्पद्यते[5]।

'तथा चाह सुश्रुतः—अस्मिस्तु शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया, सोऽधिष्ठानम्[6]।'

---

१. सत्त्वमात्मा शरीरं च त्रयमेतत् त्रिदण्डवत्।
लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम्॥ (च० सू० १।४५)

२. स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम्।
वेदस्यास्य तदर्थं हि वेदोऽयं सम्प्रकाशितः॥ (च० सू० १।४६)

३. खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः।
पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः॥
मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी॥ (च० शा० १।१४-१५)

४. पुरुषो राशिसंज्ञस्तु मोहेच्छाद्वेषकर्मजः'॥ (च० शा० १।५३)

५. क—तिर्यग्योनिमानुषदेहेषु संचरन्ति धर्माधर्मनिमित्तम्। (सु० शा० १।१६)
ख—पूर्वकृतफलानुबन्धात् तदुत्पत्तिः। (न्यायद० ३।२।६४)
ग—तत् त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्। (न्यायद० ४।१।३)
इच्छाद्वेषमोहा एते त्रयः प्रवर्तना लक्षणा दोषाः समाख्याताः। एषां दोषाणां त्रयो राशयो (त्रयः पक्षाः) भवन्ति। (१) तत्र इच्छा=काम-मोह-मत्सर-स्पृहा-तृष्णा-लोभ-प्रवर्तिनी। (२) द्वेष=क्रोध-ईर्ष्या-असूया-द्रोह-अमर्षप्रवर्तकः। (३) मोहः=मिथ्याज्ञान-विचिकित्सा-मान-प्रमादजनकः॥ (वात्स्यायनः)। एवञ्च पूर्वजन्मकृतरागद्वेषमोहैः दैव-मानुषनियर्ग्योनिषु संचरत्यात्मा स्वकर्मक्लेशचोदितः। 'गतिप्रवृत्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म (च० शा० २)।

६. सु० सू० १।२२।

'आयुर्वेदशास्त्रेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च, तिर्यग्योनिमानुषदेहेषु संचरन्ति धर्माधर्मनिमित्तम्, त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वताः लोहितरेतसोः सन्निपातेष्वभिव्यज्यन्ते, यतोऽभिहितं 'पञ्चमहाभूतशरीरिसमवायः पुरुषः' इति। स एषः [1]कर्मपुरुषश्चिकित्साधिकृतः[2]।'

चतुर्विंशतितत्त्वात्मकस्य च सृष्टेरुपक्रमो यथा--'सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्। तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव, तल्लिङ्गाच्च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते,। स त्रिविधो वैकारिकस्तैजसो भूतादिरिति। तत्र वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथाश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्वाणि पञ्चबुद्धीन्द्रियाणि, इतराणि पञ्चकर्मेन्द्रियाणि, उभयात्मकं मनः। भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति, तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः, तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः। एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता।

तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः, कर्मेन्द्रियाणां यथासंख्यं वचनादानन्दविसर्गविहरणानि। अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः, शेषाः षोडशविकाराः। तत्र सर्व एवाचेतन एष वर्गः पुरुषः पञ्चविंशतितम कार्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति क्षीरादींश्चात्र हेतूनुदाहरन्ति[3]।'

चरकस्तु [4]अव्यक्तात्मनोरभेदं मत्त्वा 'चतुर्विंशक इत्येष राशिः पुरुषसंज्ञकः' इत्याह[5]। आत्मनि च सत्त्वभूतगुणेन्द्रियसंयोगेन चैतन्यमभिव्यज्यते। आत्मनश्च[6] ज्ञत्वेनाव्यक्तसंज्ञकेन चाभेदान्नात्र पञ्चविंशतिककल्पना। सुश्रुतस्तु अव्यक्तमचेतनं मत्त्वा 'पुरुषः पञ्चविंशतितमश्चेतयिता भवती'त्याह[7]।

पुरुषश्च त्रिगुणात्मको भवति यथा च सुश्रुते 'तत्र कारणानुरूपं कार्यमिति कृत्वा सर्वे एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति, तदञ्जनत्वात्तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्ति[8]। अत एव गीतायामपि—

१. कर्मफलभागित्यर्थः। तेन चिकित्सितकर्मफलमप्यवाप्नोतीत्युक्तं भवति।
( सुश्रुत० शा० १।१६ डल्हणटीका )

२. सु० शा० १।१६। ३. सु० शा०, १।४-६, ८।

४. 'अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः' ( च० शा० १।६१ )

५. च० शा०, १।३५।

६. 'आत्मा ज्ञः करणैर्योगाज् ज्ञानं त्वस्य प्रवर्तते' ( च० शा० १।५४ )

७. सु० शा०, १।८। ८. सु० शा०, १।९।

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसंगिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥
ऊर्ध्वं गच्छन्ति सत्त्वस्थाः मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥
सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च[1] ॥
देवत्वं सात्त्विका यान्ति मनुष्यत्वं तु राजसाः ।
तिर्यक्त्वं तामसा नित्यमेषा च विविधा गतिः[2] ॥

पुरुषश्च लोकेन तुल्य आख्यातः[3] । यतो हि भूतविकारमयत्वं यथा लोकस्य तथा शरीरस्यापि । एवञ्च यावन्तो[4] भावविशेषा आध्यात्मिका वा अन्तरात्मसत्त्वाहङ्कारादयो भौतिका वा मूर्तिक्लेदादयः, ते पुरुषगता लोकेनापि समाना भवन्ति । पुरुषश्च मोहाभिभूतो मिथ्याज्ञानादिच्छाद्वेषवशीकृतो धर्माधर्मरूपं कर्म करोति, तच्च मूलं संसारस्य । यथा च—

'मोहेच्छाद्वेषकर्ममूलाप्रवृत्तिः । तज्जा ह्यहङ्कारसङ्गसंशयाभिसंप्लवाभ्यवपातविप्रत्ययाऽविशेषानुपायास्तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुष-

---

१. गीता—१४।१४ १८ ।                    २. मनु० १२।४० ।

३. 'महाभूतविकारप्रविभागेन त्विदानीमस्य तांस्तांश्चैवाङ्गावयवान् कांश्चित्पर्यायन्तरेणापरांश्चानुव्याख्यास्यामः । मातृजादयोऽप्यस्य महाभूतविकारा एव । तत्रास्याकाशात्मकं शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च । वाय्वात्मकं स्पर्शः स्पर्शनं रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्यः । अग्न्यात्मकं रूपं दर्शनं प्रकाशः औष्ण्यञ्च । अबात्मकं रसो रसनं शैत्यं मार्दवं स्नेहः क्लेदश्च । पृथिव्यात्मकं गन्धो घ्राणं गौरवं स्थैर्यं मूर्तिश्चेति ।' ( च० शा० ४।१२ । )

४. तस्य पुरुषस्य पृथिवी मूर्तिः । आपः क्लेदः । तेजोऽभिसन्तापः । वायुः प्राणाः । वियत् सुषिराणि ब्रह्मान्तरात्मा । यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः । ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वम् । यस्त्विन्द्रो लोके पुरुषेऽहङ्कारः सः, आदित्यस्त्वादानम्, रुद्रो रोषः, सोमः प्रसादः, वसवः सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थाश्च, तमो मोहः, ज्योतिर्ज्ञानम् । यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानम्, यथा कृतयुगमेवं बाल्यम्, यथा त्रेता तथा यौवनम्, यथा द्वापरं तथा स्थाविर्यम्, यथा कलिरेवमातुर्यम् । यथा युगान्तस्तथा मरणमिति । एवमेतेनानुमानेनानुक्तानामपि लोकपुरुषयोरवयवविशेषाणामग्निवेश ! सामान्यं विद्यात् ( च० शा० ५।५ ) ।

मन्त्रतत्यैवोत्तिष्ठन्ति । यैरभिभूनो न सत्तामतिवर्तते । धृतिस्मृतिरहङ्काराभिनिविष्टः सक्त ससंशयोऽभिसंप्लुतबुद्धिरभ्यवपतितोऽन्यथा दृष्टिरविशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्वशरीरदोषमूलानां सर्वदुःखानां भवति । एवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्तते प्रवृत्तिम्, सा च मूलमघस्य[1] ।'

एवञ्च रजस्तमोभ्यां पुरुषस्य संसारे पौनःपुन्येन संसरणं जायते । कर्मफलादिभिश्चानुबद्धोऽनुभवति जन्ममरणादिक्लेशजातम् । सत्त्ववृद्धया च निवर्तते संसरणकारणजातमिति । तथा हि—

रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान् ।
ताभ्यां निराकृताभ्यां तु सत्त्ववृद्धया निवर्तते ॥
अत्र कर्मफलं चात्र ज्ञानं चात्र प्रतिष्ठितम् ।
अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता ॥
एवं यो वेद तत्त्वेन स वेद प्रलयोदयौ ।
पारम्पर्यं चिकित्सां च ज्ञातव्यं यच्च किञ्चन[2] ॥
पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ।
अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।
रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्तते ॥
तेषां द्वन्द्वे परासक्तिरहङ्कारपराश्च ये ।
उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा[3] ॥

एवञ्च रजस्तमोभ्यामेव भूतविद्यासम्बन्धिनो व्याधयोऽपि समुद्भवन्ति पुरुषेऽतश्च पुरुषनिरूपणमुपस्थापितमत्रेति ।

## भूतविद्यायां मनोविचयस्य प्रयोजनम्

आयुर्वेदे शरीरेण साकं सत्त्वस्य सर्वत्रैव स्थले महत्त्वमाख्यातमास्ते । शरीरं मनश्चोभयं व्याध्याश्रयम्[4] । चतुर्विंशतिकपुरुषनिरूपणे मनश्च[5] परिगणितम् । सृष्टिक्रमे च त्रिगुणात्मकादव्यक्तान्महानुत्पद्यते[6] ( बुद्धितत्त्वम् समुत्पद्यते )। बुद्धेश्च त्रिगुणात्मकगुणपरिणामात् तल्लक्षण एव वैकारिकस्तैजसो भूतादिरिति त्रिविधोऽहङ्कार उत्पद्यते । ततश्च वैकारिकादहङ्कारात्तैजससहायाल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते, । तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तो-

---

१. च० शा० ५।१० । २. च० शा० १।३६-३८ ।

३. च० शा० — १।६७-६९ ।

४. शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः । ( च० सू० १।५५ । )

५. पुनश्च धातुभेदेन चतुर्विंशतिक स्मृतः ।
मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी ॥ ( च० शा० १।१७ । )

६. सु० शा० — १।४, च० शा० १।१७ ।

पस्थपायुपादमनांसि। तत्र पूर्वाणि पञ्चबुद्धीन्द्रियाणि, इतराणि, पञ्चकर्मेन्द्रियाणि, उभयात्मकं मनः। तेन च 'कारणगुणाः कार्यगुणानारभन्ते', इति न्यायात् मनोऽपि सत्त्वरजस्तमःस्वभावकं भवति। इदं चावधेयमस्ति यद् बुद्ध्यहङ्कारमनसां शरीरापेक्षया प्राक्तनो विकासोऽभूत्। मनश्च शरीरस्थसंनद्धानीन्द्रियाश्वान् सारथिरिव संचालयति यथाभीष्टविषयेषु। मनश्च शरीरस्य नियामकं सञ्चालकं सूक्ष्मतमक्रियाशीलं द्रव्यमाम्नातम्[1]। मानसश्च व्यापारस्तन्निहितत्रिगुणद्वारेणैव संपद्यते। सत्त्वञ्च लघुप्रकाशकञ्च भवति, सत्त्वगुणोद्रिक्तञ्च मनः सत्त्वमभिधीयते। प्राकृतावस्थायां रजस्तमसीत्युभावप्यभिभूतौ स्तः। सति च वैकृत्ये रजस्तमसी समुद्रिक्ते भवतः।

यथा च देहगविकृता वातपित्तकफा धारयन्ति, विकृताश्च घ्नन्ति, तथैव विकृतौ मानसदोषौ (रजस्तमश्च) मनोविकारकरौ भवतः। शरीरस्य मनसश्च[2] पोषणं पाञ्चभौतिकेनाहाररसेन सम्पद्यते। तयोश्च द्वयोरपि निर्वृत्तिः पोषणञ्च यथा समानम्, तथैव देहोपादानभूतत्रिधातुवैषम्ये मनोविकृतिर्जायते, मनसि च क्षुब्धे देहस्थदोषधातुमलानां वैकृत्यमुपजायते। द्वयोश्च सुतरां घनिष्ठः सम्बन्धो वर्तते, यस्य च चिन्तनं निबन्धेऽस्मिन् बहुषु स्थानेषु सन्निवेशितमास्ते यथाप्रकरणमिति।

**यजुर्वेदे मनसो महत्त्वम्**—यजुर्वेदस्य चतुस्त्रिंशत्तमेऽध्याये षट्सु मनसः कल्याणमयसंकल्पवत्त्वप्रार्थनापूर्वकं तत्क्रियाविशेषा निर्दिष्टाः। एषु च मन्त्रेषु मनोजिज्ञासितव्यविषयेषु यथेष्टं प्रकाशो निक्षिप्तो वर्तते—

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु॥ १॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु॥ २॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु॥
येनेदं भूतं भुवनं भविष्यपरिगृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु॥
यस्मिन्नृचः सामयजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु[3]॥

---

१. खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः—(च० सू० १।४८।)
२. अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमः तन्मांसं, योऽणिष्ठस्तन्मन इति—(छा० उ० ६।५।१)
३. य० वे०—३०-३४।१-६।

व्याख्या—'दैवम्' देवस्य आत्मनो ज्ञानसाधनम्। 'यत् जाग्रतः दूरम् उत+आ+एति'—यन्मनः जाग्रतः पुरुषस्य इतस्ततो भ्रमति। 'दूरङ्गमम्'—सुदूरगामी। 'ज्योतिषां ज्योतिः'—शब्दादिग्राहकाणामिन्द्रियाणामपि (प्रकाशकानां) प्रकाशकः—ज्ञापकः। 'एकम्' एकमेव विद्यते, तेन एकस्मिन् समये एकस्यैव विषयस्य बोधः। 'अपसः मनीषिणः धीराः यज्ञे विदथेषु येन कर्माणि कृण्वन्ति'—कर्मनिष्ठा मनस्विनो मेधाविनो यज्ञेषु (स्वाध्यायाग्निहोत्रादिषु) येन मनसा यज्ञ-दान-तपस्त्रिविधं कर्म कुर्वन्ति। 'यत् अपूर्वम्'—यत् सर्वोत्तमगुणकर्मस्वभावकम्। 'यज्ञम्—पूजनीयम्। 'प्रजानाम् अन्तः'—सर्वप्राणिषु स्थितः। 'यत् प्रज्ञानम् उत चेतः धृतिश्च'—यत् विशिष्टज्ञानमयं धृतिस्मृतिमयञ्च विद्यते। 'यत् प्रजासु अन्तः अमृतं ज्योतिः' यन्मनः प्राणिनामन्तः शाश्वतं ज्योतिः। 'यस्मादृते किञ्चन कर्म न क्रियते' यद्विना न किमपि कार्यं कर्तुं शक्यते। 'येन अमृतेन इदं सर्वं भूतं भुवनं भविष्यत् परिगृहीतम्'—येन मनसा भूतभविष्यवर्त्तमानरूपं त्रैकालिकं ज्ञानं योगाभ्यासबलेन सम्पाद्यते। 'येन सप्तहोता' येन मनसा सह-नेत्र-नासा-कर्ण-मुखानां सप्तरन्ध्रा ज्ञानमुत्पादयन्ति। 'येन यज्ञः तायते'—येन ध्यानादियज्ञं विधीयते। 'रथनाभौ प्रतिष्ठिताः अरा इव ऋचः सामयजूंषि चित्तं यस्मिन्' रथनाभौ यथा अराः सन्निविष्टास्तथैव मनसि ऋग्वेदस्य यजुर्वेदस्य सामवेदस्य अथर्ववेदस्य (चित्तं 'चिती संज्ञाने' विशिष्टज्ञानाश्रयोऽथर्ववेदः) च ज्ञानं प्रतिष्ठितं भवति। 'यस्मिन् प्रजानां सर्वं ओतम्'—यस्मिंश्च मनसि सूत्रे मणयो यथा प्रोतास्तथा ज्ञानम् ओतं प्रोतम्। सुषारथिरश्वानिव अभीशुभिः वाजिन इव यत् मनुष्यान् नेनीयते'—यथा योग्यः सारथिः प्रग्रहनियन्त्रणेन वेगवतोऽश्वान् नियन्त्रयति, तथैव मनोऽपि मनुष्यान् स्वेष्टप्रदेशे नयति। 'यत् हृत्प्रतिष्ठम्'—यन्मनः हृदि स्थितमास्ते। 'यत् अजिरम्'—यन्मनः मानवान् विषयेषु प्रेरयति।' 'अज गतिक्षेपणयोः' तथा 'जृष् वयोहानौ' धातुः। 'जविष्ठम्'—यन्मनः वेगवद्भवति, तादृशं मनः। 'तन्मे मनः शिवसंकल्पमस्तु' मम मनः कल्याणमयसंकल्पयुक्तं भवतु।

अत्र चेदम् तथ्यं वर्णितम्—यन्मन आत्मनः चैतन्यज्ञापनसाधानम्। मनश्च इन्द्रियम्—इन्द्रशब्देन च आत्मा उच्यते, स इयते लिङ्ग्यतेऽनुमीयते अनेनेतीन्द्रियम्। एवञ्च अनेन वचनेन मन इन्द्रियमुच्यते। ज्ञानेन्द्रियाणि च मनसा संयुज्यन्ते, तद्द्वारेणैव मनो विषयान् विज्ञापयति आत्मने। सर्वं च ज्ञानम् मनसि निहितं भवति। योगाभ्यासेन त्रैकालिकज्ञानोपलब्धिश्च मनसैव जायते। सर्वाणि च कर्माणि मन एव कारयति। मनश्चेन्द्रियाण्यधितिष्ठति निग्रहञ्च करोति। एवञ्च तद् ज्योतिषां ज्योतिरित्युच्यते। मनश्चात्मना संनिबद्धम्, तस्य च स्थानम् हृदयमित्युच्यते। 'हृदयं चेतनास्थानमुक्तं सुश्रुतदेहिनाम्'[1]।'

एवञ्च भूतविद्यायां मनोविचयो भूतविद्यासम्बन्धिरोगाणां हेतुलिङ्गोपशान्तिषु परमुपयुज्यते।

---

१. सु० शा० ४।३४।

**मनसः स्वरूपम्**—आत्मनश्चैतन्ये मनसः प्रधाना भूमिका वरीवर्ति। ज्ञानेन्द्रियैः कर्मेन्द्रियैश्च यज्ज्ञानं कर्म च आत्मा सम्पादयति, तत्र मन[1] एव मध्यवर्तित्वेनावतिष्ठते। मनश्चेन्द्रियाणामधिष्ठाता। मनोऽधिष्ठितान्येव ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च कार्मुकाणि भवन्ति। आत्मेन्द्रियेन्द्रियार्थसन्निकर्षेऽपि मनोऽनवस्थानान्न तद्विषयकं ज्ञानमुत्पद्यते[2]। यदा च आत्मा मनःसंयुक्तो भवति, मनश्चेन्द्रिययुक्तं[3] भवति, इन्द्रियञ्चेन्द्रियार्थेन सह संगतं भवति, तदैवेन्द्रियार्थावबोधो जायते। यथा चाङ्गुष्ठमध्यमांगुलितलजः शब्दः, यथा वा वीणातन्त्रीनखसन्निपाताद्ध्वनिरुदेति, तथैव आत्मेन्द्रियेन्द्रियार्थमनःसन्निकर्षाद् ऐन्द्रियकं ज्ञानं सम्पद्यते[4]। एवञ्च ज्ञानस्य कर्मणश्च मूलं मनः आत्मनश्च ज्ञानसाधनत्वाद् इन्द्रियमुच्यते[5] (इन्द्र आत्मा स ईयते लिङ्ग्यतेऽनुमीयतेऽनेनेतीन्द्रियम्)। द्वयोश्च ज्ञानकर्मेन्द्रिययोर्मनः परिगण्यते उभयात्मकत्वात्[6]। मनश्च चिन्तन-विचारण-ऊहन-ध्यान-संकल्पनाद्याभ्यन्तरक्रियासु व्यापृतमाभ्यन्तरज्ञानप्रक्रियासु च व्यापृतत्वादाभ्यन्तरमिन्द्रियमुच्यते। तत्सहकारित्वेन च चित्तबुद्ध्यहङ्कारा व्याप्रियन्ते। अतश्चैतच्चतुष्टयमन्तः[7]करणाख्यां भजते।

---

१. (क) मनः पुरस्सराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति — च० सू० ८।७।

(ख) बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च मनोऽधिष्ठितानामेव प्रवृत्तेः।
— (सु० शा० ४।१४ डल्हणटीका)

(ग) इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते — (च० शा० १।२२)

२. (क) इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुपपत्तिः (— न्यायदर्शन ३।२।२१।)

(ख) सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्तते।
वैवृत्यान्मनसो ज्ञानं सान्निध्यात् तच्च वर्तते॥ (च० शा० १।१८-१९।)

३. (क) आत्मा मनसा युज्यते मन इन्द्रियेण, इन्द्रियमर्थेन।
—(न्यायसू० १।१।४ वात्स्यायनभाष्यम्।

(ख) पञ्चेन्द्रियबुद्धयः चक्षुर्बुद्ध्यादिकाः। ताः पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः।
— (च० सू० ८।१२)

(ग) आत्मेन्द्रियमनोर्थानां सन्निकर्षात् प्रवर्तते।
व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निगद्यते॥ (च० सू० ११।२०)

४. आत्मेन्द्रियमनोऽर्थानामेकैका सन्निकर्षजा।
अङ्गुल्यंगुष्ठतलजस्तन्त्रीवीणानखोद्भवः।
दृष्टः शब्दो यथा बुद्धिर्दृष्टा संयोगजा तथा॥ (च० शा० १।३३-३४)

५. एकादशेन्द्रियाण्युत्पद्यन्ते, तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसि।
—(सु० शा० १।४)।

६. तत्र पूर्वाणि पञ्चबुद्धीन्द्रियाणि, इतराणि पञ्चकर्मेन्द्रियाणि उभयात्मकं मनः—
— (सु० शा० १।४।)

७. मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वो स्मरणं विषया इमे॥ (वेदान्तभाष्यम्)।

मनः सहचरित एवात्मा कर्ता भोक्ता वा सम्भवति। मनः[१] संयुक्त एवात्मा शरीरधारणे प्रभवति। अचेतनमपि मनः आत्मप्रेरणया चेतनामधिगम्य शरीरस्य तन्त्रकं भवति[२]। यत्किमपि कार्यं मानवो विदधाति, भवतु नाम लौकिकं पारलौकिकं सामाजिकं वैयक्तिकं वा, तत्र सर्वत्रैव मनस एव कारणत्वमास्ते प्राधान्येन। मनश्च यादृशं प्रवरावरमध्यमं भवति, तदनुसारमेव प्रशस्तमप्रशस्तं वा कर्म करोति। सृष्टौ च यत्किञ्चित्कार्यं परिलक्ष्यते, तत्साधुत्वे मनसः स्वास्थ्यमतीव काम्यमत्यन्तमावश्यकञ्च वरीवर्ति। मनसः स्वास्थ्यलक्षणानि सत्त्वसारपुरुषलक्षणैरेव व्याख्येयानि। यथा चाह चरकाचार्यः—

'स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहाः दक्षाः धीराः समरविक्रान्तयोधिनः त्यक्तविषादाः सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टाः कल्याणाभिनिवेशिनश्च सत्त्वसारास्तेषां स्वलक्षणैरेव गुणा व्याख्याताः[३]।'

**सत्त्वसाराश्च प्रवरसत्त्वा भवन्ति**—'स्वल्पशरीरा ह्यपि ते निजागन्तुनिमित्तासु महतीष्वपि पीडास्वव्यथा दृश्यन्ते सत्त्वगुणवैशेष्यात्। मध्यसत्त्वास्तु अपरानात्मन्युपनिधाय संस्तम्भयन्त्यात्मनात्मानं परैश्चापि संस्तभ्यन्ते। हीनसत्त्वास्तु (अवरसत्त्वाः) नात्मना नापि परैः सत्त्वबलं प्रति शक्यन्ते उपस्तम्भयितुम्, महाशरीरा ह्यपि ते स्वल्पानामपि वेदनानामसहा दृश्यन्ते, सन्निहितभयशोकलोभमोहमाना, रौद्रभैरवद्विष्टबीभत्सविकृतसंकथास्वपि च पशुपुरुषमांसशोणितादीनि चावेक्ष्य विषादवैवर्ण्यमूर्च्छोन्मादभ्रमप्रपतनानामन्यतममाप्नुवन्त्यथवा मरणमिति[४]।'

**मनसश्चेतनत्वम्**—शरीरक्रियाभिः सह मनसो महान् सम्बन्धो वर्तते। पञ्चभिर्ज्ञानेन्द्रियैः पञ्चभिः कर्मेन्द्रियैश्च प्रवर्तमानानि कार्याणि मनसैव प्रवर्तितानि भवन्ति। हृत्स्पन्दनादिकमपि मनसोऽधीनत्वेन प्रतीयते, यतो मनसि क्षुब्धे हृदयं पीड्यते कदाचिच्च हृत्स्पन्दनमेवावरुध्यते। अथ च योगिनश्चित्तवृत्तिनिरोधं कृत्वा हृत्स्पन्दनस्य प्रतिबन्धनं दर्शयन्ति। योगश्च[५] चित्तवृत्तिनिरोधात्मक आख्यातः। मनस एवंविधे कर्तृत्वे विद्यमानेऽपि शारीरकार्यकारिषु द्रव्येषु तस्य द्वितीयं स्थानमास्ते।

---

१. गतिप्रवृत्त्यस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म — (च० शा० २।३८)

२. सत्त्वमिति चेति सत्त्वमुच्यते मनः। तत् शरीरस्य तन्त्रकम्, आत्मसंयोगात्। तत् त्रिविधं बलभेदेन प्रवरं मध्यं अवरञ्चेति। अतश्च प्रवरमध्यावरसत्त्वाश्च पुरुषा भवन्ति— (च० वि० ८।११९)।

३. च० वि० — ८।११०।       ४. च० वि० — ८।११९।

५. 'योगश्चित्तवृत्तिनिरोधः' — (पातञ्जलयोगसूत्रम्)।

क्रियावदपि[1] मनोऽचेतनं वर्तते । आत्मा तच्चेतयति चेतनधर्मवत्त्वात् । चेतनत्वाच्चात्मैव 'कर्त्ता' इत्युच्यते । क्रियावदपि मनः अचेतनत्वान्न कर्त्तेत्युच्यते । यथा व्यजनयन्त्रादीनां कार्मुकत्वे सत्यपि विद्युदभावान्न तेषां चालनं भवति, यथा वा यन्त्राङ्गदोषात् सत्यपि विद्युत्प्रवाहे व्यजनयन्त्रादिकं न चलति, एवमेव मनश्च आत्मसाहचर्यादेव कार्मुकं भवति, यद्वाऽऽत्मसाहचर्ये सत्यपि मनोऽनवस्थानान्न मानसमैन्द्रियकं वा ज्ञानं भवति । तथा चात्ममनसोर्मिथश्चैतन्योद्भावकत्वं[2] सिद्धयति ।

**मनसः पर्यायाः**—'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं[3] मनः' ( रामाश्रमी[4] टीका ) चित्तमिति । चिती संज्ञाने' ( भ्वा० प० से० भावे क्तः ( ३।३।११४ ) । 'श्वीदितः'—( ७।२।१४ । इतीण् निषेधः ।।१।। असुनि चेतः (उ० ४।१८९) ।।२।। ह्रियते विषयैः 'वृहोः षुग्दुकौ च' (उ० ४।१००। इति कयन् दुगागमश्च । हरति आहरति विषयानिति वा । 'हृदयं वक्षसि स्वान्ते वुक्कायाम्') इति हैमः (३।५४६) ।।३। 'स्वन शब्दे' ( भ्वा० प० से० ) । स्वन्यते स्म । 'क्षुब्धस्वान्त'—( ७।२।१८ ) इति मनसि निपातितम् । स्वान्तं चेतसि गह्वरे इति मेदिनी ( ५९।६९ ) ।।४।। हृदयस्य 'पदन्न'–( ६।१।६३ ) इति हृदादेशः । प्रभृतिग्रहणस्य प्रकारार्थत्वात्क्वचित्स्वादावपि । हरतेः क्विप् (३।२।१७८) । तुक् ( ६।१।७१ ) । व्यत्ययेन तस्य द इत्यन्ये । हृत्क्लीवं बुक्कचित्तयोः इति मे० ( ७५।१७ ) ।।५।। मन्यतेऽनेन । असुन् ( उ० ४।१८९ ) प्रज्ञाद्यणि ( ५।४।३८) मानसम् । मानसं स्वान्तसरसोः' इति हैमः (३।७९५) ।।६।। तदभावे मनः । मनश्चित्ते मनीषायामिति मे० (१७२। ३० ) अर्धर्चादिः ( २।४।३९ ) अयम् इत्येके । तदा मनाः इत्यपि ।।७।।

**निरुक्तिः**—'मन्यतेऽनेन' इति मनः । ( मन ज्ञाने' दिवा० आत्म० सकर्मकः अनिट् । 'मनु अवबोधने । तनादि० आत्म० ) मनुते इति मनः ।

**लक्षणम्**—आत्मनः, इद्रियाणाम्, इन्द्रियार्थानाञ्च सान्निध्ये सत्यपि कदाचिज् ज्ञानम् भवति, कदाचिच्च न भवति चेति दृश्यते, तेन इमौ ज्ञानस्य भावाभावौ कारणान्तरं सूचयतः, यच्च तदेव मनः । अर्थात् आत्मनः संयोगं कृत्वा इन्द्रियाणां सन्निकर्षेण वाह्यार्थानां ग्रहणे मनः कारणं भवति । तेन ज्ञानस्य भावे तत् कारणम् । यदा च मन इन्द्रियसम्बद्ध भवति, तदा ज्ञानं भवति । मनो यदिन्द्रियेण संबद्धं भवति, तस्येन्द्रियस्यैव विषस्य ज्ञानमात्मनो भवति । अयमेव ज्ञानस्य भावः । यदा

---

१. अचेतनं क्रियावच्च मनश्चेतयिता परः ।
युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ।।
चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते ।
अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ।। ( च० शा० १।७५–७६ )

२. निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ।। ( च० सू० १।५९ )

३. अमरकोषः–१।४।३१ । ४. अमरकोषस्य ।

मनः केनापीन्द्रियेण संबद्धं नास्ति, तदा कस्यापि ज्ञानेन्द्रियार्थस्य ज्ञानं न जायते। बाह्यार्थस्य ज्ञाने मनसः अभावत्वादात्मा समर्थो न भवति। एवञ्च ज्ञानस्याभावा भावश्च मनसः लक्षणम्। यथा च—

लक्षणं मनसो ज्ञानस्याभावो भाव एव च।
सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्तते ॥
वैवत्यान्मनसो ज्ञानं सान्निध्यात्तच्च वर्तते[1] ॥

'आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्[2]'

'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्[3]।'

**अयम्भावः**—यद् आत्मनः इन्द्रियैः सह इन्द्रियाणां विषयैः सह सम्बन्धे सत्यपि यस्य सम्बन्धेन ज्ञानं भवति, असम्बन्धेन च ज्ञानं भवति, तदेव ज्ञानहेतुसम्बन्ध-प्रयोजकं द्रव्यं मन इत्युच्यते। एवञ्च दृश्यते [4]यन्मनोऽनवस्थानात् प्रत्यक्षेऽपि विषये न दर्शनं, न श्रवणं न स्पर्शनादिकम् अनुभूयते। यतो हि मनः संयुक्तान्येवेन्द्रियाणि स्वविषयेषु प्रवर्तन्ते[5]।

'सुखाद्युपलब्धिसाधनमिन्द्रियं मनः' इति तार्किकाः। मनसः कर्मेन्द्रियज्ञाने-न्द्रियरूपतया उभयात्मकत्वमिति 'उभयात्मकं मनः' इति सुश्रुतसम्मतं लक्षणम्। क्वचन च ज्ञानेन्द्रियैः सह मनसो वर्णनं समुपलभ्यते। यथा—'षडिन्द्रियप्रसादः'[6]। तत्र मधुरो रसः षडिन्द्रियप्रसादनः[7]। 'मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति'[8]।

मनश्च महाभारते 'मनो व्याकरणात्मकम्' इत्याख्यातम्। अर्थात् मनोऽर्थानां चिन्त्यादीनां विषयणां सम्यग् विवेचनं कृत्वा इदमत्र विधेयं न वा विधेयम् इति

---

१. च० शा० १।१८-१९। २. वैशे० दर्श० ३।२।१। ३. न्यायद० १।१।१६।

४. 'अन्यत्र मना अभूवम् नादर्शम्, अन्यत्र मना अभूवम् नाश्रौषम्, मनसा ह्येव पश्यति मनसा शृणोति।' ( बृहदारण्यकोप० )

५. 'मनः पुरःसराणि चेन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति' ( च० सू० ८।७ )

(ख) चक्षुः पश्यति रूपाणि मनसा न तु चक्षुषा।
मनसः व्याकुलत्वे तु चक्षुः पश्यन्न पश्यति ॥
यथेन्द्रियाणि सर्वाणि पश्यन्तीत्यभिचक्षते।
न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति ॥ ( म० भा० शान्तिप० )।

(ग) 'आत्मेन्द्रियार्थसन्निकर्षः कार्योत्पत्तौ कारणान्तरसापेक्षः,
सत्यपि तस्मिन् कार्यानुत्पादात् तन्त्वादिवत्, अत्र यदपेक्षणीयं करणान्तरं तन्मनः।' तथा—'सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीनामभूतोत्पत्तिदर्शनात् कारणान्तर-मनुमीयते। श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राह्यान्तर-भावाच्चान्तःकरणम्।' ( प्रशस्तपाद० )

६. च० सू० २९। ७. सु० सू० २९। ८. गीता—१५।७।

मनसैव व्याक्रियते। अतश्च व्याकरणात्मकं मनः। यथा च वाचस्पतिमिश्राः— '( मनः ) बुद्धीन्द्रियं कर्मेन्द्रियं च चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः। यथा च —

इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते।
कल्प्यते मनसा तूर्ध्वं गुणतो दोषतोऽथवा॥
जायते विषये तत्र या बुद्धिर्निश्चयात्मिका।
व्यवस्यति तथा वक्तुं कर्तुं वा बुद्धिपूर्वकम्[1]॥

एवञ्च—

'उभयात्मकमत्र मनः, सङ्कल्पकमिन्द्रियञ्च साधर्म्यात्।
गुणपरिणामविशेषात् नानात्वं बाह्यभेदाच्च॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥
असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः[2]॥

मनसः द्वौ गुणौ—अणुत्वम्[3] एकत्वञ्च। अणुत्वं–सूक्ष्मत्वं। यद्यपि परमात्माऽपि सूक्ष्मस्तथापि स तु विभुः विभुश्च सर्वव्यापको भवति। यथा—ईश्वरः, परमात्मा। तद्विपरीतश्चाणुः—असर्वव्यापकः, असर्वगतः, एकदेशीयः। वस्तुतस्तु मनः अणु भवति। यदि मनः 'विभुः' भवेत्तदा सर्वेन्द्रियव्यापकं स्यात्तथा युगपदेव सर्वेन्द्रियविषयकं ज्ञानं जायेत? किन्तु नैव युगपज्ज्ञानम् भवति, अतश्च मनसोऽणुत्वमेव। यदि चानेकं मनो भवेत् तदाऽपि एकैकं मन एकैकेन्द्रियेण सह संयुक्तं युगपदेव सर्वेन्द्रियार्थानामवगमनं कारयेत्, न च तथा जायते, अतश्च एकमेव मनः। अर्थात् मनसः द्वौ गुणौ–अणुत्वमेकत्वञ्च। परमार्थतस्तु एकमेव मनः। यदनेकत्वप्रतीतिस्तत्तूपाधिभेदाद् भवति। यथा चाह चरकाचार्यः—

'स्वार्थेन्द्रियार्थसंकल्पव्यभिचरणाच्चानेकमेकस्मिन् पुरुषे सत्त्वं रजस्तमः सत्त्वगुणयोगाच्च, न चानेकत्वम्, अनेकमेककालमनेकेषु प्रवर्तते, तस्मान्नैककाला सर्वेन्द्रियप्रवृत्तिः[4]।'

---

१. च० शा० १।२२-२३। २. श्रीमद्भगवद्गीता ६।३४-३५।

३. 'अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ'—( च० शा० १।१९, ) 'तन्मनः यद्यात्मवद्युगपत् सर्वेन्द्रियव्यापकं स्वीक्रियते किं वा अनेकसंख्यमिन्द्रियवत् स्वीक्रियते, तदा पुनरपि युगपदिन्द्रियार्थसम्बन्धे पञ्चभिर्ज्ञानैर्भवितव्यम्, विभुना वा मनसा, अनेकैर्वा मनोभिर्युगपदधिष्ठितत्वादिन्द्रियाणाम्। न च भवन्ति युगपज्ज्ञानानि। तस्माद्युगपज्ज्ञानानुदयाल्लिङ्गान्मनोऽणुरूपमेकं च सिद्धयति।'

( च० शा० १।१९–चक्रपाणिटीका )

४. च० सू०—८।५

'एवञ्च यदि एकपुरुषेऽपि बहूनि मनांसि स्युस्तदा तान्यपि युगपदेककाल एव रूपादिज्ञानेषु प्रवर्तेरन्; न तु प्रवर्तन्ते, तस्मादेकमेवैकपुरुषे मन इत्यर्थः। 'दीर्घां शष्कुलीं भक्षयतो युगपत् पञ्चज्ञानान्युत्पद्यन्ते' इति ज्ञानं तु युगपदुत्पलशतपत्रभेदज्ञानवद् भ्रान्तम्। परमार्थतो युगपज्ज्ञानोत्पत्तौ हि सति विषयसन्निकर्षे सर्वदैव हि युगपज्ज्ञानानि स्युः। अत एव हि कारणान्महत्त्वमपि मनसो नास्ति, महत्त्वे सति हि युगपत्पञ्चेन्द्रियाधिष्ठानाज्ज्ञानोत्पत्तिः स्यान्न च भवति, तस्मादेकमणु च मन इति। यस्माच्चैकपुरुषे एकं मनोऽणुपरिमाणं च, तस्मात्कारणान्नैककाला सर्वेन्द्रियप्रवृत्तिर्न युगपदिन्द्रियाणि स्वविषयोपलब्धौ प्रवर्तन्ते इत्यर्थः। इन्द्रियाणि मनोऽधिष्ठितानि प्रवर्तन्ते, तेन यदा मनश्चक्षुरधितिष्ठति, तदा न घ्राणादीनि, एवं यदा घ्राणमधितिष्ठति तदा न चक्षुरादीनि'[1]।

**मनसः विषयाः —**

चिन्त्यं विचार्यमूह्यं च ध्येयं संकल्प्यमेव च।
यत्किञ्चिन्मनसो ज्ञेयं तत्सर्वं ह्यर्थसंज्ञकम्[2]॥

तत्रैव चक्रपाणिः —'चिन्त्यमित्यादि। कर्तव्याकर्तव्यतया वा यन्मनसा चिन्त्यते तच्चिन्त्यम्। विचार्यम्—उपपत्त्यनुपपत्तिभ्यां यद्विमृश्यते। ऊह्यं च यत् संभावनया ऊह्यते 'एवमेतद् भवति' इति। ध्येयं भावनाज्ञानविषयम्। संकल्प्यं गुणवत्तया दोषवत्तया वाऽवधारणाविषयम्। यत्किञ्चिदित्यनेन सुखाद्यनुक्तविषयावरोधः। मनसो ज्ञेयमिति इन्द्रियनिरपेक्षमनोग्राह्यम्।'

मनस उभयात्मकत्वाद् ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च विषया मनोविषयाः सन्ति, किन्तु नैतावन्मात्रा मनोविषयसीमास्ति, अपि त्वेतदतिरिक्ताश्चिन्त्यादिविषया अपि मनोविषया भवन्ति, यथा चोक्तमुपर्येव। इन्द्रियाणाञ्च[3] विषयाः नियता भवन्ति। किन्तु मनसस्तु विषयाः न सीमिता अत एव मनोऽतीन्द्रियमुच्यते। मनश्चेन्द्रियाण्यतिक्रम्य वर्तते। मनो हि सततमनेकान् विषयांश्चिन्तयति (चिन्ता-स्त्री, चिति, अ)। प्रागनुभूतज्ञानजन्ये संस्कारोद्बोधे पूर्वदृष्टपदार्थस्मरणे चिन्ता जायते। अतश्च मनश्चित्तमित्युच्यते (चिन्त्यते ज्ञायते अनेन चित् क्तः) अन्तःकरणमपि मनसः संज्ञा वर्तते। ('अन्तरभ्यन्तरं तद्वृत्तिपदार्थानां ज्ञानादीनां वा करणं अन्तःकरणं ज्ञानसुखादिसाधने अभ्यन्तरे मनोबुद्धिचित्तादिपदाभिलभ्यमाने—शब्दस्तोममहानिधिः) सुखदुःखाद्याभ्यन्तरज्ञानसाधकत्वेन मनः अन्तःकरणम्' उच्यते। अनुकूलवेदनीयं सुखं प्रतिकूलवेदनीयञ्च दुःखमित्युच्यते।

**मनसः प्राकृतकर्माणि—**

इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः।
ऊहो विचारश्च, (ततः परं बुद्धिः प्रवर्तते)॥ (च० शा० १, २१)

---

१. च० सू० ८।५—चक्रपाणिटीका। २. च० शा०—१।२०।
३. प्रतिनियतविषयकाणीन्द्रियाणि।

तत्र चक्रपाणिः—"इन्द्रियाभिग्रहः—इन्द्रियाधिष्ठानं मनसः कर्म, तथा स्वस्य निग्रहो मनसः कर्म । मनो ह्यनिष्टविषयप्रसृतं मनसैव नियम्यते । मनश्च गुणान्तर-युक्तं सद्विषयान्तरान्नियमयतीत्याहुरेके । यदुक्तम्—

विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते ।
नियन्तुमहितादर्थात् धृतिर्हि नियमात्मिका[1]।। इति ।

तेन धृत्या कारणभूतया मन आत्मानं नियमयतीति न स्वात्मनि क्रियाविरोधः । मनःकर्मान्तरमाह—ऊहो विचारश्चेति, अत्रोह—आलोचनज्ञानं निर्विकल्पकम् । विचारः-संकल्पनं-हेयोपादेयतया विकल्पनम् । चतुर्विधं हि विकल्पकारणं सांख्या मन्यन्ते । तत्र बाह्यमिन्द्रियरूपम्, आभ्यन्तरं तु मनोऽहङ्कारो बुद्धिश्चेति त्रितयम् । तत्रेन्द्रियाण्यालोचयन्ति निर्विकल्पेन गृह्णन्तीत्यर्थः । मनस्तु संकल्पयनि हेयोपादेय-तया संकल्पयतीत्यर्थः । अहंकारोऽभिमन्यते 'ममेदमहमत्राधिकृतः' इति मन्यत इत्यर्थः, बुद्धिरध्यवस्यति त्यजाम्येनं दोषवन्तम् उपाददाम्येनं गुणवन्तमित्यध्यवसायं करोतीत्यर्थः । ऊहस्तु यद्यपि बाह्यचक्षुरादिकर्म, तथापि तत्रापि मनोऽधिष्ठान-मस्तीति मनः कर्तव्यतयोक्तः । वचनं हि—

सान्तःकरणा बुद्धिः सर्वविषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि[2] ।। (सां०का० ३५)

ततः परं बुद्धिः प्रवर्तत इति ऊहविचारानन्तरं बुद्धिरध्यवसायं करोतीत्यर्थः । अहंकारव्यापारश्चाभिमननमिहानुक्तोऽपि बुद्धिव्यापारेणैव सूचितो ज्ञेयः । बुद्धिर्हि त्यजाम्येनमुपाददामीति वाऽध्यवसायं कुर्वती अहंकाराभिमत एव विषये भवति । तेन बुद्धिव्यापारेणैव अहंकारव्यापारोऽपि गृह्यते । बुद्धौ हि सर्वकरणव्यापारार्पणं भवति । यदुक्तम्—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति[3] ।। ( सां०का० ३६ )

इति चक्रपाणिः ।" मनसः प्रवरत्वे च पुरुषाः स्मृति-भक्ति-शुचि-धैर्य-गाम्भीर्योत्साहादिसम्पन्ना भवन्ति सत्वसाराश्च[4] ।

गर्भावस्थायां[5] मनोऽवक्रान्तां च कतिचन भावा जायन्ते, ते च सत्त्वजा एवाभिधीयन्ते । मानवस्य वैयक्तिकोत्कर्षाधायकमपि मन एव । दृश्यन्ते च जगति तादृशाः प्रवरसत्त्वाः पुरुषाः, ये किल किमप्यद्भुतं कार्यमाविष्कुर्वन्ति,

---

१. च० शा०—१।१००;    २. सां० का०—३५;    ३. सां० का०—३६ ।

४. च० वि०—८।९४ ।

५. यानि चास्य सत्वतः सम्भवन्ति तान्यनुव्याख्यास्यामः तद्यथा—भक्तिः, शीलं, शौचं, द्वेषः, स्मृतिर्मोहस्त्यागो मात्सर्यं, शौर्यं, भयं, क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं, मार्दव, गाम्भीर्य-मनवस्थितत्वमित्येवमादयश्चान्ये ते सत्वविकाराः । ( च० शा ३ । १९ )

महान्तमाश्चर्यजनकं कार्यजातमभिनिर्वर्तयितुं प्रयतन्तेऽभिनिर्वर्तयन्ति च साफल्येन। गर्भावस्थायामिदम् मनः[1] परलोकादेत्य स्पृक् शरीरमनुबध्नाति। मनसि च शीलं भक्तिः प्राणाश्च व्यपाश्रिताः। अत एव मनसि क्षोभमुपगते शीलादिषु वैकल्यमुपजायते। प्राणाश्च न स्थातुमर्हन्ति। तेन चेदमवसीयते, यन्मन एवास्य शरीरयन्त्रस्याभियन्ता। यदैव च गर्भे मनोऽवक्रमते, तदा प्रभृत्येव तदस्य शरीरस्य इन्द्रियाणाञ्चाभिग्राहकं भवति। यावच्च कार्यजातमस्मिन् देहे, देहेन वा सम्पद्यते, तदखिलमेव मनोऽभिनिर्वर्तयति। यथा चाह[2] वेलिसमहोदयः —

'Man is not a body consisting a mind, he is a mind operating through the dody.'

मनसः स्थानम्—अथर्ववेदे गर्भस्य विकासक्रमे मस्तिष्कस्य हृदयस्य च सहैव उपस्थितिः, शरीरवृद्ध्या चोभयोः परिवृद्धिश्च वर्णितो वर्तते। अथर्वा[3] (ब्रह्मा) हि गर्भपुरुषस्य शिरो हृदयञ्च सममेव निर्ममे। शिरश्च देवकोशः (इन्द्रियाणामधिष्ठानम्) उक्तस्तत्र च मनसः स्थितिः। शिरशि हिरण्यमये कोशे यक्षोऽधितिष्ठति (आत्मा मनो वा प्रतिष्ठितो वर्तते)।

एवमेव 'भेलसंहितायामपि' शिरसि मनसोऽवस्थानमाख्यातम्। शिरस्तालवन्तर्गतञ्च मनः ज्ञानेन्द्रियेषु कर्मेन्द्रियेषु च सञ्चरति। मनःपुरस्सराणि चेन्द्रियाणि विषयेषु प्रवर्तन्ते। मन एवेन्द्रियाणां रसादिकान् विषयान् वेत्ति। तदेव हृदयसंस्थितं सर्वेन्द्रियपरं चित्तमित्यभिधीयते। तदैव हि व्याघ्र इव विषयारण्यभूमिषु सञ्चरति। तथा च—

---

१. अस्ति च सत्वमौपपादुकम् यज्जीवं स्पृक्शरीरेणाभिसंबध्नाति। यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते, भक्तिर्विपर्यस्यते, सर्वेन्द्रियाण्युपतप्यन्ते, बलं हीयते, व्याधय आप्यायन्ते, यस्मादधीनः प्राणान् जहाति, यदिन्द्रियाणामभिग्राहकं च मन इत्यभिधीयतते। (च० शा ३। १९)

2. 'The body Itself is the result of the activity of mind, is moulded by mind and changed by mind.'

३. मूर्धानमस्य संसीव्याथर्वा हृदयं च यत्।
मस्तिष्कादूर्ध्वः प्रेरयत् पवमानोऽधिशीर्षतः॥
तद्वा अथर्वणः शिरो देवकोशः समुब्जितः।
तत् प्राणो अभिरक्षति शिरो अन्नमथो मनः॥
अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः॥
तस्मिन् हिरण्यमये कोशे त्र्यरे त्रिप्रतिष्ठिते।
तस्मिन् यद् यक्षमातन्वत् तद् वै ब्रह्मविदो विदुः॥

(अथर्व १०।१।२।२६-२७, ३१-३२)

शिरस्ताल्वन्तरगतं सर्वेन्द्रियपरं मनः ।
तत्रस्थं तद्धि विषयानिन्द्रियाणां रसादिकान् ॥
समीपस्थान् विजानाति त्रीन् भावांश्च नियच्छति ।
कारणं सर्वबुद्धीनां चित्तं हृदयसंस्थितम् ।
क्रियाणां चेतराणां च चित्तं सर्वस्य कारणम्[1] ॥

स्मृतिबुद्धिसत्त्वसंप्लवाज्जनोऽपस्मरति । सत्त्वस्य च निवासभूमिर्हृदयमिति चरकेऽपस्मारनिदाने स्पष्टमुक्तम्—"दोषाः प्रकुपिताः रजस्तमोभ्यामुपहतचेतसामन्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसृत्य पर्यवतिष्ठन्ते तथेन्द्रियायतनानि च । तत्र चावस्थिता हृदयमिन्द्रियाणि च ईरिताः कामक्रोधभयलोभमोहहर्षशोकचिन्तोद्वेगादिभिः सहसा अभिपूरयन्ति, तदा जन्तुः अपस्मरति[2]" ।

यच्च चरके[3] 'आत्मस्थे मनसि स्थिर' इति तदपि आत्मस्थत्वं मनसः हृदयस्थत्वमेव । मनसश्च हृदयस्थत्वमन्यत्रापि चरके सुश्रुते च प्रोक्तम्—

षडङ्गमङ्गविज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।
आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संस्थितम्[4] ॥

हृदिस्थस्य मनसः परिपालनहेतुष्वपि हृदयसंरक्षणनिर्देशेऽवधानदानमुपदिष्टम्—

तन्महता महामूलास्तच्चौजः परिरक्षता ।
परिहार्या विशेषेण मनसो दुःखहेतवः ॥
हृद्यं यत्स्याद्यदोजस्यं स्रोतसां यत्प्रसादनम् ।
तत्तत्सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव च[5] ॥

श्रीमद्भगवद्गीतायामपि मनसो हृदि निरोध उक्तः—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्[6] ॥

तथा च— हृदयं चेतनास्थानमुक्तं सुश्रुत ! देहिनाम्[7] ।

'तद्हृदयं विशेषेण चेतनास्थानम्, अतस्तस्मिन् तमसाऽऽवृते सर्वप्राणिनः स्वपन्ति[8] ।' तत्रैव डल्हणः—'चेतनास्थानम्—चेतन्यास्पदम्, सामान्येन तु सकलमेव शरीरं चेतनास्थानम् । तदुक्तं चरके ( शा० १ । १३६ )—

१. भेलसंहिता—उन्मादचि पृ० १४९ । २. च० नि० ८।४ ।
३. च० शा० १।१३८ । ४. च० सू० ३०।४ । ५. च० सू० ३०।१३-१४ ।
६. श्रीमद्भगवद्गीता अ०—८ । १२-१३ । ७. सु० शा० ४ । ३४ ।
८. सु० शा० ४ । ३१ ।

वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः ।
केशलोमनखाग्रान्नमलद्रवगुणैर्विना ।। इति ।

चेतनासहचरितं मनोऽपि विशेषेण हृदयाधिष्ठानं मतम् । आचार्यचक्रपाणिना च—

'तस्योपघातान्मूर्छाम् भेदान्मरणमृच्छति'[1] इत्यत्र प्रतिपादितम् यत् संसारी किल आत्मा भोगायतनशरीरहृदयस्थ एव सुखदुःखचिन्तोद्वेगादीननुभवति, प्रत्यक्षश्चोपलभ्यते, यद् अतिचिन्तनाद् दुःखातिरेकादतिशोकाच्च हृदयमेव पीड्यते । तथा चाह चक्रपाणिः—

आत्मा ह्यत्र संसारी भोगायतनत्वेनाभिप्रेतः । स च हृदयप्रदेश एव सुखदुःखाद्युपलभते इत्यनुभवसिद्धम्, तेन हृदयाश्रित इवात्मा तथा मनोऽपि प्रायेण हृद्येव तिष्ठति, यतः उपरतक्रियं मनो हृद्येव तिष्ठति—तथा ध्याने योगे च ।

हृदिस्थमेव मनो भवति । यदप्युक्तम्-'आत्मस्थे मनसि स्थिरे'[2] इति तदप्यात्मस्थत्वं मनसो हृदयस्थत्वमेव । एवं ज्ञानसुखदुःखानि च हृदयस्थान्येव लक्ष्यन्ते, तथा ह्यतिचिन्तनात्तथा दुःखावेशाद्वा हृदयमेव पीड्यते नान्यदङ्गम् । अलमात्मनि व्यापके आश्रयाश्रयिभावेन व्युत्पादितेन, यस्त्वात्मा संसारी हृदयाश्रितो भवति, तस्यैव हृदयनाशान्नाश इति ।'

योगवाशिष्ठे च वैशद्येन मनोनिरूपणं कृतमास्ते । अतश्च तदनुसारमेव मनसो हृदयस्य च वर्णनोपक्रमः क्रियते—इदञ्च अनन्तरूपं विश्वं मनःसंकल्परचितम् । तथा च—

अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः ।
संकल्पशक्तिरचितं तद्रूपं तन्मनो विदुः ।। (यो० वा०)
चित्ते चलति संसारो निश्चले मोक्ष उच्यते ।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
सहस्राङ्कुरशाखाग्रफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिति स्थितम् ।।

नैरुज्ये, योगे, मोक्षे च मनसः विधेयत्वमतीव अपेक्षणीयमस्ति—'सत्त्वं विधेयं विशदा च बुद्धिः[3]' । तस्य च मनसः स्थानं हृदयमिति पूर्वमुक्तम्; किञ्च तद्धृदयमिति जिज्ञासायां पुनरुच्यते—

श्रीराम उवाच—

ब्रह्मन् जगति भूतानां हृदयं तत्किमुच्यते ।
इदं सर्वं महादर्शे यस्मिंस्तत्प्रतिबिम्बति ।।

श्रीवशिष्ठ उवाच—

साधो जगति भूतानां हृदयं द्विविधं स्मृतम् ।
उपादेयं च हेयं च विभागोऽयं तयोः शृणु ।।

---

१. च० सू०—३० । ६; २. च० शा०—१ । १३८; ३. च० शा० ४ । ४७ ।

इयत्तया परिच्छिन्ने देहे यद्वक्षसोऽन्तरम् ।
हेयं तद्धृदयं विद्धि तनावेकतटे स्थितम् ।।
संविन्मात्रं तु हृदयमुपादेयं स्थितं स्मृतम् ।
तत्तु प्रधानं हृदयं तत्रेदं समवस्थितम् ।।
सर्वेषामेव जन्तूनां संविद् हृदयमुच्यते ।
न देशावयवैकांशो जडजीर्णोपलोपमः ।।
तस्मात् संविन्मये शुद्धे हृदये हृतवासनः ।
बलाभियोजिते चित्ते प्राणस्पन्दो निरुच्यते ।। इति ।

एवञ्चोपरिनिर्दिष्टावतरणपाठेन स्पष्टमेव हृदयद्वयमवगम्यते । एकश्च संविन्मात्रं हृदयं ( BRAIN ) प्रधानमपरश्च तनावेकतटे स्थितम् ( HEART ) इत्याख्यम् । तदुभयमपि यद्यपि चेतनास्थानत्वेन सत्त्वादिधामरूपेण वर्णितम्, तथापि नेदं विस्मरणीयम् यद् वक्षसोऽन्तरं हृदयं मूलस्थानं सत्त्वस्य, किन्तु कायमञ्चालनं तु उपादेयहृदयद्वारेणैव भवति । यस्य च शिर एव कार्यालयः, कार्यक्षेत्रन्तु समस्तमेव शरीरम् इत्यग्रे व्याख्यास्यते ।

हेयहृदयम्—'सत्त्वादिधामहृदयं स्तनोरः कोष्ठमध्यगम्[१] ।'

उपादेयहृदयम्—तद्धि मस्तिष्कस्थम्—

रसवातादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम् ।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते[२] ।।

( तत्र चक्रपाणिः—'रसवातेत्यादि—रसवातादिवहानां दश धमनीनां हृदयं स्थानम्, रसवहा एव या दश धमन्यो हृदयाश्रया उक्तास्ता एव वातादिवहा यदुक्तं-'वातपित्तश्लेष्मणां सर्वशरीरचराणां सर्वाणि स्रोतांस्ययनभूतानि'[३] इति रक्तादीनां तु सर्वशरीरचराणामपि विशेषेण हृदयं स्थानमुक्तम् 'षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम्। आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संश्रितम्[४]।') 'मस्तिष्कात् सुषुम्ना-इडा-पिंगला निःसरन्ति, इति 'षट्चक्रनिरूपणे' 'शारदातिलके' च सुस्पष्टं वर्णितम् । मस्तिष्कस्थश्च हृदयं पद्मोपममाख्यातम्,[५] तत्र च मनसः स्थितिरुक्ता—

महामहोपाध्यायेन श्रीगणनाथनमहोदयेन च मस्तिष्कस्थस्योपायदेय हृदयस्य समर्थनमङ्गीकृतम् । यथा च—'यत्तु वैद्यके—'बुद्धेर्निवासं हृदयं प्रदूष्य' इत्यादि विरुद्धप्रायं वचनं तन्मस्तिष्कमूलस्थिताज्ञाचक्रांशभूतब्रह्महृदयाभिप्रायेण । योगिनो हि षट्चक्रनिरूपणे मस्तिष्कमूलस्थमाज्ञाचक्रमुपक्रम्य 'एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम्' इति स्पष्टमाहुः । न मनोविहिता बुद्धिरस्ति ।

---

१. अष्टांगहृ० शा०–४।१३ ।    २. च० चि०–२४।३५ ।
३. च० वि०–५।६ ।    ४. च० सू०–३०।४।
५. एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम्–षट्चक्रनिरू० ।

श्रुतिश्च—'य एषोऽन्तर्हृदयं आकाशस्तस्मिन्नयं पुरुषो मनोमयः' इति ( तैत्तिरीयोपनिषदि ), यच्च सुश्रुतोक्तं -'हृदयं चेतनास्थानम्' इत्यादिवचनं तदपि एतदभिप्रायिकमेव ( प्रत्यक्षशा० उपोद्घाते )।

चरकाचार्योऽपि शिरः सर्वेन्द्रियाधिष्ठानत्वेन मन्यते। मनश्चेन्द्रियमिति शिरसि मनोऽवस्थितिरङ्गीक्रियते। तथा च—

प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च।
यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते[१] ॥

'कुक्षौ शिरः पूर्वमभिनिर्वर्तते इति कुमारशिरा भरद्वाजः, पश्यति हि सर्वेन्द्रियाणामधिष्ठानमिति कृत्वा[२]।' 'शिरसि इन्द्रियाणि इन्द्रियप्राणवहानि च स्रोतांसि सूर्यमिव गभस्तयः संश्रितानि[३]।'

हृदये मूर्ध्नि वस्तौ च नृणां प्राणाः प्रतिष्ठिताः।
तस्मात्तेषां सदा यत्नात् कुर्वीत प्रतिपालनम् ॥[४]

एवमेव[५] शिरसि ताडिते (अभिहते) मन्यास्तमम्भार्दितमोहोद्वेष्टनचेष्टानाशादयो विकाराः संजायन्ते इति चरके निगदितम्। तेन च शिरसि 'उपादेयहृदये' मनसः स्थानमिति युक्तियुक्तमेव प्रतिभाति। तस्य चोपादेयहृदयस्य वर्णनं चरकाचार्येण विशदीकृतमास्ते। तथा च—

'अर्थे दशमहामूलाः समासक्ताः महाफलाः।
महच्चार्थश्च हृदयं पर्यायैरुच्यते बुधैः ॥
षडङ्गमङ्गविज्ञानमिन्द्रियाण्यर्थपंचकम् ।
आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संस्थितम्[६] ॥

अनेन च कथनेन निश्चीयते यदर्थः—महत्—हृदयमिति पर्यायत्रयं संविद् हृदयस्यैव बोधकम्। अत्र च 'महामूलाः' इत्यस्य—'महत् हृदयं मूलं यासां धमनीनां तास्तथा' इति चक्रपाणिसम्मतोऽर्थः। अर्थाद् हृदयादेव धमन्यः प्रसृताः, ताश्च सूक्ष्मछिद्रमय्यः प्रणाल्यः। यथा चाह सुश्रुतः—

यथा स्वभावतः खानि मृणालेषु विसेषु च।
धमनीनां तथा खानि रसो यैरुपचीयते[७] ॥

---

१. च० सू०—१७।१२; २. च० शा०—६।२१।
३. च० सि०—९।४; ४. च० सि० ९।६।
५. 'शिरस्यभिहते मन्यास्तम्भार्दित-चक्षुर्विभ्रम-मोहोद्वेष्टन-चेष्टानाश-कासश्वास-हनुग्रह-मूकगद्गदत्वाक्षिनिमीलनगण्डस्पन्दनजृम्भण-लालास्राव-स्वरहानिवदनजिह्मत्वादीनि।' ( च० सि० ९। ६ )
६. च० सू०—३०। ३-४; ७. सुश्रुत० शा०—९। १०।

अत्र धमनीपदेन (NERVE) इति ज्ञेयम् । धमनीषु चान्तः किमपि तरलद्रवं ( CEREBROS SPINAL FLUID ) दरीदृश्यते । प्राचामाचार्याणाञ्च सूक्ष्मतमं शारीरं ज्ञानमासीदिति नात्र विसंवादः । अतश्च तैः सुस्पष्टमेव 'संविद्हृदय' विषये जिज्ञास्यं वस्तु प्रतिपादितम् । हृदयस्य यथा यन्महत्त्वं यथा वा अर्थ्यमानत्वेन अर्थ्यत्वं तद् हृदयस्य अभ्यर्हितत्वात् । यतो हि संविद्हृदयमेवाश्रिताः षडङ्गविज्ञानेन्द्रियार्थपञ्चकसगुणात्मचेतश्चिन्त्यादिकाः । संविद्हृदयस्य च स्वस्थावस्थायामेव सर्वमेतद् व्यवस्थितमवतिष्ठते । अमूनि च कार्याणि मस्तिष्कस्थहृदयेनैव सम्पाद्यानि । षडङ्गादयः सप्त भावाः संविद्हृदय एव प्रतिष्ठिताः । तथा चाह प्रतिष्ठाशब्दप्रयोगद्वारेण चरकाचार्यः—

'प्रतिष्ठार्थं हि भावानामेषां हृदय इष्यते ।<br>
गोपानसीनामागारकर्णिकेवार्थचिन्तकैः[1] ॥'

सेयमुपमा निश्चिनोति संविद्धृदयमेवात्र वर्णितमिति । ज्ञातमेव शारीरशास्त्रविदां यत्, एका स्वतन्त्रा प्रणाली धमनीचक्राभिधा । ( या च NERVOUS-SYSTEM 'नर्वस सिस्टम्' इत्यभिधीयते ) सुश्रुते शारीरे नवमाध्याये एतद्वर्णनं विस्तरेणोपलभ्यते । इदं च धमनीचक्रं मस्तिष्का-( BRAIN ) दुद्भूय पृष्ठवंशे विस्तीर्णतामुपगतम् । पृष्ठवंशरज्जुसमुदायाच्चोद्गता धमन्योऽखिले शरीरे प्रसृताः । आभिरेव ज्ञानेन्द्रियाणां ज्ञानं कर्मेन्द्रियाणाञ्च कर्माणि सञ्चाल्यन्ते । प्रत्यक्षशारीरधमनीचक्रावलोकने त्वियमुपमा योग्यतमा प्रतीयते । 'गोपानस्यः गृहाच्छादनाधारकाष्ठानि, आगारकर्णिका गृहाच्छादनमध्ये गृहाच्छादनकाष्ठनिबन्धनी लोके "आढकम् इत्युच्यते" ( चक्रपाणिः ) 'बड़ेरी' इति च भोजपुरीयभाषायामुच्यते । अनेन च सन्दर्भेण स्पष्टमेवाभिधातुं शक्यते, यत् प्राचीनैराचार्यैः शवच्छेदनद्वारेण समस्तस्य धमनीचक्रस्य निरवशेषेण ज्ञानमुपासितमासीदिति । धमनीचक्रस्य धमनीषु च यो हि 'ब्रह्मरसः' CEREBRO SPINAL FLUID) अवतिष्ठते, तदेव औजःसंज्ञकम् भवति, तत्सर्वमेव चरके वर्णितचरम् । तथा च—

तत्परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः ।<br>
हृदयं महदर्थश्च तस्मादुक्तं चिकित्सकैः ॥<br>
येनौजसा वर्तयन्ति प्रीणिताः सर्वजन्तवः ।<br>
यदृते सर्वभूतानां जीवितं नावतिष्ठते ॥<br>
यत्सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः ।<br>
संवर्तमानं हृदयं समाविशति यत्पुरा ॥<br>
यस्य नाशात्तु नाशोऽस्ति धारि यद् हृदयाश्रितम् ।<br>
यच्छरीररसस्नेहाः प्राणा यत्र प्रतिष्ठिताः[2] ॥

---

१. चरक० सू०—३० । ५ ।

२. च० सू०—३० ।

एतादृशी च विचारसरणिरमुमेव संविद्ध्रृदयमनुसरति, तत्सम्बद्धाश्च धमनीरभिव्यनक्ति। एवञ्च पूर्वोक्तदिशा मस्तिष्कस्थसंविद्धृदयमेव मनोऽधिष्ठानमिति मतमेव विदुषां स्वारस्यानुरोधक्षममिति निश्चेतुं शक्यते। तथा च संविद्धृदयस्थमपि मनः धमनीचक्रस्य सूक्ष्मातिसूक्ष्मशाखाप्रतानैरखिल एव काये सुदूरगामी विद्युत्प्रवाह इव लब्धप्रसरमिति। अन्यच्च यत्स्तनोरःकोष्ठमध्यगं हेयहृदयं, तदपि संविद्धृदयोद्गतधमनी- ( NERVES ) भिरेव सञ्चाल्यते।

वस्तुतस्तु—मनबुद्यहङ्कारात्मनां समस्तमेव जीवच्छरीरमधिष्ठानम्[१]।

शरीरस्यासंख्येयपरमाणुषु मनसः कार्याणि सम्पद्यन्ते[२]। 'It is because man thinks, not alone through his brain, but with his whole body. Every separate tiny cells is our infinite small spark, your mind can heal you. ( P. W. Balis. ) शरीरे च वातादयः[३] सर्वशरीरचराः, तेन च दोषाधिगतं शरीरं स्वयमेव स्वानुकूलद्रव्येषु रुचिं[४] करोति, विपरीतेषु च विरतिं विधत्ते। एवञ्चाखिले देहे मनसः तानि तानि विशिष्टानि कर्याणि क्रियन्ते।

प्राणिनां मनांसि च नैव समानानि भवन्ति। एकस्यापि जन्तोः बाल्ये, कैशोर्ये, यौवने, वार्धक्ये च मनोभेदाः जायन्ते। सत्ववैशेष्यकर-( Factors governing Mental growth ) भावानां वर्णनं महर्षिणा चरकेण चैवं कृतमास्ते 'सत्त्ववैशेष्यकराणि पुनस्तेषां प्राणिनां मातृपितृ-सत्त्वान्यन्तर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोचितं च कर्म सत्त्वविशेषाभ्यासश्चेति[५]।'

तत्र चक्रपाणिः—'मातापितृसत्त्वानीति मातापित्रनुकारेण सत्त्वानि प्रायः प्रभावादेव भवन्ति। अन्तर्वत्नी-गर्भिणी। श्रुतयश्चाभीक्ष्णमिति-यथा गर्भिणी गीतादि शृणोति तथा सत्त्वमपत्यं जनयाति। सत्त्वविशेषाभ्यासश्चेति—यथाविधं सत्त्वं पुरुषोऽभ्यस्यति जन्मान्तरे, तत्सत्त्व एव जायते। वचनं हि—

---

१. 'तद्वदतीन्द्रियाणां पुनः सत्त्वादीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतं च।' ( च० वि० ५। ७ ) तत्रैव गंगाधरः—'तत्तदिन्द्रियाणां इन्द्रियागोचराणां तु सत्त्वादीनां मन आत्मश्रोतृस्पर्शन—नयन—रसन—घ्राण—बुद्ध्यहंकारादीनां केवलं चेतनावत् सजीवं शरीरं स्रोतः अयनभूतम् अधिष्ठानभूतञ्च।' (अयनभूतम्—मार्गभूतम्। अधिस्ठानभूतम्-स्थानभूतं विशिष्टकार्यज्ञापकम् )।

२. 'शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्ति' ( च० शा० ७। १५ )

३. 'वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वस्रोतांस्ययनभूतानि'। ( च० वि० ५। ७ )

४. कुर्वते हि रुचिं दोषाः विपरीतसमानयोः।
वृद्धाक्षीणाश्च भूमिष्ठा लक्षयन्त्यबुधास्तु न॥ ( अ० हृ० सू० ११। ४३ )

५. चरक० शा०—८। १६।

जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः।
तेनैवाभ्यासयोगेन तच्चैवाभ्यस्यते पुनः ॥

'येनास्य खलु मनो भूमिष्ठं, तेन द्वितीयायां वा जातौ संप्रयोगो भवति[1]।' मनश्चायुर्वेदे 'औपपादुकम्' समाख्यातम्, अर्थात् मनः शरीरनिर्माणकाले परलोकादेत्य स्पृक्शरीरमभिसंवध्नानि । तत्सन्निधानाच्च प्राणानां स्थितिः, शीलादिकञ्चान्वेति, अन्यथा तु प्राणाञ्जहाति। तथा च—

'अस्ति च खलु सत्त्वमौपपादुकं इति यावज्जीवं स्पृक्जीवं स्पृक्शरीरेऽभिसंबध्नाति । यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते, व्याधय आप्यान्ते, यस्माद्धीनः प्राणान् जहाति, यद् इन्द्रियाणामभिग्राहकं च मन इत्यभिधीयते[2]।'

मानसीसिद्धिः—योगिनो यदा चात्मनि रजस्तमोविमुक्तस्य शुद्धस्य सत्त्वस्य समाधानं विदधति, तदा[3] तेऽष्टविधां सिद्धिम् ( अलौकिकीं शक्तिम्) आप्नुवन्ति। ताश्च १–परकायप्रवेशः, २–परचित्तज्ञानम्, ३–स्वेच्छया इन्द्रियार्थानामुत्पत्तिः, ४–अतीन्द्रियदर्शनं, ५–अतीन्द्रियश्रवणम् . ६–अतीन्द्रिय-स्मरणम् ७–अलौकिकक्रान्तिः. ८-स्वेच्छया अदर्शनानि च। अथ च गर्भावक्रान्तौ यदा गर्भः शुद्धेन (सत्त्वगुणाधिकेन) मनसा संसृज्यते, तदा जातो बालः पूर्वजन्मवृत्तान्तं स्मरति, तदा किल सः 'जातिस्मरः' इत्युच्यते[4]।

अत्मनिरूपणम्—ज्ञानाधिकरणमात्मा । स द्विविधः परमात्मा जीवात्मा चैति। ( तर्कसंग्रह )

'आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्' ॥ ४७ ।

'शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।
तथात्मत्वं नेन्द्रियाणामुपघाते कथं स्मृतिः' ॥ ४८ ।

'मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ।

---

१. च० शा०—३ । १९ ।   २. च० शा०—३ । १९ ।

३. 'आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।
शुद्धसत्त्वसमाधानात्तत्सर्वमुपजायते ॥'
( चरक० शा० १ । १४०—१४१ )

४. 'यदा तु तेनैव शुद्धेन संसृज्यते तदा जातेरतिक्रान्ताया अपि स्मरति स्मार्तं हि ज्ञानमात्मनस्तस्यैव मनसोऽनुबन्धादनुवर्तते, यस्यानुवृत्तिं पुरस्कृत्य पुरुषो जातिस्मर इत्युच्यते ।' ( च० शा० ३ । १९ )

'प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः' ॥ ५० ।
'विभुर्बुद्ध्यादि गुणवान्................. ॥'

( कारिकावली–प्रत्य० ख० )

आत्मा हि इन्द्रियेषु शरीरे च चैतन्याधायकत्वात् अधिष्ठाता' इत्युच्यते । शरीरे कर्तृत्वं चैतन्यञ्च यदि स्वीक्रियते, तदा मृतकशरीरे कर्तृत्व-चैतन्ययोरभावदर्शनाद् व्यभिचारः । अतश्च प्रमाणाभावान्न शरीरस्य चैतन्यम् । यदि चेत् चक्षुरादीनां रूपज्ञानादिकं प्रति कर्तृत्वमङ्गीकृतं स्यात्, तर्हि 'साधकाभावे साध्याभावः' इति नियमात् चक्षुरादिनाशे पूर्वदृष्टपदार्थानां स्मरणाभावो भवेत्; किन्तु नैवं भवति, यतः चक्षुरादिनाशेऽपि चक्षुरादीन्द्रियसात्कृतपदर्थानां स्मरणं जायते । अतश्च नैवेन्द्रियाणां चैतन्यमङ्गीकर्तुं पार्यते । मनसोऽपि न चैतन्यं, यतो हि—मनसोऽणुत्वात्, प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्वे तत्प्रत्यक्षानुपपत्तिः । अथ च मनोऽपि करणम् । कर्ता च करणाद्भिन्नो भवति । एवञ्च न मनसो चैतन्यञ्च ।

आत्मनश्च परमात्म-जीवात्मभेदेन भेदद्वयम् । तत्र सर्वज्ञः सर्वशक्तिमान् परात्परः विभुर्नित्यः 'परमात्मा' इत्युच्यते । स च निर्विकारो भवति । तथा च—

निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः[१] ॥'
'प्रभवो न ह्यनादित्वात् विद्यते परमात्मनः[२] ।
अनादिः पुरुषो नित्यः विपरीतस्तु हेतुजः ।
सदकारणवन्नित्यं दृष्टं हेतुजमन्यथा[३] ॥'

'परमात्मनः न हि प्रभवकारणं विद्यते, कस्मात् ? अनादित्वात् ।...... ....अनादिः=अकारणवान् पुरुषः=परमात्मा नित्यः । हेतुजः=कारणजन्यः । मोहेच्छाद्वेषकर्मजः पुरुषो राशिसंज्ञकः, विपरीतः=तद्विपरीतः अर्थात् अनित्यः । नित्यानित्ययोर्लक्षणमाह—सदिति । यत् सत् अकारणवच्च तत् नित्यं दृष्टं= नित्यमाख्यायते । न कारणवत् अकारणवत् । अनेन कारणजन्यघटपटादीनां व्यवच्छेदः । तथापि प्रागभावे अतिव्याप्तिः स्यादिति ? अत आह सदिति । सत् सत्तायोगी त्रिविधसमयेऽपि प्रमाणगम्याभावरूपम् । तेत प्रागभावस्य अकारणवतोऽपि अभावरूपतया अनित्यत्वं न व्यभिचारकम् । एतदुक्तं कणादेनापि— 'सदकारणवन्नित्यमिति'[४] । यत् हेतुजं कारणजन्यं तत् अन्यथा अर्थात् अनित्यम् । अकारणत्वात् परमात्मनो नित्यत्वम् । राशिपुरुषस्य यदनित्यत्वमुच्यते, तद् आत्मवर्ज्यानां तद्घटकपदार्थानामिति बोद्धव्यम्' । ( उपस्कारः )

---

१. च० सू०—१ । ५५ । २. च० शा०—१ । ५३ ।
३. च० शा०—१ । ५९ । ४. वै० द०—४ । १ । १ ।

जीवात्मा तु समवायेन सुखदुःखादिज्ञानाधिकरणम् अल्पज्ञः, अल्पशक्तिकः, कर्मफलभोक्ता च। देहातिरिक्तस्यात्मनः सद्भावनिरूपणम्—

करणान्यान्यता दृष्टा कर्ता भोक्ता स एव तु।
कर्ता हि करणैर्युक्तः कारणं सर्वकर्मणाम्॥
निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये।
भग्नानां च पुनर्भावः कृतं नान्यमुपैति च॥
मतं तत्त्वविदामेतद् यस्मात् तस्मात् स कारणम्।
क्रियोपयोगे भूतानां नित्यः पुरुषसंज्ञकः॥
अहङ्कारः फलं कर्मदेहान्तरगतिः स्मृतिः।
विद्यते सति भूतानां करणे देहमन्तरा[1]॥

उपस्कारटीका—"देहव्यतिरिक्तचेतनाभ्युपगमे तु सर्वमुपपद्यते। तदेव दर्शयितुमाह—कर्तुः कारणानां अन्यान्यता दृष्टा। लोके एकस्य कर्तुरनेकानि करणानि। यथा एकस्य सूत्रधारस्य वाद्यादीनि अनेकान्यस्त्राणि। कर्ता तु स एव। न तु भिद्यते। स एकः कर्ता करणैरनेकैर्युक्तः सन् काष्ठपाटनलौहघटनादिनानाकर्म करोति। करणानां परिणामितया भिद्यमानत्वेऽपि आत्मा पुनः अपरिणामि एकः। स विविधैः करणैरिन्द्रियादिभिर्युक्तः सन् दर्शनस्पर्शनादिकं नाना कर्म करोति।

तस्मात् देहव्यतिरिक्तचेनाभ्युपगमे कृतकर्मणः फलभोक्तृत्वं, बाल्ये दृष्टस्य यौवने स्मरणं सव्यदृष्टस्य इतरेण प्रत्यभिज्ञानं च, इत्यादि सर्वमुपपद्यते। तत्र करणभेदेऽपि कर्तुरभिन्नत्वात्।

तदेवाह निमेषकालादिति—कालः भावानां अत्यये नाशे। यावता कालेन संयुक्तयोरक्षिपक्ष्मणोः विभागः स्यात्, स निमेषकालः। तस्मादपि शीघ्रतरः। भावा निमेषकालादपि शीघ्रतरं परिणमन्ते। भग्नानां करचरणादीनां पुनर्भावः पुनः संरोहणं। अन्येन कृतं कर्म न अन्यमुपैति शुभाशुभफलैः अन्यं योजयति। यः करोति स एव तत्फलं भुङ्क्ते इति नियमः। यस्मात् एतत् सर्वं तत्त्वविदां मतम्। अयमाशयः—भूतानां परिणामितया प्रतिमुहूर्त्तभेदाद् भूतसङ्घातको देहोऽपि न पूर्वपरयोरेको देहव्यतिरिक्तचेतनाभ्युपगमे अन्यकृतस्य फलं अन्यस्तत्सदृशो भुङ्क्ते। इत्थं च कर्मफलेन कर्तुरसम्बन्धाद् अकर्तुश्च सम्बन्धात् कृतहानमकृताभ्युपगमश्च प्रसज्येत। अभ्युपगमे तु नैव दोषः स्यात्। किञ्च जीवनकार्यं वृद्धिक्षतसंरोहणादिकं अचेतनेष्वदृष्टं देहादन्यं चेतनमनुमापयति। यस्माद् भग्नानां पुनर्भावः अन्यकृतं न अन्यमुपैति इति नियमः। तस्माद् भूतानां क्रियोपभोगे कारणं कृतकर्मणः फलभोक्ता स देहव्यतिरिक्तो नित्यः पुरुषसंज्ञकः चेतनोऽस्ति।

---

१. च० शा०—१। ४९-५२।

देहव्यतिरिक्तस्यात्मनः सद्भावमुपपादयति—अहंकार इति भूतानां देहमन्तरा अन्तरेण देहादन्यस्मिन् कारणे आत्माख्ये सति अहंकारादिकं विद्यते संभवति। अहं जानामि अहं पश्यामि इत्यादिप्रयोगात्। आत्मा हि अहंकारास्पदम्। गौरोऽहं स्थूलोऽहं इत्यादिप्रयोगस्तु औपचारिकः, कर्म कर्मानुष्ठानम्। लोकः फलमभिसंधाय कर्म करोति। देहात्मवादे अन्यस्य फलभोक्तृत्वात् कर्तुः कर्मानुष्ठाने प्रवृत्तिरेव न स्यात्। फलं कृतकर्मणः फलभोगो न संभवति। कर्तृ-भोक्त्रोर्भिन्नत्वात्। देहान्तरगतिः देहाद् देहान्तरगमनम्। स्मृतिरिति। देहात्मवादे बाल्यदशायामनुभूतस्य यौवने स्मरणं न स्यात्, बाल्ययौवनयोः शरीरभेदात्। नान्यदृष्टं अन्यः स्मरति। तदुक्तम्—'नान्यदृष्टं स्मरत्यन्यः' इति। देहव्यतिरिक्त-चेतनाभ्युपगमे हि तत् सर्वमुपपद्यते[1]।"

**आत्मनः लक्षणानि गुणांश्च—**

> प्राणापानौ निमेषाद्या जीवनं मनसो गतिः।
> इन्द्रियान्तरसञ्चारः प्रेरणं धारणं च यत्॥
> देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा।
> दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा॥
> इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः।
> बुद्धिः स्मृतिरहंकारो लिङ्गानि परमात्मनः[2]॥
> (यस्मात् समुपलभ्यन्ते लिङ्गान्येतानि जीवतः।
> न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः॥
> शरीरं हि गते तस्मिन् शून्यागारमचेतनम्।
> पञ्चभूतावशेषत्वात् पञ्चत्वं गत उच्यते[3]॥)

'तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः संकल्पो विचारणा स्मृतिविज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः[4]।'

'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति[5]॥'

'प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छा-प्रयत्नाश्चात्मनो लिङ्गानि[6]॥'

## भूतविद्यायां प्रकृतिज्ञानस्य प्रयोजनसमीक्षणम्

कस्याप्यामयस्य विनिर्णये तच्चिकित्सायाश्च प्रकृतिज्ञानमत्यन्तमपेक्षितम्[7], यतो हि प्रकृतिज्ञानाभावे न याथार्थ्येन विकृतिज्ञानं कर्तुं शक्यते। न च रोग-

---

१. च० शा० — १।४९-५२। २. च० शा० — १।७०-७२।
३. च० शा० — १।७३-७४। ४. सू० शा० १।१७। ५. न्यायद० १।१।१०।
६. वै० द० — ३।२।४।
७. 'तत्र ग्रहणीदोषचिकित्सितेऽग्निदोषे वक्तव्ये प्रकृतिज्ञानानन्तरत्वाद्विकृतिज्ञानस्य प्रथमं तावदविकृतस्याग्ने रूपमाह' (च० चि० १५।२ चक्रपाणिः)

लक्षणानां रोगावस्थाविशेषाणां वा ज्ञानं सम्भाव्यते। चिकित्सायाञ्च भेषजव्यवस्थायां पथ्याहार-विहारनिश्चयीकरणे प्रकृतिज्ञानमपेक्ष्यते।

रोगविनिर्णये—रोगिणः पूर्ववृत्तमवगम्यते, तेन तस्य प्रायो भाविविकारविषये ज्ञानञ्जायते। तथाहि, समपित्तानिलकफाः पुरुषाः स्वस्थाः भवन्ति, किन्तु वातप्रकृतेर्वातजाः[1], पित्तप्रकृतेर्पित्तजाः कफप्रकृतेर्कफजा रोगा द्रुतमापतन्ति, यतश्च स्वप्रकृतिजविकारदृष्ट्या तेषु व्याधिक्षमत्वमल्पमेव भवति।

रोगस्य साध्यासाध्यत्वनिर्णये च प्रकृतिज्ञानं सप्रयोजनम्—येन[2] दोषेण विकारो जनितः, यदि चेत्स एव दोषो रोगिणः प्रकृतिभूतस्तदा कृच्छ्रसाध्योऽसाध्यो वा व्याधिर्भवति, यदि चेन्न स दोषः प्रकृतिस्तदा तु सुखसाध्यत्वमिति।

प्रतिषेधक—चिकित्सायाञ्च दोषप्रकृतिविपरीतगुणान्वित[3] एवाहारो विहारो वा विधीयते, समप्रकृतेस्तु सर्वेषामेव रसानामाहारः समांशेन प्रशस्यते।

प्रशमनचिकित्सिते च – वातप्रकृतिर्पुरुषो यदा वातप्रकोपणान्यासेवते तस्य तदा वातः प्रकोपमापद्यते, तदानीं वातशमनचिकित्सा क्रियते। पित्तप्रकृतेर्पित्तप्रकोपकाहारसेवनात् पित्तं प्रकुप्यति, तदा च पित्तप्रशमनी क्रिया विधीयते। कफप्रकृतेर्कफप्रकोपकाहारसेवनात्कफः प्रकोपमापद्यते, तदा कफप्रशमनाय यत्नो विधीयते।

वयोऽनुपातिनी प्रकृतिः—बाल-मध्य-वृद्धभेदेन त्रिविधं वयः।

बाल्यमाषोडशाद्वर्षान्मध्यमासप्ततेस्ततः ।
वृद्धत्वमूर्ध्वं विज्ञेयं वयोमानमिति त्रिधा ॥ (योगर०)

आस्ववस्थासु यथावयो भेषजमात्रा[4] वर्धते हीयते च। बाले[5] वृद्धे च तीक्ष्णं भेषजं, तीक्ष्णं कर्म च प्रतिषिद्धम्। वयोऽनुसारिणी[6] च दोषाणां प्रधानता भवति तत्सम्प्रधार्य च कर्मारभेत् कर्तुम्।

---

१. वातलस्य वातनिमित्ताः, पित्तलस्य पित्तनिमित्ताः, श्लेष्मलस्य श्लेष्मनिमित्ता व्याधयः प्रायेण भवन्ति बलवन्तश्च (च० वि० ६ १६)

२. हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य वै।
न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत् ॥ (च० सू० १०।११)

३ विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः।
समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥ (च० सू० ७।४१)

४. तत्रोत्तरोत्तरासु वयोऽवस्थासु उत्तरोत्तरा भेषजमात्राविशेषा भवन्ति ऋते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्वीत (सु० सू० ३५)

५. अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्।
तत्साध्येषु विकारेषु मृद्वीं कुर्यात् क्रियां शनैः ॥

६. बाले विवर्धते श्लेष्मा मध्यमे पित्तमेव तु।
भूयिष्ठं वर्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥ (सु० सू० ३५)

देशानुगामिनी प्रकृतिः—देशस्त्रिधा[1]-आनूपः, जाङ्गलः, साधारणश्च। तत्र कतिपयरोगा देशविशेषे भवन्ति। यथा-आनूपे श्लीपदम्, वातकफात्मकाश्च रोगाः, जांगले—वातपैत्तिका रोगा बाहुल्येन। तथा मति देशगुणविपरीतगुणाहार-विहारसेवनात् स्वस्थता जायते। एवञ्च देशगुणविपरीता रोगाः सुखसाध्या देशगुणानुकूलाश्च रोगा असाध्या भवन्ति। यथा च जाङ्गलदेशे समुत्पन्नो कफजो व्याधिः सुखसाध्यो भवति, स एवानूपदेशोत्पन्नो साध्यो भवति।

कालानुगामिनी प्रकृतिः—कालो द्विधा-नित्यग आवस्त्रिकश्च। तत्र नित्यगः अहोरात्रादिरूपः, तत्र काले ऋत्वनुसारं शारीरदोषाणां चय-प्रकोप-प्रशमा भवन्ति। तथाहि—

वर्षासु — भाद्रपदाश्विनयोः पित्तं चीयते।
शरदि — कार्तिकाग्रहायणयोः पित्तं प्रकुप्यति।
हेमन्ते — पौषमाघयोः पित्तं प्रशाम्यति।
,,　　,,　　श्लेष्मा चीयते।
वसन्ते — फाल्गुनचैत्रयोः श्लेष्मा प्रकुप्यति।
ग्रीष्मे — वैशाखज्येष्ठयोः श्लेष्मा प्रशाम्यति।
,,　　,,　　वातः चीयते।
प्रावृषि — आषाढश्रावणयोः वातः प्रकुप्यति।
वर्षासु — भाद्रपदाश्विनयोः वातः प्रशाम्यति।

इति कालकृता दोषाणां प्राकृती गतिरुक्ता।

आवस्थिको कालो विकारसापेक्षः—यथा वाल्यावस्थाजनितं श्लेष्मविकार-मिति मत्वा श्लेष्मणः प्रतीकारो विधीयते। अथवा ज्वरातिसारकामादिरोगाणाम-वस्थाविशेषमभिसमीक्ष्य भेषजव्यवस्था पथ्यव्यवस्था च क्रियते। एवं कालज्ञान-मतीवोपयुज्यते चिकित्साविधौ।

जातिप्रसक्ता प्रकृतिः—यो जनः यस्यां जातौ समुत्पन्नस्तस्मिन् स्वजाति-संस्कारानुसारिणी प्रकृतिर्जायते। सा किल जातिप्रसक्ता प्रकृतिरुच्यते। सा सा जातिः स्वपरम्परानुसारं कमपि शारीरं मानसं वा कर्म करोति, तदनुसारमेव तज्जातीयेषु जनेषु ते ते रोगा भवन्ति। भवन्ति च केचन तथाविधाः व्याव-सायिकाः रोगाः। केचन हि सदातुरा भवन्ति। यथोक्तं चरके—

सदातुराः श्रोत्रियराजसेवका—
स्तथैव वेश्या सह पण्यजीविभिः[2]।

---

१. देशोऽल्पवारिद्रुमगो जांगलः स्वल्परोगतः।
आनूपो विपरीतोऽस्मात् समः साधारणः स्मृतः॥ ( यो० र० )
२. च० सि० — ११।२७।

कुलप्रसक्ता प्रकृतिः—मातुश्शोणितदोषात् पितुर्वा शुक्रदूषणात् केचन विकारा अपत्यमनुबध्नन्ति[१]। यथा—अपस्मारो, मूर्च्छा (कुष्ठार्शः-यक्ष्मा-आमवात-सन्धिवात-प्रभृतयः) दयश्च। ते च कुलजा विकारा आदि[२]-बलप्रवृत्ता वा कथ्यन्ते।

एवञ्च कुलस्य, (मातृपितृभ्रातृ-भगिनीनां) आयुषः, प्रायोभावि व्याधेः, स्वास्थ्यस्य च परीक्षणं विधेयम्, यदाधारेण रोगनिर्णये सौकर्यमुपजायते[३]। "कुलजाश्च रोगा असाध्या भवन्ति। सद्वैद्याश्चासाध्यांश्चिकित्सितुं नारभन्ते।

एवञ्च पूर्वोक्तदिशा प्रकृतीनां परीक्षणेन रोगनिर्णयः क्रियते, तस्य साध्यासाध्यत्वादिकञ्च चिन्त्यते, ततश्च विपरीतगुणैर्देशमात्राकालोपपादितैर्भेषजैर्धातुसाम्यत्वस्थापनाय प्रयत्यते।

प्रकृतेर्भेदाः—मुख्यरूपेण द्विधा प्रकृतिः—देहप्रकृतिः, सत्त्वप्रकृतिश्च। देहप्रकृतिर्द्वेधा—१—दोषप्रकृतिः, २—पञ्चमहाभूतप्रकृतिश्च। सत्त्वप्रकृतिः—सात्त्विक-राजस-तामस–भेदात् त्रिधा।

सात्त्विकप्रकृतिः—ब्राह्म-आर्ष-माहेन्द्र-याम्य-वारुण-कौबेर-गान्धर्व-भेदेन सप्तधा।

राजसप्रकृतिः—आसुर-राक्षस-पैशाच-सार्प-प्रेत-शाकुन-भेदेन षोढा भवन्ति।

तामसप्रकृतिः—पाशव-मात्स्य-वानस्पत्य भेदात् त्रिधा।

दोषप्रकृतिः—[४]शुक्रशोणितसंयोगे यो दोषः स्वभावस्थितोऽप्यन्यदोषापेक्षया बहुलो भवेत्, तत्प्रकृतिः पुरुषो जायते। अत्र विषये चरकसुश्रुतयोर्मतवैभिन्यमवलोक्यते।

तथा च—'तस्य[५] तस्य किल दोषस्य हि आधिक्यात् सा सा दोषप्रकृतिरुच्यते मनुष्याणाम्। न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते। तस्मान्नैताः प्रकृतयः सन्ति। सन्ति खलु वातलाः पित्तलाः श्लेष्मलाश्च। अप्रकृतिस्थास्तु ते ज्ञेयाः।' इत्याह चरकाचार्यः। एतेन च सन्दर्भेण सिद्धयति यत् समवातपित्तश्लेष्माण एव पुरुषाः प्रकृतिस्था ज्ञेयाः, प्रकृतिश्चारोग्यमुच्यते। अमुमेवाशयमभिलक्ष्य वातलः, पित्तलः, श्लेष्मलश्चेति त्रयः पुरुषा आतुरा भवन्तीति चरकाचार्येणोक्तम्[६]।

---

१. शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम्।

२. आदिबलप्रवृत्ताः ये शुक्रशोणितदोषान्वयाः कुष्ठार्शः प्रभृतयः। (च० चि० ६)

३. जातः प्रमेही मधुमेहिनो वा न साध्य उक्तः स हि बीजदोषात्।
ये चापि केचित् कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान्॥
(च० चि० ६।५७)

४. शुक्रशोणिनसंयोगे यो भवेद्दोष उत्कटः।
प्रकृनिर्जायते तेन ................॥ (सु० शा० ४।६३)

५. च० वि० — ६।१४। ६. च० वि० — ६।१६।

एवं त्रयाणां दोषाणां साम्यावस्थायामेव स्वास्थ्यमन्यथाऽस्वास्थ्यमिति। अतश्च वातलस्य वातनिमित्ताः, पित्तनिमित्ताः, श्लेष्मलस्य श्लेष्मनिमित्ताः रोगाः प्रायेण बलवन्तो भवन्तीति प्रतिपादितम्[1]।

सुश्रुतस्तु—यादृग्विधा प्रकृतिर्भवति, यद्धैतुकी, यच्चास्याः स्वलक्षणं तत्सर्वमेवाह-'सप्त प्रकृतयो भवन्ति दोषैः पृथक्, द्विशः समस्तैश्च[2]।' एवञ्च दोषबाहुल्येऽपि दोषप्रकृतिमाख्याति।

**दोषप्रकृतिभेदाः**—वात, पित्त, कफ—वातपित्त, वातकफ, कफवित्त, वातपित्तकफप्रकृतिभेदेन सप्तप्रकृतयो भवन्ति।

**वातप्रकृतिलक्षणम्**[3]—वायोः रौक्ष्यात्-वातलो पुरुषोऽतिरूक्षश्मश्रुनखकेशः; कृशकाय अल्पशरीरः मन्दसक्तजर्जरस्वरः, जागरणशीलः, स्फुटितकरचरणश्च भवति। लघुत्वाद्वायोः=अनवस्थितमतिश्चलदृष्टिश्चपलगतिचेष्टाहारो भवति। चलत्वात्=औष्ठजिह्वाशिरःस्कन्धपाणिपादचालनपरः, द्रुतगतिः परिसरणशीलः, शीघ्रत्वात्=धैर्यरहितः, शीघ्रगामी, शीघ्रभाषी, अदृढसौहृदश्च भवति। शीघ्ररागः, शीघ्रविराग, श्रुतग्राही अल्पस्मृतिश्च भवति। शैत्यात्=शीतद्वेषी, शीतकम्पी, शीतस्तब्धश्च भवति। पारुष्यात्=परुषगात्रः। वैशद्यात्-स्फुटितपाणिपादवदनः, सन्धिस्फुटनशब्दवन्तश्च भवन्ति वातलाः। प्रायेण चाल्पायुषोऽल्पबला अल्पसाधना अमनोरमाकारा मत्सरिणो हिंसकाश्चौराश्च भवन्ति।

**पित्तप्रकृतिलक्षणम्**[4]—पित्तम्=उष्णं तीक्ष्णं द्रवं विस्रमम्लं कटुकञ्च भवति। उष्णत्वात्=स्वेदनः, वलीपलितखालित्यजुष्टः, उष्णद्वेषी, तिलपिडकाव्यङ्गपरीतः, बहुभुक् तृष्णायुक्तः, मृद्वल्पश्मश्रुलोमकेशो भवति। तीक्ष्णत्वात्=तीक्ष्णाग्निः, क्षिप्रकोपप्रसादः, क्लेशासहिष्णुश्च भवति। द्रवत्वात्=प्रभूतसृष्टमूत्रपुरीषः, शिथिलमृदुसन्धिमांसश्च भवति। विस्रत्वात्=पूतिकक्षास्यशिरः शरीरगन्धो भवति। कट्वम्लत्वात्=शुक्रव्यवायापत्यालपता च जायते। सभायां परवाक्यमुच्छिद्य वक्तुं शीलः, तेजस्वी, निपुणमतिर्मेधावी च भवति। पित्तलो मध्यज्ञानवित्तोपकरणवान् मध्यबलो मध्यायुश्च भवति।

**कफप्रकृतिलक्षणम्**[5]—श्लेष्मा च स्निग्ध-श्लक्ष्ण-मृदु-मधुर-सार-सान्द्र-मन्दस्तिमित-गुरु-शीत-पिच्छिलाच्छो भवति। अतश्च तद्गुणानुसारिणी भवति श्लेष्मलानां प्रकृतिः। स्निग्धाङ्गः, श्लक्ष्णाङ्गः, मनोरमसुकुमारावदातदेहः प्रचुरव्यावायापत्यवान् सारसंहतस्थिरशरीरः सुविभक्तगात्रः समृद्धसर्वावयवः मन्दचेष्टाहारवाक् मन्दक्षुत्तृष्णासन्तापस्वेदवान् प्रसन्नाननः स्निग्धवर्णस्वरश्च भवति श्लेष्मलो जनः।

---

१. च० वि०—८।९६। २. सु० शा० — ४।६२।
३. च० वि० — ८।१००, सु० शा० — ४।६४.६७।
४. च० वि० — ८।९९, सु० शा० — ४।६८-७१।
५. च० वि० — ८।९८, सु० शा० — ४।७२-७६।

प्रियदर्शनः, मधुरप्रियः, कृतज्ञः धृतिमान्, क्लेशक्षमः, स्थिरसौहृदः, लक्ष्मीवान् दृढनिश्चयश्च भवति । श्लेष्मलो पुनः बलिष्ठः, चिरायुः, विद्वान्, ओजस्वी, शान्तस्वभावो भवति ।

**संसर्गजाः प्रकृतयः**[१]—

द्वयोर्वा तिसृणां वापि प्रकृतीनां तु लक्षणैः ।
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत् ॥

उपर्युक्तप्रकृतिवर्णनाधारेण संसर्गजाः (वातपैत्तिक-वातकफज-कफपैत्तिकाः) सान्निपातिकाश्च प्रकृतयोऽवगन्तव्याः ।

**समप्रकृतिः**—यत्र किल त्रयाणां दोषाणां गुणाः साम्यावस्थायामवतिष्ठन्ते, तत्र समप्रकृतित्वं बोद्धव्यम् । यथा चाह—'समगुणसमुदितास्तु समधातव इति'[२] । तथा च स्वस्थलक्षणे प्रशस्तपुरुषलक्षणे च समप्रकृतिलक्षणमुक्तम् । 'समवातपित्तकफः,[३] समाग्निः, सममलक्रियः, प्रसन्नात्मा, प्रसन्नेन्द्रियमनाः स्वस्थ इत्युच्यते ।' यश्च 'सममांसप्रमाणः,[४] समसंहननः, दृढेन्द्रियः, क्षुत्पिपासासहः, शीतातपसहः, व्यायामसहः सममांसचयो भवति, स खलु प्रशस्तः पुरुषः[४]।'

**भूतप्रकृतिः**[५]—पञ्चभिर्महाभूतैर्पञ्चभूतप्रकृतयो भवन्ति । वायव्य-आग्नेय-आप्य-पार्थिव-नामभेदात्पञ्चभूतप्रकृतयः ।

वायव्यप्रकृतिः — वातप्रकृतिलक्षणवान् ।
आग्नेयप्रकृतिः — पित्त ,, ,, ।
आप्यप्रकृतिः — कफ ,, ,, ।
पार्थिवप्रकृतिः—क्षमाशीलः स्थिरशरीरः विशालदेहश्च भवति ।
नाभसप्रकृतिः—असौ शुचिश्चिरायुः विशालनासाकर्णच्छिद्रो भवति ।

**सत्त्वप्रकृतिः**[६]—त्रिविधं खलु सत्त्वं भवति—शुद्धं ( सत्त्वं ), राजसं, तामसमिति । तत्र शुद्धस्य सत्त्वस्य सप्तविधो भेदः, ब्राह्मादिभेदेन । तेषां लक्षणानि यथाक्रमं लिख्यन्ते—

१ ब्राह्मप्रकृतिः—शुचिः, सत्यव्रतः, जितेन्द्रियः, ज्ञानविज्ञानसम्पन्नः, दानी, सत्यशीलः, करुणापरायणश्च भवति ।

२. आर्षप्रकृतिः—यज्ञकर्ता, अध्येता, ब्रह्मचारी, मद-मान-मोह-राग-रहितः, मेधावी, ज्ञानविज्ञानप्रतिभासम्पन्नोऽतिथिव्रतश्च भवति ।

---

१. सु० शा० — ४।७७ । २. च० वि—८।१०२ ।
३. सु० सू० — १५।४४ । ४. च० सू०—२१।१८-१९ ।
५ सु० शा० — ४।८० ।
६ च० शा० ४ तथा सु० शा० ४ एवं काश्यप० सू० २८ ।

३. माहेन्द्रप्रकृतिः—पराक्रमी, शूरः, धर्मार्थकामाभिरतः, ओजस्वी, भृत्यभरणक्षमः, शास्त्रानुशीलनशीलश्च भवति।

४. याम्यप्रकृतिः—कार्याकार्यविवेकशीलः, निर्भयः, स्मृतिमान्, रागमोहद्वेष-वर्जितः, समदर्शी, क्रोधदम्भरहितश्च भवति।

५. वारुणप्रकृतिः—जलक्रीडारतिः, शुचिः, सहिष्णुः, शूरः, धीरः, पिङ्गल-केशः, प्रियवादी, पुण्यशीलः, शीतसेवी च भवति।

६. कौबेरप्रकृतिः—धर्मार्थकामसेवी, सहिष्णुः, अर्थोपार्जकः, सञ्चयी प्रभूत-परिवारसम्पन्नः, मानी, विहाररतिः व्यक्तकोपप्रसादश्च भवति।

७. गान्धर्वप्रकृतिः—नृत्यगीतवादित्रप्रियः, गन्धमाल्यवस्त्रस्त्रीविहारकामः, काव्याख्यानकेतिहासपुराणकुशलोऽनसूयकश्च भवति।

काश्यपसंहितायाम्[1]—प्राजापत्यप्रकृतिर्निगदिता या च शुद्ध (सत्त्व) भेदगणनायां चरकसुश्रुतयोर्नास्ति—

प्रजावन्तं क्रियावन्तं धर्मशीलं जगत्प्रियम्।
अनीर्ष्यमशठं प्राज्ञः प्राजापत्यं वदेच्छुचिम्[2]॥

[3]राजसप्रकृतीनां लक्षणानि—१. आसुरप्रकृतिः—ऐश्वर्ययुक्तः, छद्मचरः, रौद्रः, निर्दयः, आत्मप्रशंसकः, शूरः, औदरिकः, बहूनां मध्ये एकाहारी च भवति।

२. राक्षसप्रकृतिः—क्रोधनः, क्रूरः, आहारातिमात्ररुचिः, आमिषप्रियः, स्वप्नबहुलः, कलहप्रियः, धर्मद्वेष्टा, परिश्रमशीलश्च भवति।

३. पैशाचप्रकृतिः—महाशनः, स्त्रैणः, भयप्रदः, भीरुः, उच्छिष्टभोजी, साहसी, निर्लज्जः, विकृताहारविहारशीलश्च भवति।

४. सार्पप्रकृतिः—क्रुद्धशूरः, अक्रुद्धभीरुः, आहारविहारप्रियः, परिश्रमी, मायावी, निद्रालुः, ओष्ठलेही च भवति।

५. प्रेतप्रकृतिः—आहारकामी, अतिदुःखशीलः, असूयकः, अतिलोलुपः, अदाता, केवलाहारप्रियश्च भवति।

६. शाकुनप्रकृतिः—प्रवृद्धकामः, अनवरताहारशीलः, असहिष्णुः, चञ्चल-स्वभावः, सञ्चयापराधी च भवति।

---

१. ये चान्येऽपि शुभा भावाः शुद्धास्ते चापि सात्त्विकाः।
एतत्कल्याणभूयिष्ठं शुद्धं सत्त्वमिहाष्टधा॥
आरोग्यं प्रशमो रूपं ज्ञानविज्ञानमार्यता।
दीर्घमायुः सुखात्यक्तं सामान्यं शुद्धलक्षणम्॥ (काश्यप० सू० २८)

२. काश्य० सू० २८। ३. च० शा० ४, सु० शा० ४ एवं काश्य० सू० २८।

काश्यपसंहितायां सप्तधा राजसप्रकृतयोर्वर्णिताः। तत्र च याक्ष्यसत्त्वमधिकं पठितम्। तथा च--

दानशय्यात्यलङ्कारपानभोजनमैथुनैः ।
नित्योपेतं प्रमुदित याक्षं विद्यात् प्रभक्षणम् ॥
इत्येतद् राजसं सत्त्वं सप्तधा क्रोधकारितम् ।
व्यामिश्रगुणदोषं च रज एवोपलक्षयेत् ॥ ( का० सू० २८ )

तामसप्रकृतीनां लक्षणानि[1] १. पाशवप्रकृतिः—आहारलुब्धः, निन्दिताहारविहारः, निद्रालुः, मृजालङ्काररहीनश्च भवति।

२. मात्स्यप्रकृतिः—भीरुः, मन्दबुद्धिः, चञ्चलः, भोजनलोलुपः, कामक्रोधशीलः, जलाभिलाषी, परिसरणशीलश्च भवति।

३. वानस्पत्यप्रकृतिः—अलसः, सततमाहाराभिनिविष्टः एकस्थानरतिः, घर्मार्थवर्जितः, शीतवातातपसहः, बुद्धिहीनः, क्लेशसहश्च भवति।

अत्रेदमवधेयमस्ति यत्सत्त्वप्रकृतिनिरूपणे बहवो मानसव्यापाराः शरीरद्वारेणाभिव्यक्ततां यान्तीति निगदितम्। एतेन च स्पष्टीभवति यच्छरीरमनसोः परस्परं तादृशः सम्बन्धो वर्तते, ये कस्य स्थितेरपरस्मिन् प्रभावो भवति नूनम्। आधुनिका मानसशास्त्रवेत्तारः शरीरमनसोर्मिथः क्रियाशीलित्वं ( .nter action of body and mind ) यन्निर्दिशन्ति, तत्तु प्राचामाचार्याणामेव मतं पुनरुक्तमिति मन्ये।

अथ च आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन चान्तर्गतं मनः परिलक्ष्यते। यादृशं मनो भवति स्पष्टमेव तत्प्रभावो लक्ष्यते मुखाकृतौ शारीरेषु च व्यापारेषु। तदेव महर्षिणा काश्यपेनापि स्पष्टीकृतमवलोक्यते—

यथा वक्त्रं तथा वृत्तं यथा चक्षुस्तथा मनः।
यथा स्वरस्तथा सारो यथारूपं तथा गुणाः ॥
(का० सं०, पृ० २५)

अनेन च प्रकृतिवर्णनेन दैवीसम्पत्[2]-आसुरीसम्पच्च[3] वर्णिता भवति। आधुनिका आचार्या यन्मानसं स्वभावं ( Mental Disposition ) वदन्ति, तदपि

---

१. च० शा० ४ तथा सु० शा० ४ एवं काश्यप० सू० २८।

२. अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेज. क्षमाधृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य पाण्डव ! ॥ ( गीता—१६।१-३ )

३. दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ ! सम्पदमासुरीम् ॥ ( गीता—१६।४ )

मानसप्रकृतावेव गतार्थतामेति । विशिष्टस्वभावस्य ( Tempraments ) च वात-पित्त-कफप्रकृतिषु, मानसप्रकृतिषु वा समावेशो भवति । एवञ्च मानवदेहे यादृशी स्थितिर्भवति, मनसि निश्चयमेव तत्प्रभावो जायते, मनः स्थितेश्च शरीरे प्रभावो भवतीति, द्वयोरेवान्योन्यानुविधानमालक्ष्यते ।

एतच्चाखिलं प्राकृतदोषव्यापारवर्णनेन स्फुटमेव प्रतीयते । यथा च चरके—

उत्साहोच्छ्वासनिःश्वासचेष्टाधातुगतिः समा ।
समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥
दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम् ।
प्रभा प्रसादो मेधा च पित्तकर्माविकारजम् ॥
स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्माविकारजम्[1] ॥

यथा च मानसप्रकृतिवर्णने शारीरभावानां वैकृत्यमुपजायते इत्युक्तम्, तथैवात्रापि शारीरदोषैः ( वात-पित्त-कफैः ) मानसभावानामुदयो भवतीति निरूपितम् । तेन च परस्परानुविधायित्वमङ्गीकृतमेवेति नात्र विप्रत्ययः कश्चन ।

अथ चान्यान्यपि सन्त्युदाहरणानि यैरिदं सिद्धयति, यच्छरीरमनुसरति मनः शरीरञ्च मन इति । तथा च—वृषण-ग्रन्थिजान्तःस्रावः ( Testicular Hormone ) सेवनेन मानवस्य कामोद्रेको भवति, मूषके शुनि वा तदेव कामोद्दीपन-फलमवलोक्यते । तेन शारीरभावस्य मनोविकारकारित्वमुपलभ्यते । चुल्लिकग्रन्थि-जान्तःस्रावप्रयोगेण च मन्दबुद्धिषु बालेषु मेधा वर्धते । अधिवृक्कग्रन्थिजश्च स्रावो मानवानुद्दीपयति, उत्साहमादधाति, वीरं योद्धारं वा विदधाति ।

एवञ्च मनसः शरीरस्य च परस्परोपकारकत्वमपकारकत्वञ्च सिद्धयतीति । तत्र च प्रकृतिरेव कारणत्व भजते । अतश्च भूतविद्यायां प्रकृतिज्ञानस्य महत्प्रयोजन-माख्यातम् । निदाने चिकित्सायाञ्च प्रकृतिज्ञानस्य चास्ति चारितार्थता । यथा च प्रागेव प्रतिपादितमस्ति वैशद्येन ।

## भूतविद्यायां सत्त्वरजस्तमोगुणानां स्थानम्

**त्रिगुणज्ञानस्य प्रयोजनम्**—जगदिदं सत्त्वरजस्तमोभिराबद्धम् । यावच्च त्रयोऽप्येते नैव साम्यावस्थाञ्जहति, न तावज्जगद्व्यक्ततां याति । सत्त्वरजस्तमसां साम्या-वस्था हि प्रकृतिरुच्यते । अतश्च त्रय एते प्रकृतेरेव धर्माः, प्रकृतिश्च त्रिगुणात्मिका[2] । एवञ्च प्रकृतेर्जायमानाः सर्वे एव भावाः सत्त्वरजस्तमोमया भवन्ति ।

पुरुषश्च त्रिभिर्गुणैरनुस्यूतश्चरति प्रलयोदयचक्रम् । यदा सत्त्वगुणाधिको भवति, तदा धर्मं निमित्तं कृत्वोर्ध्वमुपयाति । ऊर्ध्वशब्देन चाष्टौ स्थानानि

१. च० सू०—१८।५५-५७
१. सु० सू०—१।९।

गृह्यन्ते। तद्यथा-ब्राह्मं, प्राजापत्यं, सौम्यम्, ऐन्द्रं, गान्धर्वं, याक्षं, राक्षसं, पैशाचमिति। एषु च सूक्ष्मशरीरमुपयाति। तथाऽ सत्त्वोत्कटो देवादियोनिषु जायते, रजोधिको मानुषे देहे जायते, तमोऽधिकस्तु पशुपक्षिमृगसरीसृपस्थावरेषु जायते। अथ च भूतविद्यायां ये मानसा आमयाश्चिकित्स्यास्ते हि रजस्तमोभ्यां दोषाभ्यामुद्भवन्ति। रजस्तमसी प्रज्ञापराधद्वारेण धीधृतिस्मृत्यादीनां भ्रंशं विधाय विविधान् मानसामयाञ्जनयतः।

भूतविद्यायाश्च[2]--देवासुरगन्धर्वयक्षरक्षःपिशाचादिकृतायां व्याधौ, तत्प्रशमनाय बल्युपहारप्रायश्चित्तादिना रोगोपशमनं क्रियते। एवञ्च भूतविद्यायां प्राधान्येन मानसप्रकृतीनामध्ययनेऽपि सत्त्वरजस्तमसामेवावस्थान्तराणि चिन्त्यानि भवन्ति। मानसप्रकृतिज्ञानेन न मानसभूतविद्यामयानां निदाने चिकित्सिते च सौकर्यमुपजायते।

अतश्च भूतविद्यायां प्रकृतिपर्यवेक्षणार्थम्, भूतोन्मादादीनाममानुषरोगाणाञ्चावगमनार्थं, सत्त्वरजस्तमसां स्वरूपादिकमतिशयेन विज्ञातव्यं भवति। गुणशब्देन च रज्जुरुच्यते। रज्ज्वा यथा कश्चनाबद्धो भवति, तथैवेभिरपीति, तद्बाधाविमुक्तये त्रिगुणज्ञानं नितरामपेक्षितम्।

सृष्टौ गुणानां कारणता—सत्त्वरजस्तमोलक्षणमव्यक्तं हि सर्वभूतानां कारणमुच्यते। अव्यक्ताच्च महान् ( बुद्धितत्त्वमुत्पद्यते )। सत्त्वरजस्तमसां साम्यावस्था यदा भिद्यते, तदैव महदादयो व्यक्ततां यान्ति। महदिति नाम श्रेष्ठत्वबोधकम्। अतः परं कतिपयतत्त्वानामाविष्करणं भवतीति। त्रिगुणात्मकं महत्तत्वं नानापरिणतिपरम्परां भजते, ततश्च गुणपरिणामविशेषादनन्ता सृष्टिरुत्पद्यते। महत्पदोपादानेन चास्य महत्तत्वस्य ( बुद्धितत्त्वस्य ) प्राधान्यं वरीयस्त्वञ्च स्फुटीभवति।

गुणपरिणत्या च अध्यवसायात्मिकाया बुद्धेरष्टौ अङ्गानि सात्त्विकतामसरूपभेदाद् भवन्ति। बुद्धेः सात्त्विकं रूपं [3]चतुर्विधम्—यथा—धर्मो ज्ञानं, वैराग्यमैश्वर्यञ्चेति।

(१) धर्मो[4] नाम--दयादानयमनियमलक्षणः। तत्र अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमा उच्यन्ते, शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि च नियमाः।

(२) ज्ञानं--प्रकाशोऽवगमो भानमिति बुद्धेः पर्यायाः। तच्च ज्ञानं बाह्याभ्यन्तरभेदेन द्विविधम्। बाह्यं षडङ्गो वेदः पुराणन्यायमीमांसाधर्मशास्त्राणि च। आभ्यन्तरं प्रकृतिपुरुषज्ञानम्। इयं सत्त्वरजस्तमसां साम्यावस्थाप्रकृतिः। अयं

---

१. च० सू० — १। २. सु० सू० — १।७

३. अध्यवसायो बुद्धिधर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्॥ ( सा० का० २३ )

४. सा० का०—२३ गौडपादभाष्यम्।

पुरुषः सिद्धो, निर्गुणो, व्यापी, चेतन इति। तत्र बाह्यज्ञानेन लोकव्यवहारे दाक्ष्यं, आभ्यन्तरज्ञानेन च मोक्षः।

(३) वैराग्यमपि द्विविधं--बाह्यमाभ्यन्तरं च। बाह्यं प्रत्यक्षीकृतेषु विषयेषु वैतृष्ण्यम्-प्राप्ति-रक्षण-क्षयापर्क्तिहिंसादिदोषदर्शनाद्वैराग्यम्। आभ्यन्तरं-प्रधानमप्यत्र स्वप्नेन्द्रजालसदृशमिति विरक्तस्य मोक्षेप्सोर्यद्वैराग्यमुत्पद्यते, तदाभ्यन्तरं वैराग्यम्।

(४) ऐश्वर्यम्--सामर्थ्यशालित्वम्। तच्चाष्टविधम्-अणिमा, महिमा, लघिमा, प्राप्तिः, प्राकाम्यमीशित्वं, वशित्वं, कामावसायित्वञ्चेति। अणिमा-सूक्ष्मतमो भूत्वा जगति विचरणम्। महिमा महान् भूत्वा विचरणम्। लघिमा विमतन्तु-तूलावयवादपि लघुतया पुष्पकेसराग्रेष्वपि स्थितिः। प्राप्तिः-अभिमतवस्तुप्रापणम्। प्राकाम्यं प्रकामतो यदेवेच्छति तदेव विदधाति। ईशित्वं-त्रैलोक्याधिपत्यसामर्थ्यम्। वशित्वं-सर्वस्य वशीकरणम्। कामावसायित्वं-यत्र ब्रह्मादिस्तम्बपर्यन्तं कामस्तत्रैवास्य स्थानासनविहाराः।

एवं यदा सत्त्वेन गुणेन रजस्तमसी अभिभूते स्तस्तदा पुमान् धर्मादीन् बुद्धिगुणानवाप्नोति। यदा च तमसा सत्त्वरजसी अभिभूते स्तस्तदाऽधर्मोऽज्ञानमवैराग्यमनैश्वर्यमिति चतुर्विधं तामसं बुद्धिरूपं भवति।

तथा च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते। स च सात्त्विक (वैकृत) राजस (तैजस) तामस (भूतादि) भेदेन त्रिधा। तत्र सात्त्विकादहङ्काराત्तामससहायाद् एकादशेन्द्रियाणि, तामसाच्च राजससहायात् पञ्चतन्मात्रा उत्पद्यन्ते। पञ्चतन्मात्राभ्यश्च पञ्चमहाभूतानि जज्ञिरे।

अनेन च सन्दर्भेण स्फुटमवगम्यते, यत् सृष्टिक्रमे गुणानां विशिष्टा भूमिका वर्तते। न च सृष्टौ किमपि द्रव्यं सत्त्वं वा तादृशमुपलभ्यते, यदेभिस्त्रिभिर्गुणैर्हीनमस्ति। व्यावहारिके च जगति समस्तमेव व्यवहारजातं गुणत्रयानुस्यूतमेवेति। यथा च—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः[1]॥

**सत्त्वरजस्तमसां स्वरूपविमर्शः, सत्त्वगुणस्य स्वरूपम्**—सत्त्वं[2] शुद्धमाख्यातम् कल्याणांशयुक्तत्वात्[3]। सत्त्वोत्कर्षेण चेन्द्रियाणां प्रसन्नता, गात्राणां लघुत्वं, बुद्धिप्राकाश्यञ्च भवति[4]। सत्त्वं सुखात्मकं, प्रकाशात्मकं निर्मलमारोग्यकरं ज्ञानप्रदञ्च जायते। सत्त्वं[5] रागद्वेषरहितं, संगरहितं निष्कामकर्मणे प्रभवति। आत्मनीव

---

१. गीता — १८।४०। २. च० शा० — ४।३७-४५।
३. सा० का०—१२-१३।
४. गीता — १४।६। ५. गीता १८, २०, २३, २६, ३०, ३३, ३७।

सर्वभूतावेक्षणं, अहंकारशून्यत्वं, धृत्युत्साहशालित्वं, विकाररहितत्वञ्च सत्त्वस्य प्रत्यात्मलिङ्गान्याख्यातानि। सत्त्वं हि प्रवृत्तिनिवृत्ती. कार्याकार्ये, भयाभये, बन्धं मोक्षञ्च वेत्ति। सत्त्वं तु मनस इन्द्रियाणाञ्च नियमनं करोति। परिणामसुखमेव सुखं विजानाति, न च तादत्त्विके सुखेऽनुरज्यते।

अथ च--आनन्द[1] प्रीतिः, शौचम्, सन्तोषः, श्रद्धा, कार्पण्याभावः, क्रोधाभावः, क्षमा. धैर्यम्. अहिंसा, समता, सत्यम्, आनृण्यं, मार्दवं, लज्जा, चाञ्चल्याभावः, आर्जवं, सदाचारः, अलोलुपत्वं, इष्टानिष्टवियोगाचिन्तनं, स्पृहाभावः, दानशीलता, परोपकारिता, सर्वभूतदया चेत्येते किल सत्त्वस्य गुणा आख्याताः।

रजसःस्वरूपम्—रजश्च चञ्चलं[2], समुत्तेजकं[3] क्रियासु प्रवर्तकं दुःखात्मकञ्च भवति। एतच्च[4] रागात्मकं, तृष्णाजनकमासक्तिजनकं, लोभकरमतृप्तिकरं, कर्मारम्भकं, साहंकारं, बहुलायासकरं, फलाशाजनकं हिंसात्मकमशौचं. हर्षशोककरं, धर्मार्थकामप्रवर्तकं, प्रसंगानुसारं फलाकाङ्क्षाप्रवर्तकं, विषयेन्द्रियसंयोगात् तादात्त्विकसुखोत्पादकञ्चोपजायते।

रूपं[5], ऐश्वर्यं, त्यागाभावोऽकारुण्यं, दुःखं, परापवादरतिः, विवादः, अहंकारः, पूज्यपूजाव्यतिक्रमः, चिन्ता, वैरभावः, सन्तापः, परस्वापहरणं, ह्रीनाशः, कौटिल्यं द्वैधीकरणं पारुष्यं, कामः, क्रोधः, मदो दर्पो द्वेषो बहुभाषिता चेति राजसा भावाः समाख्याताः।

**तमसः स्वरूपम्**—तमः [6]विषादात्मकं, स्थितिस्थापकं निगमकं, गात्रगौरवकरं, क्लमकरं ( इन्द्रियार्थप्रबाधकं ) मोहकरञ्च भवति। अज्ञानजनकं प्रमादकरमालस्यप्रदं, निद्रातन्द्राभयकरमप्रवृत्तिकरं विस्मृतिकरं स्वधर्मनियतकर्मत्यागकारकं, तत्त्वार्थज्ञानाप्रकाशकं, स्वपुत्रकलत्रमात्ररतिकरं, परिणतिमनवधार्य कार्यप्रवर्तकं कच्चिदहमस्य कार्यस्य करणे समर्थो न वेति स्वपौरुषमविगणय्य मोहात्कार्यारम्भकं, चाञ्चल्यकरं, मौढ्यजनकं शठत्वापादकं. आलस्यकरं, विषादकरं दीर्घसूत्रीत्वकारकं गम्भीरवेदित्वकरं, कार्याकार्यज्ञानहरं, विवेकलोपकरं, वैपरीत्यबुद्धिजनकं स्वप्न-भयशोकमदवर्धकं कार्यारम्भे, कार्यपरिणतौ च मोहजनकंभवति।

तथा च–मोहः,[7] अज्ञानं, क्रोधः, भोजनारुचित्वं भोजनमात्राधिक्येऽपि सन्तोषाभावः, पानलेह्यचोष्यवस्तुषु तृप्त्यभावः, दुर्गन्धस्थानवासित्वं, मलिनवस्त्ररुचित्वं मलिनशय्यासनविहारसेवित्वं, दिवास्वापः, विवाद-प्रमादासक्तिः हीननिकृष्ट-गीत-नृत्यवादित्रेषु श्रद्धा, धर्मेषु द्वेषश्चेति तामसाःगुणा भवन्ति।

---

१. महाभा० शान्तिपर्व० अ० ३१३।        २. सा० का० — १२।१३।

३. यथा वृषो वृषदर्शने उत्कटमुपष्टम्भं करोति एवं रजोवृत्तिः।

४. गीता — अ० १४-१८।        ५. महाभा० शान्तिपर्व — ३१३।

६. सा० का० — १२।१३।        ७. महाभा० शान्तिपर्व — ३१३।

**गुणानामन्योन्यभावः—**

'अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः'[१]।

**अन्योन्याभिभवाः**—एको गुणोऽवरगुणमभिभवति, एतच्च सुख-दुःख-विषादधर्मैः प्रकटीभवति। तथा च यदा सत्त्वमुत्कटं भवति, तदा रजस्तमसी अभिभूय, स्वगुणोत्कर्षेण ज्ञानप्रकाशं, सुखं सत्कर्मप्रवृत्तिजनयति।

यदा रज उत्कटं भवति, तदा सत्त्वतमसी अभिभूय स्वगुणेन दुःखात्मकं कर्मप्रवृत्तिमुपष्टम्भश्च करोति।

यदा च तम उत्कटं भवति तदा सत्त्वरजसी अभिभूय, स्वगुणेन विषादमप्रवृत्तिमज्ञानञ्चोद्भावयति।

**अन्योन्याश्रयाः**—यथा द्वाभ्यां परमाणुभ्यां द्वयणुकम्भवति, तत्र च प्रत्येकः, परमाणुरपरपरमाणुसंश्रितो भवति, यतो ह्येकस्य परमाणोः पृथग्भावे द्वयणुकं नावतिष्ठते। अतश्च द्वयमेव द्वयाश्रितमित्यत्रगम्यते तथैव गुणा अपि परस्पराश्रया भवन्ति। तथा च सत्त्वं-प्रवृत्ति-नियमाश्रयात् प्रकाशं करोति। रजःप्रकाश (ज्ञान) नियमाश्रयात् प्रवृत्तिम् विदधाति। तम -प्रकाश-प्रवृत्तिसमाश्रयणान्नियमयति।

**अन्योन्यजननाः**—यथा मृत्पिण्डो घटं जनयति।

**अन्योन्यमिथुनाः**—यथा स्त्रीपुंसौ परस्परं सहायकत्वेन सहचरौ भवतस्तदा संसारस्य व्यवहारचक्रं प्रचलति। एवमेव गुणा अपि परस्परं सहायका भवन्ति, अतएव च सृष्टिकार्यम् प्रचलति। उक्तञ्च देवीभागवते—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसि उभे।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते।
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते॥

एवञ्च ते परम्परं सहायका भवन्ति।

**अन्योन्यवृत्तयः**—एते गुणा अन्योन्यवृत्तिमूलका भवन्ति। एते 'गुणाः गुणेषु जायन्ते, तत्रैव निविशन्ति च' इति वचनाद् अन्योन्यवृत्तयः। यथा सुरूपा सुशीला स्त्री पत्युः सर्वसुखहेतुः, सपत्नीनां सैव दुःखहेतुः सैव रागिणां मोहं जनयति। (अत्र सुखजननं सत्त्वधर्मः, दुःखजननं रजोधर्मः, मोहजननं तमोधर्मः, सुरूपायामेकस्यामेव स्त्रियामवतिष्ठते, तथापि दर्शनमात्रेण सा बहून् पुरुषानाह्लादयति, तेन सा सत्त्वगुणाधिका भवति।) तेन सत्त्वं रजस्तमसोर्वृत्तिहेतुरुक्तो भवति।

---

१. सा० का० — १२।

यथा च प्रजापालनोद्यतो राजा दुष्टानां निग्रहेण सज्जनानां सुखमुत्पादयति, सहैव दुष्टानां दुःखं मोहञ्च जनयति। एवं रजः सत्त्वतमसोर्वृत्ति जनयति। तथा च तम आवरणात्मकेन स्वरूपेण सत्त्वरजसोर्वृत्ति जनयति। यथा—मेघा गगनमावृत्य जगतः सुखत्पादयन्ति, ते वृष्ट्या कृषकाणां कर्षणोद्योगं जनयन्ति, विरहिणाञ्च मोहमाविर्भावयन्ति। एवमन्योन्यवृत्तयो गुणा समाख्याताः।

यथा च भूतविद्यायां गुणानामेव विभ्रमजालकान्तारमातन्यते, तत्सर्वमेवादौ समासतो निर्दिष्टम्। समस्तमेव सृष्टिजातमेभिर्गुणैरनुगतम्। यत्र च रजस्तमसी समृद्धे स्याताम्, तत्र हि भूतविद्याक्षेत्रभूतं विकारजातमाविर्भवति। अतश्च गुणानां सूक्ष्मातिसूक्ष्मं सर्वाङ्गीणमध्ययनं विना भूतविद्यासम्बन्धिरोगोपमृष्टचेतसामनातुरत्वापादनमसम्भाव्यमेवेति।

॥ इति ॥ तृतीयं काण्डं समाप्तम् ॥

# चतुर्थं काण्डम्

## बालग्रहाः

**स्कन्दादिग्रहाबाधसूचकाः स्वप्नाः**—यदा[1] माता शिशुर्वा स्वप्ने गन्धपदार्थान् रक्तपुष्पाणि, रक्तवासांसि वा धारयति, यद्वा मयूरकुक्कुटाजमेषानारोहति, रक्तचन्दनलेपं करोति, यद्वा भुवि पतितां घण्टां पताकां वा पश्यति, शय्यां वा रक्ताक्तां पश्यति तदा स्कन्दग्रहस्य बाधाऽऽशङ्क्यते ।

यदा माता रक्तकुसुमवसना, रक्तचन्दनचर्चिता सती स्वप्ने प्रेतैः सह नृत्यति, तदा बाले स्कन्दापस्मार आशङ्कितो भवेत् । स्वप्ने यदि धात्री रक्तपद्मवने पद्ममालाभिरात्मनः शिशोर्वाऽर्चनां करोति, तदा स्कन्दपितुर्महादेवाद् भयं भवति । स्वप्ने यदि धात्री रक्तपद्मवनेऽथवाऽग्नौ प्रविशेत्, यद्वा बालोऽग्निना दह्यते, तदा पौण्डरीकाद् भयं स्यात् । यदि स्वप्ने बालः समुद्रादिषु, तोये वा निमज्जति, तदा रेवतीभयमुपजायते ।

स्वप्ने यदि बालो नदीं कूपं वा शुष्कं पश्यति, तदा शुष्करेवत्या आक्रान्तः म्रियते । मांसादान् पक्षिणो दृष्ट्वा शकुनिग्रहेण हन्यते । स्वप्ने केनापि पक्षिणा दष्टो बालः शीघ्रं म्रियते । यदि हरितालादिवर्णैरञ्जितमाकाशं पीतं पश्यति, तथा मांसं खादति, अलंकारैरलंक्रियते, तदा मुखमण्डिका तं हिनस्ति ।

यदि बालः स्वप्ने नक्षत्रग्रहचन्द्रसूर्यतारामण्डलनेत्रकनीनिकानां पतनं पश्यति, तदा पूतनाग्रहबाधा भवति । पूर्वोक्तानेव स्वप्नान् दृष्ट्वा नैगमेषेण गृह्यते ।

**बालग्रहाणां भविष्यतां पूर्वरूपाणि**—यदा[2] शिशोः परिचारिका सत्यपि सर्वविधसौविध्यमाधनसवमाये, समुपस्थितसकलभोग्यवस्तुजाते स्वस्थाऽपि सततमेव दुःस्वप्नदर्शिनी भवति, तस्याः स्तनाभ्यां यदृच्छया क्षीरं प्रवर्तते, तदा शिशुरकस्मादपस्मारग्रस्तो भवति । धात्र्या अङ्काद्वा सहसा पतति, यद्वा दुरात्मभिः सह बालो भोजनं करोति, तेषामङ्के क्रीडति, तदा शिशोरमंगलं विद्यात् । यदा धात्री मृतवत्सा भवति, परहितद्वेषिणी वा भवति, तदा साऽशुभान् भावान् चिन्तयति, अमङ्गलानि पश्यति एवं चाशुभभावान् सेवते, तदा शिशोः जीवनाशा क्षीणा जायते शिशोः शयनावसथे दारुणाः पक्षिणो नीडान् विदधति, विडालो वा शिशुं लङ्घयति परैरर्पितं बलिं तत्र भुङ्क्ते, बालो वाऽपरैरुपहृतं बलिं लङ्घयति, तदाऽशुभं जानीयात् । शिशोरास्यात् शरीराद्वा दौर्गन्ध्यं प्रसरति, नासिकाग्रं प्रायशो मलावृतं भवति, माता सुतो वाऽशोभनं रक्तवर्णमाल्यं धारयति, बालः भस्मराशावुपविशति, तुषराशौ वा तिष्ठति, तदा भाविनीं ग्रहवेदनां विद्यात् ।

---

१. काश्यपसं० — इन्द्रियस्थानम् । २. का० स० — सू० स्था० २५।४०–४८ ।

बालस्य छाया परिवर्तते, स्वभावश्च परिवर्तितो भवति, अकारणमेव बालो विभेति, रोदिति, आहारशक्तिः क्षीयते, कदाचिन्मुहुर्विड्मूत्रवेगो भवति, यद्वा नैव भवति, बालः शिरो घूर्णयते, गात्राणि च विक्षिपति, श्वासवेगो वर्धते, कदाचिदाध्मानञ्जायते। एवमादिलक्षणानि दृष्ट्वा बालस्य भाविग्रहवेदनासंक्रान्तिकाकं विजानीयात्।

**बालग्रहोत्पत्तिः ग्रहग्रहणकारणञ्च**--स्वतेजसा[1] रक्षितिस्यापि कार्तिकेयस्य रक्षार्थं भगवता शिवेन पार्वत्या च ग्रहा नियोजिता आसन् प्रभुधर्मत्वात्। देवसेनापतिपदमलङ्कुर्वाणे कार्त्तिकेये बद्धप्राञ्जलयो ग्रहाः समागताः। ते चात्मनः वृत्तिं विधातुं स्कन्दं न्यवेदयन्। आत्मवृत्त्यर्थमुपास्थतानां ग्रहाणां वृत्तिदानार्थं स्कन्दश्च भगवन्तं शिवं प्रार्थितवान्। प्रार्थितश्च हरस्तमुवाच--तिर्यग्योनिमानुषदेवानां त्रिनयं जगच्छब्दवाच्यं, एतत्त्रितयं परस्परमन्योन्योपकारेण वर्तते-धार्यते च। तत्र तिर्यग्योनयो गवादयो वहनभूमिकर्षणादिना मनुष्यानुपकुर्वन्ति, मनुष्याश्च बुसमाषादिदानेन तिर्यग्योनीमुपकुर्वन्ति। देवाश्च यथाकालं शीतोष्ण-वर्षादीन् कृत्वा मनुजान् तिर्यग्योनींश्च प्रीणयन्ति। यज्ञाञ्जलि प्रणाम-जप-हवन-व्रतादीनां सम्यग्वर्तनेन नरा देवान् प्रीणयन्ति। एवञ्च समस्तमेव भागधेयं देवादिषु त्रिषु विभज्य गृहीतं शेषमवशिष्टं किञ्चिन्नास्ति।

अतश्च युष्माकं वृत्तिर्बालेष्वेव भविष्यति। येषु कुलेषु देवयज्ञं पितृयज्ञञ्च न क्रियते, ब्राह्मणाः साधवोऽतिथयश्च न पूज्यन्ते, तत्र चाचारो लुप्तो भवेत्, न शौचमाचर्यते, परान्नग्रहणे रुचिर्भवति, बलिकर्म न विधीयते, न च भिक्षा दीयते, यत्र च भग्नकांस्यपात्रे भोजनं क्रियते, तेष्वेव धर्माचरणहीनेषु गृहेषु भवन्तो बालान् गृह्णीध्वम्। तत्रैव भवद्भ्यः प्रचुरा वृत्तिरुपलब्धा स्यात्, पूजा च स्यात्।

मातुर्धात्र्याः[2] वाऽपचारात्, मांससुरादीनां सेवनात्, मलमूत्रादिप्रक्षालन-दोषात्,स्रग्दामदूर्वावचा-सर्षपादिस्पर्शाभावाद् आचारलोपाच्च प्रसन्नान् उद्विग्नान् भीतान् वा बालान् ग्रहा गृह्णन्ति। हिंसा,[3] रतिः, पूजाग्रहणेच्छा च ग्रहग्रहणकारणानि भवन्ति। तत्र हिंसार्थिना गृहीतो बालः त्रस्यति, साश्रुनेत्रः, स्रुतनासिकः, क्षतजिह्वः कूजति, विवर्णः पूतिगन्धिः क्षामश्च भवति, हस्तावुद्यम्यः स्वं परं वा हन्ति, शस्त्रकाष्ठाद्यैश्च हन्ति। दीप्तमग्निं वाऽऽविशेत्, अप्सु मज्जेत्, कूपे वा पतेत् तृड्दाहमोहा जायेरन्, पूयच्छर्दनं वा जायेत रक्तपित्तं भवेत्, अरिष्टलक्षणानि चोत्पद्येयुस्तादृशञ्च बालमसाध्यं विद्यात्। रतिकामेन ग्रहगृहीतो बालः रहसि स्त्रीभिः संलापमाचरति गन्धमाल्याभरणप्रियश्च भवति, प्रसन्न शान्तश्च दृश्यते, तादृशञ्च कृच्छ्रसाध्यं जानीयात्। पूजाग्रहणेच्छया गृहीतो बाल शुष्कोष्ठः शुष्कगलतालुर्दीनः स्ववक्त्रं परिमृशति शङ्कितः

---

१. सु० सं० — उ० त० ३७।

२. सु० सं० — उ० त० २७। ३. अ० हृ० — उ० त० ३।

सन् इतस्ततो वीक्षते, रौति, ध्यायति, दीनो भवति नान्नमास्वादयति, तादृशञ्च बालं सुखसाध्यं वि ानीयात् ।

**सामान्य ग्रहलक्षणम्**—बाल उद्विग्नो भवति, त्रस्यति, रोदिति, धात्री-मात्मानमेव वा दन्तैर्दशति भ्रूक्षेप करोति, कूजति, जृम्भति, भिन्नविट्को भवति जागरणशीलः, शूनाङ्गो भवति, स्तन्यं न गृह्णाति, धात्र्यङ्कं नखैर्विलिखति, दुर्बलो मलिनाङ्गश्च भवति, विस्वरः, मांसशोणितगन्धिश्च जायते ।

**ग्रहाणां नामानि लक्षणानि च**—काश्यपसंहितायां ग्रहाध्यायः खण्डित एवोपलभ्यते, तत्र च प्राधान्येन रेवतीग्रहस्य वर्णनमुपलभ्यते । स्वातन्त्र्येण च 'रेवतीकल्पाध्याये' तद्विषये विशदमाख्यानमुपस्थापितम् । तच्चात्र प्रबन्धे स्फुटं संकलितमास्ते । रेवतीग्रहश्च देवानामपि दुर्धर्षः पूज्यश्च प्रकीर्तितः । तस्य नामानि[1]—

(१) वारुणी, (२) रेवती, (३) ब्राह्मी, (४) कुमारी,
(५) बहुपुत्रिका (६) शुष्का, (७) षष्ठी, (८) यमिका,
(९) धरणी, (१०) मुखमण्डिका, (११) माता, (१२) शीतवती,
(१३) कण्डू, (१४) पूतना, (१५) निरुञ्चिका, (१६) रोदनी
(१७) भूतमाता, (१८) लोकमातामही, (१९) शरण्या, (२०) पुण्यकीर्तिश्चेति ।

**अष्टाङ्गहृदये**—स्कन्द-विशाख-श्वग्रह-पितृग्रहाः पंच 'पुरुषविग्रहाः' । शकुनी-पूतना-दृष्टपूतना-मुखमण्डिका-रेवती-शुष्करेवती चेति सप्त 'स्त्रीविग्रहाः' ग्रहाः वर्णिताः सन्ति ।

**सुश्रुते च**—स्कन्द-स्कन्दापस्मार-शकुनी-रेवती-पूतना-अन्धपूतना-शीतपूतना-मुखमण्डिका-नैगमेष इति 'नवग्रहाः' वर्णिताः सन्ति ।

**स्कन्दगृहीतलक्षणम्**—[2]बालस्यैकं नेत्रं स्रवति, मुहुः शिरो विक्षिपति, स्तब्धाङ्गः, नतकन्धरः सस्वेदश्च भवति । दन्तान् घर्षयति, स्तनं द्वेष्टि, विस्वरः रोदिति । वक्त्रं वक्रं भवति, भृशमूर्ध्वं निरीक्षते । रुधिरवसा-गन्धिरुद्विग्नश्च भवति । रक्तलोचनो बद्धमुष्टिश्च भवति, बद्धमुष्टिश्चलितैकनेत्रो बद्धशकृच्च जायते । यथा सुश्रुतः[3]—

> शूनाक्षः क्षतजसगन्धिकः स्तनद्विट्-
> वक्रास्यो हतचलितैकपक्ष्मनेत्रः ।
> उद्विग्नः सुलुलितचक्षुरल्परोदी-
> स्कन्दार्तो भवति च गाढमुष्टिवर्चाः ॥

१. का० सं० — बालग्रहचि० ।
२. अ० हृ० — उ० त० ३ । ३. सु० सं० — उ० त० ३७ ।

**स्कन्दापस्मारार्तिलक्षणम्**—[1]निःसंज्ञो भवति पुनश्च संज्ञां लभते, हस्तपादाभ्यां नृत्यतीव संलक्ष्यते, उच्चैः शब्दं कृत्वा जृम्भते, यद्वा विण्मूत्रे करोति, फेनं च प्रस्रवते सः स्कन्दापस्मारगृहीतो भवति।

**विशाखगृहीतलक्षणम्**—[2]मुहुर्मुहुः संज्ञानाशः, केशलुञ्चनम्, ग्रीवाया अवनतिः विनम्य जृम्भमाणश्च शकृन्मूत्रे करोति, फेनमुद्वमति, ऊर्ध्वं निरीक्षते, हस्तपादभ्रूनर्तनं करोति। स्तनं दशति, स्वजिह्वां दशति, संरम्भं (आडम्बरं) विदधाति, जागर्ति, सज्वरः पूयशोणितगन्धिश्च जायते। (अ० हृ०)

**मेषगृहीतलक्षणम्**—[3] फेनोद्वमनं, हस्तपादमुखस्पन्दनं, आध्मानं, तृषातिसारौ, वैस्वर्यं, विवर्णता, मुष्टिबन्धः, कूजनं, छर्दिः, कासः, श्वासः, प्रजागरश्च भवति। ओष्ठौ दशति, अङ्गानि संकुचन्ति, अजागन्धिश्च जायते। ऊर्ध्वं निरीक्ष्य हसनि, नम्रीकरोति गात्रम्, मूर्च्छति, नेत्रशोफश्च भवति चेत्, मेषगृहीतं जानीयात्। अयमेव सुश्रुते[4] नैगमेष इत्युक्तस्तथा च—

> यः फेनं वमति विनम्यते च मध्ये
> सोद्वेगं विलपति चोर्ध्वमीक्षमाणः।
> ज्वर्येत प्रततमथो वसास्रगन्धि—
> र्निःसंज्ञो भवति हि नैगमेषजुष्टः॥

**श्वग्रहलक्षणम्**—[5]बालः कम्पते, हृष्टरोमा भवति, सस्वेदो भवति चक्षुर्निमीलति, बहिरायम्यते, जिह्वां दशति, कूजति, धावति, पुरीषगन्धिर्जायते श्वानवदाक्रोशति च।

**पितृग्रहलक्षणम**—[6] रोमहर्षः, मुहुर्मुहुस्त्रासः, रोदनं, ज्वरः, कासोऽतिमारः, वमथुः जृम्भा, तृषा, शवगन्धित्वं, अङ्गानामाक्षेपः, स्तब्धता, वैवर्ण्यं, मुष्टिबन्धः, अक्ष्णोः स्रुतिश्च जायते।

**शकुनिग्रहलक्षणम्**—[7]स्रस्ताङ्गता, अतिसारः, जिह्वा-तालु-गलेषु व्रणाः, सन्धिषु सदाहरुक्पाकाः स्फोटाः भवन्ति। वक्त्रे गुदे वा पाको भवति, भयमुपजायते ज्वरश्च जायते, शकुनिगन्धित्वञ्च जायते। सुश्रुते[8] च—

> स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
> संस्राविव्रणपरिपीडितः समन्तात्।
> स्फोटैश्च प्रचिततनुः सदाहपाकैः,
> विज्ञेयो भवति शिशुः क्षतः शकुन्या॥

---

१. सु० सं० — उ० त० २७।
२. विशाखस्य — स्कन्दापस्मार इति नामान्तरम्।
३. अ० हृ० — उ० त० ३।
४. सु० सं— उ० त० २७।
५. अ० हृ० — उ० त० ३।
६. अ० हृ० — उ० त० ३।
७. अ० हृ० — उ० त० ३।
८. सु० सं० — उ० त० २७।

**पूतनागृहीतलक्षणम्**—वमनं, कम्पः, रात्रौ प्रजागरः, आध्मानं, हिक्का, विड्भङ्ग, पिपासा, मूत्रावरोधः, स्रस्ताङ्गता, रोमाञ्चः, काकवत् पूतिगन्धिता च जायते। सुश्रुते[१] च—

स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ,
विड्भिन्नं सृजति च काकतुल्यगन्धिः।
छर्द्याऽऽर्तो हृषिततनूरुहः कुमार-
स्तृष्णालुर्भवति च पूतनागृहीतः॥

**शीतपूतनालक्षणम्**—कम्पः, रोदनं, तीर्यगीक्षणम्, तृष्णाऽन्त्रकूजनं, अतिसारः, एकाङ्गे शैत्यमपराङ्गे उष्णत्वं वसावद् विस्रगन्धिता च भवति। यथा च सुश्रुते—

उद्विग्नो भृशमतिवेपते प्ररुद्यात्
संलीनः स्वपिति च यस्य चान्त्रकूजः।
विस्राङ्गो भृशमतिसार्यते च यस्तं
जानीयाद् भिषगिह शीतपूतनार्तम्॥

**अन्धपूतनालक्षणम्**—[१]छर्दिः, ज्वरः, कासोऽल्पनिद्रता, वर्चोभेदः, वैवर्ण्यं, दौर्गन्ध्यं, अङ्गशोषः, कण्डूः, पोथकी, शोथः, उद्वेगः, हिक्का, स्तनद्वेषः, स्वरतीक्ष्णता, वेपथुर्मत्स्यगन्धित्वञ्च जायते। सुश्रुते च—

यो द्वेष्टि स्तनमतिसारकासहिक्का—
च्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः
दुर्वर्णः सततमधः शयोऽम्लगन्धि—
स्तं ब्रूयुर्भिषज इहान्धपूतनार्तम्।

**मुखमण्डिकालक्षणम्**—पाणिपादयोः रमणीयत्वं, कृष्णसिराभिरुदरं व्याप्तं भवति, अरोचकः अङ्गेषु क्षीणता गोमूत्रगन्धिता च भवति। तथा च सुश्रुते—

म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो
बह्वाशी कलुषसिरावृतोदरो यः।
सोद्वेगो भवति च मूत्रतुल्यगन्धिः,
स ज्ञेयः शिशुरिह वक्त्रमण्डिकार्तः॥

**रेवतीलक्षणम्**—[२] ज्वरातिसारः विसर्पः, व्यथा, क्लमः, आनाहः, शूलमरुचिः, श्वासकासौ, तृषानिद्रानाशोऽतिनिद्रा वा, मुखपाक, व्रणोत्पत्तिः, पक्षवधः, क्षीरालसकः, विसूचिका, हिक्का, मूर्छा, मदो, मोहः, रोदनं स्तब्धनेत्रत्वं स्वरभेदोऽग्निमान्द्यं, पाण्डुत्वं, कामला, क्षीरदोषः, शिरःशूलम्, हृदयद्रवः, नासा-नेत्र-कर्णरोगाः, त्रासः रोदनञ्च, तथान्ये बहवो रोगा जायन्ते। देहस्य[१] श्यावता,

---

३. सु० सं० — उ० त० २७।

१. दृष्टिपूतना इति नामान्तरम्। २. का० सं० — बा० ग्र० चि०।

नीलत्वं, कर्णनासाक्षिमर्दनम्, हिक्का, अक्षिविक्षेपः, आस्यवक्रता, ज्वरः, शोषः, हरितद्रवपुरीषता, बस्तगन्धित्वञ्च भवति। सुश्रुते तु—

रक्तास्यो हरितमलोऽतिपाण्डुदेहः
श्यावो वा ज्वरमुखपाकवेदनार्तः।
रेवत्या व्यथिततनुश्च कर्णनासं
मृद्नाति ध्रुवमभिपीडितः कुमारः॥

**शुष्करेवतीलक्षणम्**[1]—सर्वाङ्गे क्षीणता तथा रेवत्युक्तलक्षणानि च जायन्ते।

**शुष्करेवत्या**[2] **असाध्यलक्षणम्**—केशपातोऽन्नविद्वेषः, स्वरक्षीणता, वैवर्ण्यं, रोदनं गृध्रगन्धित्वं, उदरे ग्रन्थयः, अनेकविधं वर्चः प्रवर्तते। जिह्वामध्ये निम्नता, तालु च श्यावं भवति, बहुविधमन्नं भुञ्जानोऽपि यो बालो हीयते, क्षामेन्द्रियः तृष्णापीडितश्च शुष्करेवत्या हन्यते।

**असाध्यग्रहार्तलक्षणम्**[3]—

प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन्मुहुः।
तं बालमचिराद्धन्ति ग्रहः सम्पूर्णलक्षणः॥

**साध्यग्रहार्तलक्षणम्**—"विपरीतमतः साध्यं चिकित्सेदचिरार्दितम्।"

**ग्रहाणां मानवशरीरेण सह सम्बन्धः**—भारतीयैर्महर्षिभिर्गायत्रीमन्त्रं प्रतीकत्वेन स्वीकृतम्। तत्र च चतुर्विंशत्यक्षराणि २४ देवानां प्रतीकभूतानीति। यथा चाह याज्ञवल्क्यः—

| | | | |
|---|---|---|---|
| (१) अग्निः | (२) वायुः | (३) सूर्यः | (४) विद्युत् |
| (५) यमः | (६) वरुणः | (७) बृहस्पति | (८) पर्जन्यः |
| (९) इन्द्रः | (१०) गन्धर्वः | (११) प्रणवः | (१२-१३) मित्रावरुणौ |
| (१४) त्वष्टा | (१५) मरुत् | (१६) सोमः | (१७) अङ्गिरसः |
| (१८) विश्वेदेवाः | (१९) अश्विनौ | (२०) प्रजापतिः | (२१) सर्वदेवः |
| (२२) रुद्रः | (२३) ब्रह्मा | (२४) विष्णुश्चेति। | |

एते च देवाः यथा ब्रह्माण्डे तथैव पिण्डे स्वप्रभावमातन्वते। एषामक्षराणामूर्जस्वलं तत्त्वं निखिलमवनितलमभिव्याप्नोति। यथा हि ब्रह्माण्डस्थचतुर्विंशतिदेवैः सान्निध्यमास्थापयन्ति। गायत्र्यधिष्ठाता सूर्यो देवता। गायत्रीमन्त्रानुष्ठानेन च सूर्येण सह घनिष्ठः सम्बन्धो जायते, तेन च प्रकाशराशिरवाप्यते।

यदि चेद् देहस्थग्रहाः ब्रह्माण्डस्थग्रहानभिमुखीकर्तुं प्रभवेयुस्तदा ग्रहाणां प्रातिकूल्यमपयाति। ग्रहाणामानुकूल्ये सत्येव शरीरमनामयमोजोमयं शक्तिसम्पन्नञ्च

---

१. अ० हृ० उ० त० ३। २. अ० हृ० — उ० त० ३।
३. सु० सं० — उ० त० २७।

जायते । प्राक्तनाश्च महर्षयः ब्रह्माण्डस्थ[1]ग्रहाणामानुकूल्यार्थमेव ग्रहयज्ञानाचरन्ति स्म । ते च विदन्ति स्म यच्छारीरं मानसञ्च स्वास्थ्यं ब्रह्माण्डस्थग्रहशक्त्यधीनम् । अन्यत्र च –

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः[2] ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ (श्रीभवद्गीता—३।१०-११)

मानवो यज्ञादिकर्मभिर्देवान् प्रीणयित्वा यथेष्टं सुखं सम्पच्चावाप्नोति । महर्षिणा याज्ञवल्क्येन वर्णितं, यत् वह्नौ[3] दत्ता आहुतिर्द्विधा विभज्यते, एको भागः पृथिव्याकाशजलवायुशुद्धिं विदधाति, अपरश्च भागो मानवस्य सूक्ष्म-शरीरं पुष्णाति ।

आयुर्वेदे च देवादिप्रकोपजन्यव्याधीनां वर्णनमास्ते । अथ च यज्ञ-बलि-होमादिभिर्देवानां प्रीणनविधानमाख्यातम् । प्रसन्नाश्चाभिवर्षन्ति सुखसम्पदं ते ।

पूर्वजन्मकृतपापजन्यव्याधिसमुत्पत्तौ च देवव्यपाश्रयचिकित्साया विधानं वर्णितम् । यस्मिंश्च[4] नक्षत्रे व्याधिर्जायते, तन्नक्षत्राधिष्ठातृदेवतासन्तुष्ट्यै तदनुरूपद्रव्यहवनविधानेन रोगो निवर्तते ।

यक्ष्मरोगचिकित्सिते "सदाचार-सन्ध्योपासन-सूर्योपस्थान-माहेश्वर-कवच" धारणस्य च निर्देशः कृत उपलभ्यते । रोगापनयनार्थं सूर्यचन्द्रवाय्वादिपूजाविधानं ग्रहयज्ञविधानञ्च समुपदिष्टम् । वेदे सूर्यदेवो जगत आत्मा निगदितः—

'सूर्य आत्मा जगतस्तस्थुषश्च" ।

वनस्पति-वानस्पत्य-वीरुधौषधयः सूर्यादेव तांस्तान् गुणानादधते । तत एव रोगनिवारणशक्तिं लभन्ते । ततश्च रसवीर्यादिकमुपलभन्ते । तत एव प्राणशक्ति-मायुष्यशक्तिं पौरुषशक्तिञ्चाप्नुवन्ति । मानवस्यारोग्यं नैरुज्यञ्च सूर्याधीनम् । अत एवाद्यतनीना विज्ञानविदो जनाः सूर्यादूर्जाऽर्जनायाहर्निशं प्रयत्यमाना दृश्यन्ते । चन्द्रकिरणैश्चागाधं विशालं पारावारं समुच्छलति ।

एवञ्च सृष्टौ ग्रहाणां दैव्यशक्त्या विश्वमोतप्रोतं प्रतिभाति । ग्रहाश्च सृष्टिसञ्चालनाय परमेश्वरस्य शक्तिरूपेणावस्थिता विश्वस्य नियमनं विदधति ।

ब्रह्माण्डस्थितशक्त्यनुरूपमेव शरीरेऽपि ग्रहशक्तयः सन्निहिताः । जप-होम-नमस्कार-पूजन-ध्यान-बलिप्रदानादिभिश्च शरीरे ताः सूक्ष्मशक्तय उत्कर्षतां व्रजन्ति । शक्तिजागरणे च ग्रहाणामानुकूल्यमुपजायते ।

---

१. याज्ञ० स्मृ० आचाराध्यायः । २. मनुस्मृतिः ।
३. या० व० स्मृ० । ४. वङ्गसेनसंहिता ।

यदा च पिण्डस्थशक्तिः मूलस्रोतसा समन्वेति, तदा ब्रह्माण्डस्थग्रहसकाशात् पिण्डस्थ-ग्रहेषु शक्तिप्रवाह आगच्छति, तदा च शारीरं मानसञ्च स्वास्थ्यं समृद्धञ्जायते ।

आयुर्वेदीया च दैवव्यपाश्रयचिकित्सा ग्रहेभ्यः शक्तिसञ्चयनार्थमेव विधीयते। विधिरयं ब्रह्माण्ड-पिण्डोभयशक्तिसमन्वयस्य पन्थाः । येन च यथा ग्रहाणामनु-ग्रहावाप्तिर्भवति ।

मन्त्राणां प्रभावः—यदा च मन्त्रोच्चारणं क्रियते, तदा मन्त्रध्वनय आकाशे व्याप्नुवन्ति । यत्र यत्र चानुकूल्यं प्रतीयते, तत्र तत्र सम्पृक्ता भवन्ति । पूतेन मनसा उच्चरिता मन्त्राः यथा स्वग्रहानभिप्रीणयन्ति, तदा च सुप्रीणिता ग्रहाः स्वशक्तिप्रवाहैराप्याययन्ति प्रयोक्तारम् । प्रयोक्ता च प्रसन्नतां सुखं पुष्टिञ्च लभते । [1]ग्रहाणां प्रीणनार्थं शान्त्यै च विविधा मन्त्राः कृतप्रयोगा दरीदृश्यन्ते ।

ब्रह्माण्डस्थग्रहाणां प्रातिकूल्यं किल महानभिशापः । तथासति पिण्डस्थ-ग्रहाणां नैर्बल्यं भवति । स्वमूलस्रोतसा सम्बन्धभङ्गे स्वगुणानुग्रहशक्ति-प्रवाहोऽवरुध्यते ।

शरीरपिण्डे च ब्रह्माण्डस्थदेवानां प्रातिनिध्यमास्ते । तथा च सूर्यस्य आत्मा चंद्रमसः मनः, मङ्गलस्य रक्तं, बुधस्य वाक्, बृहस्पतेर्ज्ञानम्, शुक्रस्य वीर्यम्, शनेश्च सुखदुःखानुभवः ।

यथा च विद्युत्प्रकाशस्तदैवोपलभ्यते, यदाऽविरतं विद्युत्तन्त्रिकाप्रणाली विद्युद्गृहाद्विद्युद्धारामावहति । तथैव पिण्डस्थग्रहाणां स्वस्थतयाऽवस्थानं ब्रह्माण्ड-स्थग्रहानुकूल्ये सत्येव भवितुमर्हति । अमुमेव विचारसरणिमन्वेत्य दिनचर्या-ऋतुचर्याप्रभृतीनां वैशद्येन निर्देशो कृत उपलभ्यत आयुर्वेदीयासु संहितासु, यथा हि लोकसम्मतस्य पुरुषस्य लोकशक्तिभिः सामञ्जस्यं स्थापितं स्यात् ।

एवञ्च भारतीयैराचार्यैर्मानवोपरि ग्रहाणां प्रभावो भवतीत्यङ्गीकृतम् । न केवलं मानवाः, अपितु समस्तमेव पृथवीतलीयं वस्तु ग्रहप्रभावप्रभावितं भवति ।

ज्योतिषशास्त्रे चास्मिन् विषये पर्याप्तं पर्यालोचनं कृतमुपलभ्यते । अन्नं, फलं, पुष्पाणि, वनस्पतयः, धावतः, मणयः, रत्नानि च ग्रहैः प्रभावितानि भवन्ति । वैज्ञानिकैश्च प्रयोगैरेतत् स्पष्टीकृतमस्ति तद्विद्याचार्यैरिति ।

**मणिषु[2] ग्रहाणां प्रभावः**—इन्द्रगोपप्रतीकाशे अरुणवर्णे माणिक्ये सूर्यस्य प्रभावो भवति, अतो हि माणिक्यधारणात् सर्वविधार्तिप्रशमनञ्जायते। अरुण-पीत-श्यामे मौक्तिके चन्द्रस्य प्रभावो भवति, अतश्चन्द्रगुणलाभाय मौक्तिकधारणं प्रशस्यते। पीताभे प्रवाले मङ्गलहस्य, मयूरपक्षचन्द्रिकाभे तार्क्ष्ये ( पन्नाख्ये ) बुधस्य, स्वर्णाभपुष्पे ( पुखराज ) बृहस्पतेः, वज्रे ( हीरा ) शुक्रस्य नीलाख्ये

---

१. अथर्ववेद– १९।९।६-७, १०-११ ।
२. शुक्रनीतिसारः— ४।२।१५६ ।

च शनेः प्रभावो भवति। तथाहि शारीरग्रहानारोग्ये (विकारे) यथास्वरत्न-धारणेन तद्ग्रहशक्तिलाभेन रोगो नश्यति। तथाहि आयुर्वेद चामुमेवार्थमाह वाग्भटः—

माणिक्यमुक्ताफलविद्रुमाणि
ताक्ष्यंश्च पुष्पं भिदुरं च नीलम्।
गोमेदकं चाथ विडूरकं च
क्रमेण रत्नानि नवग्रहाणाम्॥
ग्रहानुमैत्र्या कुरुविन्दपुष्प-
प्रवालमुक्ताफलताक्ष्यंवज्रम्।
नीलाख्यगोमेदविडूरकं च
क्रमेण मुद्राधृतमिष्टसिद्धयै[1]॥

ग्रहाणां धातवः—स्वर्णे सूर्यस्य, रजते सोमस्य, ताम्रे मङ्गलस्य, पित्तले बुधस्य, कांस्ये बृहस्पतेः, पारदे शुक्रस्य, लौहे च शनैः प्रभावो भवति। स्वर्णे च सूर्यगुणाधिक्यात् स्वर्णं विषघ्नं दीर्घायुष्यमोजस्यञ्च भवति। शेषेषु च धातुषु तत्तद्ग्रहाणां गुणा उपलभ्यन्ते। अतश्च ग्रहशान्त्यर्थं तत्तद्धातूनां धारणमाम्नातम्।

वनस्पतिषु ग्रहप्रभावः—अपमार्गे सूर्यस्य, मन्दारे चन्द्रस्य, पलाशे मङ्गलस्य, खदिरे बुधस्य, उदुम्बरे बृहस्पतेः, अश्वत्थे शुक्रस्य, कुशे च शनेः गुणाः समुपलभ्यन्ते एशञ्च शरीरस्थतत्त्वानां ग्रहैः सह महाघनिष्ठः सम्बन्धो भवति। शारीरविकारा-णाञ्च शान्त्यै ग्रहानुगुणमणीनां धातूनां वनस्पतिनां वा प्रयोगो विधीयते। यथा च शरीरे ग्रहाणां प्रातिनिध्यमास्ते, तत्प्रागेव निवेदितम्। तथा च शरीरस्थधातूनां विकृतौ क्षये वा तदनुगुणभेषजप्रयोगः क्रियते।

यथा—यकृत्प्लीहविकृतौ पाण्डुता जायते, तन्निवृत्यै तादृगौषधप्रयोगो भवति, यत्रौषधे मङ्गलग्रहस्य गुणा अनुस्यूताः स्युरिति। उदाहरणार्थं—नवायसलौह, पुनर्नवामण्डूरः, लौहभस्म, लौहासवः, कुमार्यासवः, अन्ये च लौहयोगाः प्रयुज्यन्ते, तेषाञ्च भेषजानां प्रयोगेण पाण्डुत्वमपयाति। तथाहि शरीरस्य ग्रहैः सह नितरां घनिष्ठः सम्बन्धो वर्तते। ग्रहाणामानुकूल्ये स्वास्थ्यमन्यथाऽस्वास्थ्यमिति पूर्वोद्धृ-तसन्दर्भैः वैशद्येन प्रकटीकृतमास्तेऽत्र।

मानवमनसि तत्कर्मसु च चन्द्रमसः प्रभावो भवति ? बम्बई नगरीतः २९ सितम्बर १९७२ वर्षे एकः समाचारः प्रकाशितो वर्तते। तस्य चोल्लेखो वाराणसीतः प्रकाशिते हिन्दीदैनिक 'आज' पत्रे ३० सितम्बर १९६२ तिथौ निहितोऽस्ति। तस्य च संक्षितानुवादोऽविकलं प्रस्तूयते (प्राक् च हिन्दी समाचारः दीयते)।

---

१. र० र० स०—पू० ख० ४१५-६।

वम्बई, २९ सितम्बर। दो अमेरिकी अनुसन्धानकर्ताओं ने ऐसे आंकड़े प्राप्त किये हैं, जिनसे यह संकेत मिलता है, कि मनुष्य का मन चन्द्रमा से प्रभावित होता है और पागलपन तथा मनुष्य के आचरणों का चन्द्रमा से सम्वन्ध है।

मनस्तत्त्वविद् अर्नाल्ड एल० सावर तथा कैरोलिन आर० शेरिन ने फ्लोरिडा और ओहियो में करीव चार हजार हत्याओं का अध्ययन कर यह पता लगाया है, कि द्वितीया और पूर्णिमा को ही अधिकतर हत्याएँ होती हैं। मनुष्य की भावनाओं पर भी चन्द्रमा का प्रभाव पड़ता है। इन्हीं तिथियों को मन में उद्वेग और उन्माद पैदा होता है, इनसे प्रभावित हो मनुष्य अविवेकपूर्ण कार्य कर वैठता है।

इन अनुसन्धानकर्ताओं ने अपनी रिपोर्ट में जो 'अमेरिकन साइन्स पत्रिका' में प्रकाशित हुई है, वताया है कि जव द्वितीया या पूर्णिमा को चन्द्रमा पृथ्वी के वहुत निकट आ जाता है, तो मानव-हत्याएँ होती हैं। अगस्त १९७० में सूर्य, चन्द्रमा और पृथ्वी जव एक ज्यामितिक सीधी रेखा में आ गये थे, तव हत्याएं वहुत अधिक हुईं। ग्रहों की ऐसी स्थिति कई वर्षों वाद आती है। डाक्टर सीवर का कहना है, कि मनुष्य के शरीर में ८० प्रतिशत जलतत्त्व होता है और चन्द्रमा इसे उसी तरह प्रभावित करता है, जैसे वह समुद्र को प्रभावित कर उसमें ज्वार पैदा करता है ( यू० एन० आई० )।

द्वौ अमेरिकी--अनुसन्धानकर्तारौ तादृशं विवरणं प्रकटीकुरुतः, येनेदं ज्ञातं भवति, यत् मानवस्य मनः चन्द्रेण प्रभावितं भवति तथा उन्मादस्य विविधस्यान्य-विधाचरणस्य च चन्द्रेण सह सम्वन्धो भवति।

मनस्तत्त्वविद् अर्नाल्ड एल० सीवरः तथा कैरोलिन आर० शेरिनमहोदयः फ्लोरिडा तथा ओहियोप्रदेशयोः प्रायशः चतुःसहस्रहत्यानाम् अध्ययनेन निष्कर्षं प्रकटीकृतवन्तौ यद् द्वितीयायाम् पूर्णिमायां वा तिथौ आधिक्येन हत्या भवति। मानवभावनाश्च चन्द्रेण प्रभाविता भवन्ति। अनयोश्च तिथ्योः मनसि उद्वेगः उन्मादो वा जायते। येन च प्रभावितो मानवोऽविवेकपूर्णे कर्मणि प्रवर्तते।

'अमेरिकन साइन्स पत्रिका' प्रकाशितविवरणानुसारं अनुसन्धातारौ स्वाभिप्रायं प्रकटीकुरुतः, तेन द्वितीयातिथौ पूर्णिमातिथौ च चन्द्रः पृथिव्या निकटतमे भागे समायाति, तथा मानवहत्या जाजायते। अगस्त १९७० मासे यदा सूर्यः, चन्द्रः, पृथिवी च एकस्यां समज्यामितिकरेखायां समागतास्तदा वाहुल्येन हत्या जाता। ग्रहाणां तादृशी स्थितिः कतिपयवर्षानन्तरं जायते। डाक्टरसीवरो वक्ति यत् मनुष्यशरीरे ८० प्रतिशतं जलतत्त्वमास्ते। अथ च चन्द्र एनं तथैव प्रभावितं करोति, यथा स समुद्रं प्रभावितं विधाय तत्र ज्वारं समुत्पादयति। (यू० एन० आई०)

## भूतोन्मादाः

आयुर्वेदवाङ्मये वर्णितोऽयमुन्मादामयो मानसामयेष्वन्यतमः। तस्य च पञ्च-भेदा[1] भवन्ति। तत्र चत्वारो दोषजा एक आगन्तुजः। आगन्तुजे च दोषजोन्मादेभ्यः पृथगेव निदानादीनि भवन्ति। निदानम्—प्राक्तनजन्मकृतदुष्कर्मवशादय-मुन्मादो जायत इति केषाञ्चन मतम्। तत्र चेह जन्मनि पूर्वजन्मनि वा यद्यपि दुष्कर्म क्रियते, तत्र[2] प्रज्ञापराधस्यैव कारणता प्राधान्येन। अमुमेवाशयमभिलक्ष्य महर्षिणा चरकेण चैवं समीरितं यद् यदा हि कश्चन पुरुषो देव[3]-ऋषि-पितृ-गन्धर्वादीनि तिरस्कृत्याहितानि कर्माणि समाचरति, अन्यद्विधं कर्माप्रशस्तं वा समाचरति, तदा स्वकर्मक्लेशचोदितं तं देवादय उन्मत्तं विदधति। वस्तुतस्तु आत्मैव सुखदुःखयोः कर्ता। यश्चोन्मादफलजनकं कर्म करोति, स एव देवादीनाम-भिगमनीयो भवति। दुष्कृतकर्मप्रेरिता एव देवादयोऽशुभकर्माणमाविशन्ति। तथा च—

नैव देवा न गन्धर्वा न पिशाचा न राक्षसाः।
न चान्ये स्वयमक्लिष्टमुपक्लिश्यन्ति मानवम्॥
ये त्वेनमनुवर्तन्ते क्लिश्यमानं स्वकर्मणा।
न स तद्धेतुकः क्लेशो न ह्यस्य कृतकृत्यता॥
प्रज्ञापराधात्सम्प्राप्ते व्याधौ कर्मज आत्मजः।
नाभिशंसेद् बुधो देवान्न पितॄन्नापि राक्षसान्॥
आत्मानमेव मन्येत कर्तारं सुखदुःखयोः।
तस्माच्छ्रेयस्करं मार्गं प्रतिपद्येत नो त्रसेत्॥[4]

पूर्वरूपम्[5]—देवादीनां प्रकोपजं चोन्मादे देवानां, ब्राह्मणानां तपस्विसिद्धा-चार्याणाञ्च हिंसारुचिर्भवति। क्रोधः, परापकाराभिलाषः, उद्विग्नता, व्यथितेन्द्रियता,

---

१. इह खलु पञ्चोन्मादा भवन्ति, तद्यथा—वात-पित्त-कफसन्निपातागन्तुनिमित्ताः (च० नि० ७।३)

२. 'प्रज्ञापराद्ध्ययं देवर्षि-पितृ-गन्धर्व-यक्ष-राक्षस-पिशाच-गुरुवृद्धसिद्धाचार्य-पूज्यानवमत्या-हितान्याचरति, अन्यद्वा किञ्चिदेवंविधं कर्माप्रशस्तमारभते। तमात्मनोपहतमुपघ्नन्तो देवादयः कुर्वन्त्युन्मत्तम्।' (च० नि०, ७।१३)

३. देवर्षिगन्धर्वपिशाचयक्षरक्षःपितॄणामभिधर्षणानि।
आगन्तुहेतुर्नियमव्रतादिमिथ्याकृतं कर्म च पूर्वदेहे॥
(च० चि०, ९।१६)

४. च० नि०—७।२२-२५।

५. देवादिप्रकोपनिमित्तेनागन्तुकोन्मादेन पुरस्कृतस्येमानि पूर्वरूपाणि भवन्ति। तद्यथा—देवगोब्राह्मणतपस्विनां हिंसारुचित्वं कोपनत्वं, नृशंसाभिप्रायता, अरतिः, अनोजः, वर्ण-च्छायाबलवपुषामुपतप्तिः, स्वप्ने च देवादिभिर्भर्त्सनं प्रवर्तनं चेति, ततोऽनन्तरमुन्मादा-भिनिर्वृत्तिः (च० नि० ७।१४)।

दौर्वल्यं, प्रध्यानशीलता, ओजोहानिः, बलवर्णहानिः, देवादिभिः स्वप्नेऽभिभर्त्सनं प्रेरणञ्च जायते।

रूपम्[१]—उन्मत्ते जने अमानुषीशक्तिरमानुषः पराक्रमः, अमानुषीवाक्, चेष्टा चामानुषी परिलक्ष्यते। ज्ञान-विज्ञानादिकं बलं चाद्भुतं भवति। न चात्रोन्मादकालनिश्चितिः।

अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः।
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम्[२]॥

सोऽष्टधा[३] प्रविभक्तः—१—[४]देवजुष्टोन्मादः—सन्तोषवान्, स्नानाचमनादिना शुचिः, अतिमात्रं दिव्यमाल्यगन्धयुक्तः, कुंकुमचन्दनादिगन्धी, अनिद्रः, सत्यवक्ता, संस्कृतभाषी, तेजस्वी, स्थिरनयनः (निमेषरहितः) पार्श्वस्थजनेभ्यो वरप्रदाता, ब्राह्मणेष्वनुरक्तश्च भवति।

२. असुरजुष्टोन्मादः—असुरगृहीतोन्मादी प्रस्वेदयुक्तः, ब्राह्मणस्य गुरोर्देवानाञ्च दोषवक्ता, वक्रदृष्टिः, निर्भयः, विमार्गदर्शनः (नास्तिकः) बहुभक्तादिभोजनेन, जलादिपानेन चाप्यसन्तुष्टः, दुष्टस्वभावो भवति।

३. गन्धर्वोन्मत्तः—हर्षयुक्तः, जलमध्योत्थितभूप्रदेशविहारी, वनविहरणशील, शोभनाचारः, संगीतगन्धमाल्यप्रियः, चारुनृत्यन् सन् साल्पशब्दमीषद्धसति, स खलु गन्धर्वोन्मत्तो ज्ञेयः।

४. यक्षोन्मत्तः—यश्च रक्तनेत्रः, कमनीयसूक्ष्मरक्तवस्त्रपरिधानशीलः, क्षमाशीलः तेजोयुक्तो, भवति, यश्च 'कस्मै किं ददामि; इति वदति, स यक्षोन्मत्तो ज्ञेयः।

५. पितृजुष्टः—यश्च शान्तस्वभावः, दक्षिणस्कन्धनिहितयज्ञोपवीतवस्त्रः, प्रेतेभ्यो दर्भसंस्तरेषु अन्नमयान् पिण्डान् प्रददाति, मांसाभिलाषी, तिलगुडेच्छुः, क्षीरसिद्धतण्डुलाभिकामो भवति, सः पितृजुष्टो भवति।

६. नागजुष्टः—यो भूमौ सर्पवद् उरसा भ्रमति, जिह्वया ओष्ठप्रान्तौ विलेढि महाक्रोधनः, गुडमधुदुग्धपायसेप्सुश्च भवति, स नागजुष्ट इति व्यवस्येत्।

---

१. 'तस्येमानि रूपाणि भवन्ति, तद्यथा—अत्यात्मबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणज्ञानवचनविज्ञानानि, अनियतश्चोन्मादकालः।'
(च० नि०, ७।१६ द्रष्टव्यम्—च० चि० ९)

२. च० चि०—९।१७।

३. अष्टाङ्गहृदये तु—'सोऽष्टादशविधो देवदानवादिविभेदतः' (अ० हृ० उ० ४) वृद्धवाग्भटे—चाष्टादशभूताधिपतयः—'सुरासुरगन्धर्वोरगयक्षब्रह्मराक्षसराक्षसपिशाचप्रेतकूष्माण्डकाखोर्दमौकिरणवेतालपितरः, ऋषिगुरुवृद्धसिद्धाश्च, ते पुनः पृथक् कोटिपरिवाराः, तेषामपि चासंख्येयः परिवार इत्यनन्तो भूतलोकः (अ० सं० उ० ७)।

४. सु० सं० उ० त० ६० तथा च० चि० ९ अध्यायौ द्रष्टव्यौ।

७. **राक्षसोन्मत्तः**—मांसरक्ताभिलाषी, पैष्टी-गौडीप्रभृति विविधसुराप्रियः, निर्लज्जः, अतिनिष्ठुरोऽतिशूरः, क्रोधालुर्महाबलिष्ठः, निशायां भ्रमणशीलः, अशुचिप्रियश्च राक्षसोन्मत्त इति विद्यात् ।

८. **पिशाचोन्मत्तः**—ऊर्ध्वबाहुः, दुर्बलो निर्मांसः, कर्कशः, बहुप्रलापी, अतिचपलः भृशमशुचिः, दुर्गन्धो, बह्वाशी (प्रचुरभोक्ता), निर्जनस्थानप्रियः, हिमाम्बुसेवी, रात्रिविहारी, उद्विग्नः, रुदन् सन् विरुद्धमाचेष्टमानो भ्रमति, स पिशाचजुष्टो[1] भवति ।

**देवादीनां देहावेशप्रकारः**—ननु यदि देवादीनां शरीरे आवेशो भवति, तर्हि ते हि विशन्तो कुतो न लक्ष्यन्ते ? इत्यत उच्यते—यथा हि दर्पणादिषु प्रतिबिम्बमाविशति, यथा च प्राणिशरीरे शीतोष्णमाविशति किं वा यथा सूर्यकान्तमणौ सूर्यरश्मयोऽथवा यथा गर्भशरीरं जीवः समाविशति, तद्वदेव मानवशरीरे देवादयो ग्रहा आविशन्ति, न च दृश्यते । अर्थात्—यथा[2]छायाशीतोष्णादयो दर्पणप्राणिप्रभृतीन् विशन्तो न दृश्यते, तद्वद् ग्रहा अपि समाविशन्ति, न च दृश्यन्तेअपितु तेषां प्रभावः परिलक्ष्यते, विविधान् वेदनाविशेषानाविष्कुर्वन्ति ते । शरीरं क्षोभयित्वाऽनुप्रविश्य स्वैर्लिङ्गैरात्मानं दर्शयन्ति । तथा च—

दर्पणादीन् यया छाया शीतोष्णं प्राणिनो यथा ।
स्वमणिं भास्करार्चिश्च यथा देहं च देहधृक् ॥
विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणाम् ।
प्रविश्याशु शरीरं हि पीडां कुर्वन्ति दुःसहाम्[3] ॥

**देवादीनां तीव्रतपोनियमादियुक्तत्वं प्रभावत्वञ्च**—

यथाह सुश्रुतः—

तपांसि तीव्राणि तथैव दानं व्रतानि धर्मो नियमाश्च सत्यम् ।
गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च यथाप्रभावम् ॥

डल्हणटीका—तपांसि तीव्राणीति । तपस्तपनलक्षणमुपवासादि । व्रतानि-शास्त्रोदितविधिना भोजनादिनियमनादि । धर्मः—कायवाङ्मनसां सुचरितम् । गुणास्तथाऽष्टाविति—अणिमा, लघिमा, महिमा, गरिमा, प्राकाम्यं, ईशित्वं, वशित्वं, कामावसायित्वम्, इत्यष्टौ । अन्ये तु—'आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।

---

१. देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः ।
रक्षांसि या चापि पिशाचजातिः, एषोऽष्टको देवगणो ग्रहाख्यः ॥
(सु० उ० त० ६०।७) ।

२. अदूषयन्तः पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः ।
विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्यकान्तौ ॥ (च० चि० ९)

३. सु० उ०—६०।१९—२० ।

दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥' ( च० शा० १)
इत्यष्टविधमैश्यर्यमाहुः । तेषु ग्रहेष्वेते गुणा नित्या न कादाचित्काः । व्यस्ता द्वित्रिचतुराः । समस्ताः. देवग्रहाणाम् ॥ इति ।

एवञ्च सुश्रुताचार्याः स्वीकुर्वते--यत् तपोनियमादियुक्ताः[1] देवादिग्रहाः कथंचिदप्यशुचिदेहं नाविशन्ति । न च ते मनुष्यैः सह संविशन्ति, न वा मानुषदेहान् अनुप्रविशन्ति । ये तु वैद्या अज्ञानाद्देवादय आविशन्तीति प्रवदन्ति, ते भूतविद्याविषयाद् बहिस्त्याज्या इति । ये पुनर्भीमा भयङ्कराः निशाविहारास्तेषां देवादिग्रहणां परिचारकास्त एव समाविशन्ति । तेषाञ्च देवाद्यनुचराणां स्वस्वामिनामिवानुकारो भवति, अतश्च ते यं देवगणमाश्रितास्ते तल्लक्षणा एव विज्ञेया भवन्ति । ये पुनरनुचराः शुचयस्ते देवग्रहाः प्रोच्यन्ते । देववच्च तेषां नमस्कारः प्रार्थनासपर्यादिकञ्च विधीयते ।

देवादिभिरभिगमनीयाः पुरुषास्तेषामावेशकालश्च--"तत्र चौक्षाचारं तपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्यां च छिद्रमवेक्ष्याभिधर्षयन्ति देवा; स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिवाक्यकुशलं प्रायः षष्ठ्यां नवम्यां चर्षयः; मातृ-पितृ-गुरु-वृद्ध-सिद्धाचार्योपसेविनं प्रायो दशम्याममावास्यायां च पितरः; गन्धर्वाः स्तुतिगीतवादित्ररतिं, परदारगन्धमाल्यप्रियं, चौक्षाचारं, प्रायो द्वादश्यां चतुर्दश्यां च; सत्त्व-बल-रूप-गर्व-शौर्ययुक्तं, माल्यानुलेपन-हास्य-प्रियमतिवाक्प्रवणं प्रायः शुक्लैकादश्यां सप्तम्यां च यक्षाः; स्वाध्यायतपोनियमोपवास-ब्रह्मचर्य-देव-यति-गुरुपूजाऽरतिं, भ्रष्टशौचं, ब्राह्मणमब्राह्मणं वा ब्राह्मणवादिनं शूरमानिनं देवागारसलिलक्रीडनरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसाः; रक्षः-पिशाचास्तु हीनसत्त्वं, पिशुनं, स्त्रैणं, लुब्धं, शठं प्रायो द्वितीया तृतीयाष्टमीषु, इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेते व्याख्याता' (च०चि० ९।२८)।

भूतोन्मादस्य सम्प्राप्तिः—अल्पसत्वो जनः प्रज्ञापराधाद् यदा देवादीनवमत्य स्वेच्छाचारितया पूज्यपूजाव्यतिक्रममाचरति, बुद्धिविभ्रंशादशुभं वा चित्तविभ्रंश-

---

१. न ते मनुष्यैः सह संविशन्ति, न वा मनुष्यान् क्वचिदाविशन्ति ।
ये त्वाविशन्तीति वदन्ति मोहात् ते भूतविद्याविषयादपोह्याः ॥
तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः ।
असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशन्ति ॥
निशाचराणां तेषां हि ये देवगणमाश्रिताः ।
ते तु तत्सत्वसंसर्गाद् विज्ञेयास्तु तदञ्जनाः ॥
देवग्रहा इति पुनः प्रोच्यन्तेऽशुचयश्च ये ।
देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते च देववत् ॥
( सु० सं०, उ० त० ६०।२१-२४ ) ।

जनकं कर्म कुरुते, तदा स्वकृतापराधोपहतं तमाविशन्ति देवादयः [1]मनोवहांश्च मार्गान् बुद्धेर्निवासञ्च हृदयं संदूष्य कुर्वन्त्युन्मत्तम्। उन्मादयिष्यताञ्च देवादीनां कोऽपि विलक्षणोऽलक्षित आवेशो भवति। ते हि तादृशसिद्धिसम्पन्ना भवन्ति, येन परपुरः प्रवेशमर्हन्ति, न च दृश्यन्ते,[2] न च शरीरे किमपि दूषणवैशिष्ट्यमुद्भावयन्ति। यद्वाऽनाविश्यापि देहमुन्मत्तं विदधति। तथा च चरकाचार्यः—

'अवलोकयन्तो देवाः जनयन्त्युन्मत्तम्, गुरुवृद्धसिद्धमहर्षयोऽभिशपन्तः, पितरो धर्षयन्तः, स्पृशन्तो यक्षाः, राक्षसास्त्वामगन्धमाघ्रापयन्तः, पिशाचाः पुनरधिरुह्य वाह्यन्तः' ( च० नि०, ७।१५ )।

एवञ्च धी-धृति-स्मृतिविभ्रष्टश्चलचित्तोऽधीरोऽनवस्थित इतस्ततो भ्रमत्यचिन्तितप्रयोजनः, भ्रष्टसारथी रथ इव चाज्ञातगतिरजस्रं परिसर्पति।

**असाध्यलक्षणम्**—[3]भूतोन्मादे त्रिविधमेव प्रयोजनमुद्दिश्य देवादय उन्मादयन्ति। तच्च हिंसा, रतिः अभ्यर्चनं चेति। हिंसार्थिना ग्रहेण गृहीतो जनः स्वप्राणत्यागार्थं विविधाश्चेष्टा आचरति। कदाचिद् अग्निं प्रवेष्टुं यतते, अप्सु निमज्जितुं, श्वभ्रे वाऽऽत्मानं पातयितुं प्रयतते, शस्त्रकाष्ठादिभिर्वाऽऽत्मानं हन्ति, अन्यच्च कर्मप्राणविसर्जनार्थमासेवते। एतादृश लक्षणलक्षितमसाध्यं विद्यात्।

[4]यश्चाधोमुखः, ऊर्ध्वमुखी वा शेते तिष्ठति वा, यश्च क्षीणबलः, क्षीणमांसः क्षीणोजो वा सततमनिद्रो भवति, सोऽप्यसाध्यः, [5]यश्चोभावपि करावुद्यम्य क्रोधावेशादात्मानं ताडयति, अन्यं वा हस्ताभ्यां ताडयति, सोऽसाध्यः। यश्च अश्रुपूर्णलोचनः, उपस्थप्रवृत्तशोणितः, क्षतजिह्वः, नासास्रावी, सततं ताड्यमानकरो विकूजन् विवर्णस्तृषापरिगतो दुर्गन्धो हिंसार्थी च भवेत्, सोऽप्यसाध्यो ज्ञेयः। तथा हि हिंसार्थिना गृहीतोऽसाध्य एव भवति, तस्मात्तं परिवर्जयेत्। अन्यच्च—

यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स च हेतुभिः स्यात्।
सर्वाणि रूपाणि बिभर्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः॥
(मा० नि०, उ० नि०)

[6]**विगतोन्मादलक्षणम्**—स्वरवर्णसम्पत्, निद्रालाभो यथाकालं, वैकारिकाणां स्वप्नानामदर्शनम्, यथाकाले सुखेन प्रतिबोधनम्, रुचिराहारकाले, भोज्यवस्तु-

---

१. 'अतीन्द्रियाणां पुनः सत्वादीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतञ्च।' ( च० वि० ५ )।

२. अदूषयन्तः पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः।
विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्यकान्तौ॥ (च०चि०,९।१८)

३. च० चि० –९।१७।

४. मा० नि०—उ० नि०।

५. च० चि०—९।२९।

६. च० वि०—८।८९ तथा च० चि०—९।१०४।

त्वभिलाषः, शब्दस्पर्शरूपरसगन्धानां याथार्थ्येनावगमनम्, सर्वतोभावेन बुद्धत्यात्ममनसामव्यापत्तिर्वातमूत्रपुरीषरेतसां यथावत् प्रवृत्तिः, आहारस्य सम्यग्जरणम्, मनोबुद्धीन्द्रियशरीरतुष्टिः, धातूनां साम्यत्वञ्चेति । एवञ्च सत्वसारता समुदेति । तथा च सत्वसाराः—

"स्मृतिमन्तो भक्तिमन्तः, कृतज्ञाः, प्राज्ञाः, शुचयो महोत्साहाः, दक्षाः, धीराः, समरविक्रान्तयोधिनः, त्यक्तविषादाः, सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टाः, कल्याणाभिनिवेशिनश्च सत्वसाराः" ( च० वि० ८।११२ ) ।

## अपस्मारः

निरुक्तिः—अपशब्दो गमनार्थः, स्मारः स्मरणम् । अपगतः स्मारो यस्मिन् रोगे सोऽपस्मारः । तथा च—

स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जने ।
अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत्[1] ॥

अर्थाद्—भूतार्थज्ञानापस्मरणात् ( यथार्थज्ञानाननुसन्धानात् ) व्याधिरयमपस्मार इति प्रोक्तः । यतो हि अपस्मरणभावाज्जलाग्न्यादौ प्रपतितुं शक्नोतीति कृत्वाऽन्तकृद्विनाशकृदुक्तः ।

परिचयः—मनोबुद्धि-स्मृतीनां विभ्रमाद् ज्ञानाभावाच्च फेनवमनाङ्गविक्षेपादिविविधबीभत्सचेष्टापूर्वकं मूर्च्छामापद्यते जन्तुः । बुद्धिहीनत्वाच्च सर्वथा ज्ञानशून्यो भवति । मूर्च्छाऽव्यवहितप्राक्क्षणावच्छेदेन भाविमूर्च्छाज्ञानोदयो भवति तस्मै, किन्तु तात्कालिकज्ञानसहकृतैव मूर्च्छा तथा पदमादधाति, यथा रोगी नैवात्मानं नियन्त्रयितुमकस्मात्पतनाद्वाऽवरोद्धुं प्रभवति ।

एवञ्च हस्तपादादिविक्षेपपूर्वकं सनेत्रभ्रूव्युदासमपस्मारो भवति । तथा च—

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः ।
तमः प्रवेशं बीभत्सचेष्टं धीसत्वसंप्लवात्[2] ॥

अयञ्च मानसामयः । यस्मिन्नुद्भूते रुग्णोऽपस्मरति । तस्मिंश्च काले स न किमपि वेत्ति, न च कामपि क्रियामाचरति । अयं हि आवस्थिको व्याधिः, किञ्चित्कालं स्थित्वा पुनः निवर्तते । रोगापगमनानन्तरं रुग्णो जनः सामान्यस्थितौ भवति । प्रायश्चायं नियतकालिको भवति ।

### चतसृष्ववस्थासु रोगोऽयं विभक्तुमर्हः—

( १ ) वेगारम्भात्प्रागेव वेगारम्भो भवितेति रुग्णोऽवबुद्ध्यते । कश्चिज् ज्योतींषीव पश्यति, कश्चिदकल्पितान् शब्दान् शृणोति, कश्चिदङ्गुष्ठादीनि कम्पयति । कश्चित् शिरोऽवघूर्णयते ।

---

१. सु० सं०—उ० त० ६१।३ ।
२. च० चि०—१०।३ ।

(२) क्षणिकमेव वेगारम्भज्ञानं जायते, मुष्टिबन्धनं भवति। पादौ प्रसरतः दण्डाकारौ कठिनौ च भवतः। श्वासकष्टो भवति। नेत्रे च स्तब्धे भवतः।

(३) शरीरमखिलमुत्क्षिपतीव। कदाचिच्च दशनमध्यगता रसना क्षता भवति, मुखात् फेनोद्गिरणं भवति, नेत्रे बहिरुन्नते भवतः। हस्तौ पादौ च पटपटायेते। कदाचिच्च मूत्रस्रावो भवति, पुरीषागमो वा भवति। रोगी शीघ्रमवबुद्ध्यते मूर्च्छितो वा भवति।

(४) कश्चिन्मूर्च्छित एव निद्रावशगो भवति। जागरणानन्तरञ्च शिरोभ्रमं पीडां वाऽनुभवति। दौर्बल्यञ्च प्रतीयते।

इदञ्च दृश्यते यत्पुनः पुनरपस्मारवेगो जायते। तीव्रश्च ज्वरः समुपजायते। यदि चेत् क्रमिकरूपेण कतिचन वेगाः समुत्पद्येयुस्तदा रुग्णस्य जीवनं संशयापन्नं भवति। इयञ्च दशा भयावहा भवति।

अयं व्याधिश्चिरकालमवतिष्ठते। कदाचिच्च यावज्जीवनं तिष्ठति। रोगकालवर्धनसमनन्तरमेव धियो जाड्यमपि वर्धते। स्मृतिर्नश्यति, ज्ञानमप्यवरुध्यते। [1]विभिन्नेषु रोगिषु आक्रमणकालस्य वैविध्यमवलोक्यते। कश्चिद्धवलचन्द्रिकायां प्रायेणापस्मरति, कश्चित्तमिस्रायां, कश्चिद्दिवा, कश्चिद्रात्रौ, कश्चिन्नदीतटे कश्चिच्चाग्निसमीपेऽपस्मरति।

**निदानम्—**

मिथ्यातियोगेन्द्रियार्थकर्मणामभिसेवनात्।
विरुद्धमलिनाहारविहारकुपितैर्मलैः॥
वेगनिग्रहशीलानामहिताशुचिभोजिनाम्।
रजस्तमोभिभूतानां गच्छतां च रजस्वलाम्॥
तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम्।
चेतस्यभिहते पुंसामपस्मारोऽभिजायते[2]॥

**अथ डल्हणः**—"अपस्मारोत्पत्तिकारणस्य चित्ताभिघातस्य हेतूनाहमिथ्येत्यादि। अत्रायोगो लुप्तो द्रष्टव्यः, तेन मिथ्यायोगायोगातियोगैः, केचित् मिथ्यादियोगेति पठित्वा आदिशब्देनैव अतियोगमयोगं च गृह्णन्ति। इन्द्रियार्थानां स्पर्शादीनां, कर्मणां कायवाङ्मानसानाम्। अथ शब्दादीनां मिथ्यायोगादयः कथयन्ते—तत्र परुषेष्टविनाशादिश्रवणं मिथ्यायोगः, पटहाद्यतिशब्दश्रवणमतियोगः सर्वशोऽश्रवण-

---

१. 'पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः।
अपस्माराय कुर्वन्ति वेगं किञ्चिदथान्तरम्॥ (माधव० अप० नि०)
देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित्।
शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयाः॥' (सुश्रुत० उत्तर० ६१।२०)

२. सुश्रुत० उत्तर० ६१।४-६।

मयोगः, तथा शीतादिस्पर्शानां वैपरीत्येनोपसेवनं मिथ्यायोगः, अतिशीतादीनामति-सेवनमतियोगः, सर्वशोऽसेवनमयोग अतिविकृतादिदर्शनं:, अतितेजसामतिदर्शनमति-योगः, सर्वथाऽनवलोकनमयोगः, तथाऽयोग्यरसानामादानं मिथ्यायोगः, रसाना-मत्यादानम् अतियोगः, रसानां सर्वथाऽनादानमयोगः, पूत्याद्याघ्राणं मिथ्यायोगः, अतितीक्ष्णादिगन्धानामत्याघ्राणमतियोगः, सर्वशोऽघ्राणमयोगः, तथा कायिक-कर्मणो व्यायामादेर्निषिद्धकालादिषु सेवनं मिथ्यायोगः, अतिसेवनमतियोगः, सर्वशोऽनुपसेवनमयोगः, तथा वाचनिककर्मणः परुषानृतादिभाषणं मिथ्यायोगः, अतिवाचनादिकमतियोगः, सर्वथा मौनमयोगः, तथा मानसकर्मणः शोकादिचिन्तनं मिथ्यायोगः, अतिमात्रचिन्तनादिकमतियोगः, सर्वथाऽचिन्तनमयोगः। विरुद्धं हिताहितीयोक्तम्[1]। मलिनशब्द आहारविहाराभ्यां संबध्यते। तत्र मलिनाहारः पूतिद्विष्टामेध्यपर्युषिताः, मलिनो विहारः स्मार्तवचनाद् ज्ञातव्य[2]:, कुपितैर्म-लैरित्यत्र कुपिताः मला वातपित्तश्लेष्माणो रजस्तमसी च, देहमलिनीकरणा-दुच्यन्ते। वेगेत्यादि। वेगा विण्मूत्रादीनां, तेषां वेगानां निग्रहो धारणं, तत्र शीला वेगनिग्रहरताः।[3] अहिताशुचिभोजिनामिति यद्यप्येषोऽर्थो विरुद्धमलिनाहारादि-त्यनेनैव प्राप्तः, तथाप्यत्यर्थहेतुत्वापादनार्थं पुनः पाठः। रजस्वलां दृष्टार्तवाम्। एभिर्हेतुभिश्चित्त[4] उपहते दूषिते सति अपस्मारोऽभिजायते।"

पूर्वरूपम्[5]—अक्षिभ्रूव्युदासः, अविद्यमानशब्दश्रवणं, लालाप्रसेकः, सिङ्-घाणकप्रस्रवणम्, अरोचकोऽनन्नाभिलाषः, हृद्ग्रहः, कुक्षेराटोपः, दौर्बल्यम्, अस्थिभेदः, अङ्गमर्दः, मूर्च्छा, तमोदर्शनम्, भ्रमः, स्वप्ने च नर्तनवेपथुव्यथनव्यधन-प्रपतनादीनां दर्शनम्, निद्रानाशः, प्रमोहः वैचित्यं हृत्कम्पश्च जायते। तथा च वाग्भटः—

[6]रूपमुत्पित्स्यमानेऽस्मिन् हृत्कम्पः शून्यता भ्रमः।
तमसो दर्शनं ध्यानं भ्रूव्युदासोऽक्षिवैकृतम्॥
अशब्दश्रवणं स्वेदो लालासिङ्घाणकस्रुतिः।
अविपाकोऽरुचिर्मूर्च्छा कुक्ष्याटोपो बलक्षयः॥
निद्रानाशोऽङ्गमर्दस्तृट् स्वप्ने गानं सनर्तनम्।
पानं मद्यस्य तैलस्य तयोरिव च मेहनम्॥

---

१. सुश्रुत०–सू २०।

२. यातयामं गतरसं पूति पर्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥ (गीता–१७।१०)

३. 'कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥ (गीता–१७।९।)

४. चरक० नि० अ० ८ द्रष्टव्यः।

५. चरक० नि० ९ तथा सुश्रुत० उ० ६१ द्रष्टव्यौ।

६. अ० हृ० उ० ७।६-८।

[1]**रूपम्**—सत्त्वगुणह्रासः, बुद्धिविभ्रंशः, स्मृतिभ्रंशः, करपादविक्षेपः, वक्रभ्रूनेत्रता, विवृताक्षत्वं, फेनोद्गिरणं, वमनम्, अङ्गत्रोटनम्, मूर्च्छा, अकस्माद् भूमिपतनं गात्राणां स्फुरणम्, लालास्रावः, जिह्मजिह्वता च भवति। तमःप्रवेश इवाज्ञानवान्, आवस्थिकं च (कादाचित्कं) मूर्च्छनम्। क्वचिन्मूत्रस्रावो पुरीषागमश्च जायते अङ्गभङ्गः, जिह्वाक्षतो वा संभावितः, वेगापगमे च सुप्तोत्थित इव प्रतिबुद्ध्यते।

**सम्प्राप्तिः**—राजसतमसाहारविहारोद्भ्रान्तरजस्तमोभ्यामुपहतचेतसामुद्भ्रान्तबहुदोषाणामल्पसत्त्वानां कामक्रोधभयलोभशोकहर्षचिन्तोद्वेगादिसंप्लवविभ्रान्तचेतसां क्षीणदेहानां संज्ञावहानि स्रोतांसि चेतनाधिष्ठानञ्च हृदयमुपसृप्य प्रकुपिता दोषा हृदयं पीडयन्ति तथेन्द्रियायतनानि समभिव्याप्य संज्ञामाकुलतां नयन्ति,[2] तदाऽकस्मादपस्मारवेगाक्रान्तो भवति। तथा चाह वाग्भटः—

> 'स्मृत्यपायो ह्यपस्मारः स धीसत्त्वादिसम्प्लवात्।
> जायतेऽभिहते चित्ते चिन्ताशोकभयादिभिः॥
> उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः।
> हृते सत्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च॥
> तमो विशन्मूढमतिर्बीभत्साः कुरुते क्रियाः।
> दन्तान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन्॥
> पश्यन्नसन्ति रूपाणि प्रस्खलन्पतति क्षितौ।
> विजिह्माक्षिभ्रुवा दोषवेगेऽतीते विबुद्ध्यते[3]॥'

**अपस्मारस्य प्रत्यात्मलक्षणम्**—'अपस्मारं पुनः स्मृति-बुद्धिसत्वसंप्लवाद्बीभत्सचेष्टमावस्थिकं तमः प्रवेशमाचक्षते[4]॥'

[5]वातादिभेदेनापस्मारलक्षणं यथास्वदोषानुविद्धं विद्यात्। सर्वेष्वपस्मारेषु[6] कदाचित्कत्वेन भूताद्यागन्तुसम्बन्धो भवत्येव। दोषजलक्षणविलक्षणलक्षणानि दृष्ट्वाऽऽगन्तोरनुबन्धं विजानीयात्। यथास्वदोषलिङ्गेभ्यो लिङ्गाधिक्यदर्शनेनागन्तुरनुबन्धोऽस्तीति विज्ञेयम्।

**असाध्यलक्षणम्**—

> सर्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः।
> अपस्मारः स चासाध्यो यः क्षीणस्यानवश्चयः॥

---

१. सु० उ० ६१ तथा च० चि० ९।
२. चरक० नि०–८।४।
३. अ० हृ० उ०–७।१-४।
४. चरक० नि०–८।५।
५. चरक० नि०–८।८-११
६. तेषामागन्तुरनुबन्धो भवत्येव कदाचित् तमुत्तरकालं (चिकित्सते) समुपदेक्ष्यामः। यस्य विशेषविज्ञानं यथोक्तलिङ्गैर्लिङ्गाधिक्यमदोषलिङ्गानुरूपं किञ्चित्। (च नि०, ८।१२–१३)।

प्रतिस्फुरन्तं बहुशः क्षीणं प्रचलितभ्रुवम् ।
नेत्राभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत्[1] ।।

अतत्त्वाभिनिवेशः—यदा हि पुरुषोऽतिमात्रं कट्वम्ललवणरुक्षविदाह्युष्णतीक्ष्णमाहारं, यामातीतं रसहीनं पूतिद्विष्टामेध्यपर्युषितंवाऽऽहारजातमश्नाति, अधारणीयान् वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमिरेतसां प्राप्तान् वेगानवरुणद्धि, शीतमुष्णं वाऽतिमात्रं सेवते, यक्षरक्षोप्रभृतीनि, प्रेतान् भूतगणान् वा यजते, कामरागरोषेर्ष्याभयशोकचिन्तोद्वेगादिर्भृ शमाक्रम्यते, तदा रजस्तमसी वातादयश्च दोषाः चेतनास्थानं हृदयं मस्तिष्कं मनोवहानि च स्रोतांसि संदूषयन्ति । वृद्धाभ्याञ्च रजस्तमोभ्यां बुद्धिर्मनश्च संप्लुतं संजायते, हृदयञ्च व्याकुलतां व्रजति, तदाऽल्पचेतनो मूढो जनः समस्तेष्वपि वस्तुषु, क्रियासु च समस्तासु बुद्धिविभ्रमाक्रान्तो भवति, भ्रश्यन्ते च धीधृतिस्मृतयस्तदा हि प्रज्ञापराधान्न[2] वेत्ति सुखं दुःखं हिताहितं नित्यानित्यं याथार्थ्येन, अपि तु दुःखमेव सुखम्, अहितमेव हितम्, हितम् अहितम्, नित्यमनित्यम्, अनित्यञ्च नित्यमवगच्छति । अयमेव व्याधिरतत्त्वाच्चाभिनिवेश इत्याख्यातः । अर्थात् अतद्वति तत्प्रकारकानुभवशीलो भवतीति यावत् । अयमेव चरके महागद इत्युक्तः ।

अन्यत्र चायं रोगः 'गदोद्वेग' इति संज्ञितः ।
(विना व्याधिं व्याधिशङ्का गदोद्वेग इतीरितः ) आयु० विज्ञानम् ।।

## योषापस्मारः

अयं व्याधिरपस्मारप्रकृतिको भवति, स्त्रीणाञ्च बाहुल्येन प्रजायते । अत एव 'योषापस्मारः' इत्याख्यां भजते । रोगेऽस्मिन् विचित्राणि कल्पनातीतानि चिह्नानि दृश्यन्ते । बुद्धिविभ्रमः, अकस्माद्धास्यं, क्रन्दनमुच्चैः क्रोशः औद्धत्यञ्च परिलक्ष्यते । पक्वामाशयजा वातवेदनाऽऽकण्ठं प्रधावति । यदा कदाऽचैतन्यमपि प्रभवति ।

---

१. च० चि०–१० ।

२. धीधृतिस्मृतिविभ्रष्टः कर्म यत्कुरुतेऽशुभम् ।
प्रज्ञापराधं जानीयात् सर्वदोषप्रकोपणम् ।।
(च० शा० १।१०२) ।

मलिनाहारशीलस्य वेगान् प्राप्तान् निगृह्णतः ।
शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः ।।
हृदयं समुपाश्रित्य मनोबुद्धिवहाः सिरा ।
दोषाः संदुष्य तिष्ठन्ति रजोमोहावृतात्मनः ।।
रजस्तमोभ्यां वृद्धाभ्यां बुद्धौ मनसि चावृते ।
हृदये व्याकुले दोषैरथ मूढोऽल्पचेतनः ।।
विषमां कुरुते बुद्धिं नित्यानित्ये हिताहिते ।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम् ।।
(च० चि०, १०।५७-६०) ।

निदानम्—व्याधेश्चास्य परीक्षणविधौ सर्वतोभावेन प्रतिपत्तिज्ञानमपेक्षितम्। त्रिविधरोगविशेषज्ञानोपाये पूर्वमाप्तोपदेशाज्ज्ञानं प्रशस्यते। तथा हि– रोगस्य निदाने आप्तोपदेशगम्यभावानधिगच्छेत् एवं प्रकोपणमेवंयोनिमेवमुत्थान[1]-मेवमात्मानमेवं वेदनमेवं संस्थानमेवमुपद्रवमिति। ततोऽ[2]नन्तरमेव प्रतीकार-सौष्ठवमुत्पद्यते।

प्रश्नपरीक्षा—आतुर[3]परिज्ञानहेतोश्च--कस्मिन्भूमिभागे जन्म, तस्मिंश्च भूमिदेशे मनुष्याणां किमाहारजातं, किं विहारजातं, किमाचारजामेवंविधं बलमेवंविधं सत्वमेवंविधं सात्म्यमेवंविधाः व्याधयः प्रायोभाविनः, तत्र चेदं वस्तु हितमहितामिदमित्यादि परीक्षेत।

आदौ रोगीप्रष्टव्यो भवति। किं दुःखमस्ति? कीदृशी वेदनाऽनुभूयते? क्व किं विधा वेदना जायते? तस्य च कथनं सावधानतयाऽऽलेख्यम्। रोगी च तथाऽऽश्वासयितव्यो यथा न सः भावावेशवशात् स्वदुःखवर्णनमतिरञ्जयेत्। यदा च रोगी स्ववेदनां स्वचिन्ताकारणं वा व्यनक्ति, तदा हि आश्वास्य तस्योत्साह-वर्धनं विदध्यात्, येन च व्याधितः स्ववक्तव्यदाने साधु प्रभवेत्।

रोगस्येतिहासः, लक्षणं, रोगारम्भकालश्च प्रष्टव्यो भवति। रोगिणः वास्तविकी स्थितिः कीदृशी? क्व प्रसूतिः क्व भरणं? क्व श्वसुरालयः? रोग-स्यास्य किं लक्षणं कदाऽऽरब्धम्? पित्रोरपीतिहासो ज्ञेयः? बाल्यकालीनव्याधि-विषयकज्ञानश्चोपार्जनीयम्। किं केनापि हेतुना भीता? यदि चेतसा छात्रा तदा विद्यालयीयस्थितेरपि परिचयो विधेयः। अध्यापकानां कीदृशो व्यवहारः? तस्याश्च प्रतिभा परीक्षणीया? वचनशक्तिश्च ज्ञेया[4]?

अनुमानतश्चैतान् भावान् जानीयात्--मोहमविज्ञानेन, शोकं दैन्येन, भयं विषादेन, द्वेषं प्रतिषेधेन, वयोभक्तिसात्म्यव्याधिसमुत्थानानि कालदेशोपशयवेदना-विशेषेण परिज्ञातुं प्रभवेत्। द्विष्टेष्टसुखदुःखानि चातुरपरिप्रश्नैव[5] विद्यात्।

---

१. च० वि०–४।८।

२. रोगमादौपरीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्मभिषक्पश्चाज्ज्ञानपूर्वं समाचारेत्॥

३. च० वि०–८।९३ अथ च—प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्मम्यमातङ्कस-मुत्पत्तिं वेदनासमुच्छ्रायबलं दीप्ताग्नितां वातमूत्रपुरीषाणां प्रवृत्यप्रवृत्तीकालप्रकर्षादींश्च विशेषान्……। (सु० सू० अ० १०)।

४. च० वि०— ४।१०।

५. आप्ततश्चोपदेशेन प्रत्यक्षकरणेन च।
अनुमानेन च व्याधीन् सम्यग् विद्याद्विचक्षणः॥
ज्ञानबुद्धिप्रदीपेन यो नाविशति तत्त्ववित्।
आतुरस्यान्तरात्मानं न स रोगांश्चिकित्सति॥
(च० वि, ४।१२, १४)।

अस्मिश्च रोगे गतिक्षेत्रस्य सांवेदनिकक्षेत्रस्य च मानसक्षेत्रेण सह सम्बन्धो नश्यति, अतश्च विलक्षणानि नानाप्रकाराण्यमितानि लक्षणान्युद्भवन्ति । रोगिण्याः मनसि रुग्णस्य वा चेतसि यस्य कस्यापि रोगस्य स्मृतिर्ध्यानं वा प्रभवति, सा स्त्री तेनैव गदेन समाक्रान्ता जायते । पुरुषेऽपि रोगिणो यथास्मरणं यथाध्यानं रोगोत्पत्तिर्दृश्यते तत्तद्दृष्ट्या । वस्तुतस्तु भ्रान्तस्य मनसो विभ्रमजालमेव रोगरूपतां व्रजति, नैव वास्तविकरोगस्थितिर्भवति तत्र । ईदृशोऽसौ गदो 'योषापस्मार' इति कथ्यते । केचन भिषग्विदोऽस्य रोगस्यापतन्त्रके गणनां कुर्वते ।

अपतन्त्रकश्च[1] वातव्याधौ परिगण्यते । वस्तुतस्त्वयं मानसिकरोगः । अस्य च मस्तिष्के प्रभावो भवति । यदाऽनेन रोगेणाक्रान्तो जनश्चेतनाशून्यो भवति,

---

१. (क) क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ।
पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीडयन् ॥
धनुर्वन्नमयेद् गात्राण्याक्षिपेन्मोहयेत्तथा ।
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलकः ॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ।
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ॥
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ।
वायुना दारुणं प्राहुरेके तमपतानकम् ॥
( चरक० सिद्धि० अ० ९।१२।१५ )

(ख) वायुरूर्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः ।
शङ्खौ च पीडयत्यङ्गान्याक्षिपेन्नमयेच्च सः ॥
निमीलिताक्षो निश्चेष्टः स्तब्धाक्षो वाऽपि कूजति ।
निरुच्छ्वासोऽथवा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः ॥
स्वस्थः स्याद्धृदये मुक्ते ह्यावृते तु प्रमुह्यति ।
कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥
( सुश्रुत० निदान० अ०१।६४-६६ )

(ग) अधः प्रतिहतो वायुर्व्रजत्यूर्ध्वं हृदाश्रयाः ॥
नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् ।
आक्षिपेत् परितो गत्रं धनुर्वच्चास्य नामयेत् ॥
कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक् ततः ।
कपोत ईव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ॥
स एव चापतानाऽऽख्यो मुक्ते तु मरुता हृदि ।
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥
(अष्टाङ्गहृ० निदान० १५।१७-२० )

ततश्च प्रागेव सोऽनुभवति नाभिप्रदेशत उच्चैरुत्तिष्ठमानं वायुप्रसरम्। हृदये, शिरसि, शङ्खप्रदेशे च वातज आघातः प्रतीयते। यदा चात्र रोगे प्रकोपणैः स्वैरतिक्रुद्धो भवति वायुस्तदा रोगाक्रमणे गात्राणि धनुर्वन्नमयेद् मोहयेदाक्षिपेच्च। इन्द्रियाणि चासमर्थानि भवन्ति स्वस्वव्यापारेषु।

अपतन्त्रकाक्रान्तश्च निमीलिताक्षो निश्चेष्टो निश्चलनेत्रः कपोत इव कूजति, नष्टचेतश्च कृच्छ्रादुच्छ्वसिति, वातावृते हृदये प्रमुह्यति, वातवेगमुक्ते च हृदये स्वस्थतां याति। चरकेण, वाग्भटेन, माधवकरेण च अपतन्त्रकाऽपतानकयोरभेदोऽङ्गीकृतः। अयमपतन्त्रकः स्त्रियं पुरुषं वा समानरूपेण समाक्रामति, स्त्रीषु च बाहुल्येनोपजायते। अयमेव योषापस्मारापरपर्यायेण निगद्यते। आयुर्वेद[1]विज्ञानाभिधे ग्रन्थे योषापस्माररोगस्य लक्षणानि पृथक्त्वेन वर्णितानि सन्ति। तत्र चित्तविक्षिप्तता, धीविभ्रमः, हास्यं, क्रन्दनमुच्चैः, कण्ठामाशयवेदना, मूर्च्छा, उदरादारभ्य वर्तुलाकृतिवायुप्रसर आकण्ठं धावति यद्वा भ्रान्त्या प्रतीयतेऽलीकवर्तुलोत्थानं वातस्य लक्षणान्येतानि मनोविकारानुस्यूतानि भवन्ति।

अपतन्त्रककारकश्च वायुः रूक्षशीताल्पलघ्वन्नतिप्रजागररक्तादिधातुक्षयपुरीषाधोवायुरजःकृच्छ्रावरोधादिभिरावरणैश्च कुप्यति, कामशोकभयक्रधादिभिश्च वायुप्रकोपो भवति। पुंसि स्त्रियां वा यदाऽतिकामेच्छा स्यात्, ब्रह्मचर्याग्रहतया यदि पुमान् स्त्री वा कामवेगसंकल्पं हठान्निगृह्णीयात्, अथवा स्त्री-पुरुषदोषादतृप्तकामा स्यात्, तदा कामोद्रेकाद् वातसंस्था क्षुब्धा भवेत्तत्परिणतिश्चापतन्त्रकप्रादुर्भावरूपेणाभिव्यज्यते।

यदि चेत्पुरुषः कामेच्छापूर्तिमलब्ध्वा कामातुरो भवति, तदा तस्य शुक्रच्युतिर्यथाकथञ्चन जायते, तथा च कामोद्रेकजः क्षोभः शान्तिमेति; परन्तु स्त्रीषु नैव तादृशी काचन व्यवस्थाऽस्ति, अतश्च स्त्रिय आक्रान्ता भवन्ति मनोविकारनिकरैर-

---

१. वैचित्यं बुद्धिविभ्रान्तिर्हास्यं क्रन्दनमेव च।
उच्चैः क्रोधः प्रलपनं ज्योतिर्द्वेषस्तथा भ्रमः॥
औद्धत्यं श्वासकृच्छ्रञ्च कण्ठामाशयवेदना।
प्रावल्यं स्पर्शशक्तेश्च क्वचिदङ्गे सदा व्यथा॥
अलीकवर्तुलोत्थानमाकण्ठमुदरादपि।
सदल्पबुद्धिर्मूर्च्छा च व्याधावस्मिन् प्रजायते॥
(आयुर्वेदविज्ञानम्)

पतन्त्रकेण वा। स्वभावतो हि स्त्रियो भवन्ति शोककलहक्रोधचिन्तापरवशा आभरणाद्यप्राप्तिजन्यखेदविह्वलाश्च, ताश्च बिभ्यति पत्युः, श्वश्रूतः, ननान्द्यश्च, भूतावेशभयमपि तासु सहजं भवति, वातश्च मनोविकारैरेतैः पूर्वोक्तैर्वा हेतुभिः प्रकुप्य सञ्जनयति सोपद्रवममुमपतन्त्रकम्।

रक्ताल्पतादोषादजीर्णाद् विबन्धाज्जरायुविकृतेः रजः क्षयात् परिजनकठोरव्यवहाराद् दौर्बल्यात्पत्युरस्नेहाद् वैधव्यादतिशोकाभिभवाच्च गद एष आक्रामति। एवञ्च गदोऽसौ न नितरां मानसः, न वा केवलं शारीरः। अस्य च व्याधेरुपचारे शरीरमानसोभयोपचारोपेक्षितः। कौटुम्बिकी सामाजिकी च व्यवहारपद्धतिः सुतरां परीक्षणीया। स्त्रीगतकामेच्छा–रजःप्रभृतीनाञ्चाध्ययनमावश्यकम्।

अवरसत्त्वाश्च स्त्रियो मलिनाहारविहारदोषाद्वेगावरोधाच्छीतरूक्षलघुगुणयुक्तद्रव्यातिसेवनाद् वातविकारग्रस्ता भवन्ति, मनसि बुद्धौ हृदये च क्षोभमनुभवन्ति। ततश्च मस्तिष्कदोषाद्विविधमिथ्याकल्पनाप्रसूताभिराधिभिर्व्याधिभिश्चाक्राम्यन्ते। शारीरिकश्रमाधिक्यान्मानसिकश्रमाधिक्याद्वा नैराश्याद्वा, भयाद्वा, शोकाद्वातिचिन्तनाद्वा, प्रियतमवियोगाद्वा योषापस्मारः समाक्रामति। रजस्तमोभ्यामुपहतचित्ता अल्पचेतनास्ता भवन्ति भाजनानि विविधानां विषमाभिनिवेशजानामामयानाम्। प्रज्ञा चापराध्यति हिताहितपदार्थनिर्णयं तासामबलानाम्। प्रायशः रजसो यावत्कालं प्रवृत्तिर्भवति ( प्रायः द्वादशवर्षादारभ्य पञ्चाशद्वर्षपर्यन्तम् ) तावानेव कालोऽस्य रोगस्योद्भवाय प्रभवति[1]।

'संक्षेपतः क्रियायोगो निदानपरिवर्जनम्' इति चिकित्सासूत्रमत्र सावधानतया स्मरणीयं स्याद्यतो यैर्निदानैरेष गदः प्रजायते, तेषु निदानेषु विरतेषु गदोऽयं शान्तिं प्रयाति। नायं रोगो भवति मारकः, अपि तु रजोनिवृत्तिकाले स्वयमेव

---

१. रक्तक्षयाद्वा बहुशोऽप्यजीर्णादुद्वेगतः कोष्ठविबन्धतो वा।
शोकाच्च भङ्गान्मनसो जरायौ विकारतोऽथो रजसो विनाशात्॥
कुटुम्बिनां निष्ठुरभावतो वा दौर्बल्यतोऽपि प्रकृतेः कदाचित्।
पत्युश्च निःस्नेहतया तरुण्या वैधव्यशोकादथवा विशेषात्॥
योषित्सु रोगो यत एष कष्टदः प्रजायते मानसदेहतापनः।
चिह्नैरपस्मारसमैः समन्वितः सुदारुणो वै भिषगुत्तमैः सदा॥
प्रकाशितो भूमितले तु योषाऽपस्मारनाम्ना बहुशो गदोऽसौ॥
यावत्प्रवृत्ती रजसः स्त्रियां स्यात्तावद्गदस्यास्य मतो हि कालः।
(मा. नि. परिशिष्टम्)

प्रायः शाम्यति । रोगस्यास्य विचित्राणि रूपाणि रोगिण्याः मनोदशामनुसृत्य प्रादुर्भवन्ति । यच्च रोगमनुध्यायति यस्याश्च रोगिण्या लक्षणानि सा स्मरति, सततमनुध्यायति, चिन्तयति वा, तानि च लक्षणानि सञ्जनयति स्वशरीरे । चित्तावसादः क्वचिद् रोदनं क्वचिद्धास्यं क्वचन च मूर्च्छादिकं भवति[१] ।

रोगिणी दाम्पत्यजीवनविषये प्रष्टव्या स्यात् ? विवाहिताऽथवाऽविवाहिता ? विवाहिता चेदपत्यसंख्या प्रष्टव्या । यदि चेत्कश्चनार्भको मृतो भवेत्, तदा केन रोगेण मृत इति ज्ञेयम् । पतिस्वास्थ्यविषये दाम्पत्यसम्बन्धविषये च सा प्रष्टव्या । किं परस्परं माधुर्यं, स्निग्धं प्रेम, मृदुमधुरालापवार्ताप्रसङ्गेऽस्ति न वा ? पत्युश्चारित्र्यमाचारः पारिवारिकसम्बन्धश्च कीदृश इति जिज्ञास्यमस्ति । मासिकधर्मः किमु स्वाभाविकः विकृतो वा ? रजःकृच्छ्रता, बाधकशूलमथवाऽन्यव्यापद् विद्यते न वा ? गर्भपातः स्रावो वा जातः ?

वर्तमानरोगजन्मनः प्राक् कीदृशी स्वास्थ्यदशाऽऽसीत् ? किं केनापि रोगेण चिरमचिरं वाऽऽक्रान्ता आसीत्, तदा कानि लक्षणान्यासन् कियत्कालमवतिष्ठमानान्यासन् तानि लक्षणानि ? यदि चेन्मानसामयः कश्चन प्राक्तन आसीत्तदा सावधानतया तत्सम्बन्धिनी वार्ता विधेया भवति, येन तत्कारणलक्षणादिकं समग्ररूपेणावगतं स्यात् ।

कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था वयोऽभिधाऽवश्यमेव ज्ञातव्या । परिहीयमानधात्विन्द्रियबलपराक्रमग्रहणधारणस्मरणा च स्त्री स्वल्पेनाप्यपचारेण समाक्रम्यते योषापस्मारसहचरैश्चिह्नैः ।

---

१. चिह्नान्यनेकानि विचित्ररूपाण्यपि प्रजायन्त इहेत्यवेहि ।
ध्यानं भवेद्यस्य गदस्य यत्र स्यात्तत्र तस्याक्रमणं विशेषात् ॥
किं वा क्वचिद् रोगिणि यानि चिह्नान्याकर्णितान्यप्यवलोकितानि ।
सर्वाणि तानि स्युरिहापि योषाऽपस्मारसंज्ञे हि महागदे वै ॥
तथापि चिह्नानि विशेषतोऽस्मिन् स्युर्यानि दृष्टान्यखिलानि तानि ।
विविच्य सौकर्यकृते चिकित्साविधावहं वच्मि भिषग्जनानाम् ॥
वैचित्यमाक्रन्दनरोदने च भ्रान्तिः प्रलापो मतिविभ्रमश्च ।
द्वेषः सदा ज्योतिषि चोद्धता स्यादाक्रोश उच्चैर्हसनं च कण्ठे ॥
श्लेष्माशये पीडकमङ्गमध्ये सदाऽनुभूतिः क्वचन व्यथायाः ।
स्पर्शोत्थशक्तेरपि वृद्धिभावः श्वासस्य कृच्छ्रत्वमथोदराच्च ॥
यावद्गलं चानृतगुल्मरोगोत्पत्तिस्तु मूर्च्छाऽत्र मतिप्रणाशः ।
योषित्सु जायन्त इमानि चिह्नान्यनारतं प्रायश एव लोके ॥
( मा० नि० परिशिष्टम् )

रोगिण्या आहार-विहाराचारस्वभावादिपरिज्ञानार्थं तद्देशपरीक्षा कर्तव्या। किमनूपजा, जाङ्गलजा साधारणदेशजा वा ? यत अनूपदेशे कफवातप्रधानाः, जाङ्गलदेशेवातपित्तात्मका गदा जायन्ते। साधारणे तु देशे दोषसाम्यं भवति प्रायशश्च तत्रत्यजनाः स्वस्था भवन्ति। जाङ्गले च विरला भवन्ति रोगास्तथा चानूपे सन्ति कतिचन प्रायोभाविनः।

रोगिणी कस्यां जातौ समुत्पन्ना ? जात्यनुसारञ्च व्यवसायावस्था ज्ञातव्या भवति। किं शारीरिकश्रमकार्येऽथवा मानसिककार्ये संलग्ना ? रोगिण्यां मातृ-पितृबन्धुभगिनीप्रभृतिषु चास्य रोगस्येतिहासः प्राप्यते न वा ? यत मातू रजसः पितुर्वा शुक्रस्य दोषादेतादृशाः कुलजा अपि रोगा भवन्ति केचन।

प्रत्यक्षगम्येष्वपि लक्षणनिकरेषु रोगिणी स्वकष्टविषये मुख्यव्यथाख्याप-नार्थं प्रष्टव्या स्यात्। बुद्धिमान्द्यदोषात् काचन न शक्नुवन्ति स्वाभिप्रायमवगमय-यितुमतस्ताः सामान्यप्रश्नोत्थापनक्रमेण वेदनास्वरूपबोधनाय प्रेरणीयाः। प्रधान-व्यथाज्ञानेन च रोगस्य मूलकारणगवेषणा सफला भवति। मुख्यव्यथाकालप्रकर्षश्च ज्ञेयो भवति।

आतङ्कसमुत्पत्तिक्रमश्चावगन्तव्यः। केन च क्रमेण, कया च सोपानपरम्प-रया, कैश्च लक्षणैर्वर्तमानरोगदशा समापन्ना ? एतच्च क्रमज्ञानं निदानोपयोगि चिकित्सोपयोगि च भवति। अस्मिंश्च सन्दर्भे क्रमबद्धरूपेण निदान-पूर्वरूप-रूपोप-शयपरिज्ञानार्थं प्रश्नपरीक्षा कर्तव्या भवति। यथा निदानज्ञानार्थं प्रष्टव्या रोगिणी यत् कैर्हेतुभिर्गदस्याविर्भावः ? तदा च किमात्मकमाहारविहारजातं सेवितं बाहुल्येन ?

पूर्वरूपज्ञानाय चैषा जिज्ञासा कर्तव्या यत् पूर्वतरं कानि लक्षणानि समजा-यन्त ? क्रमशोऽथवा सहसा रोगोत्पत्तिर्जातेति ?

रूपाणि यानि दृश्यमानानि, तेषु प्रत्येकलक्षणजन्मकालज्ञानं विधेयम्। पृथक् पृथक् तेषामारम्भकालोऽवगन्तव्यः। लक्षणानां स्वरूपं कीदृग्वर्तते ? तत्तीव्रं मन्दं वेति ज्ञेयम्। रोगस्य लक्षणानि स्थिराणि गतिमन्ति वा ? रोगाक्रमणविसर्ग-कालयोरन्तरालकालावधिर्ज्ञेयः।

उपशयेन परीक्षणीयं यत्केनोपायेन व्यथा शाम्यति ? सहसाऽथवा क्रमेण रोगशमनं भवति। एवञ्च सत्यावश्यके कतिचन विशिष्टाश्च प्रश्नाः प्रष्टव्या भवन्ति। विशिष्टावधानदानपूर्वकं पारिवारिकमितिवृत्तञ्चाकलनीयम्।

हीनसत्त्वाश्च स्त्रियः स्वल्पानामपि वेदनानामसहा दृश्यन्ते, सदैव च ताः काल्पनिकभयशोकलोभमोहमाना रौद्रद्विष्टबीभत्सविकृतसङ्कथास्वपि मांस-शोणितादीनि चावेक्ष्य विषादवैवर्ण्यमूर्छोन्मादभ्रमप्रपतनानामन्यतममाप्नुवन्ति। योषापस्मारश्च मृदुप्रकृतिहीनसत्त्वजनेषु प्रायोभावी मानसामयः। अत्र रोगेऽस-न्तोऽपि विकारा मनोऽवधारणावशात्प्रतीयन्ते मृषैव। मानसासन्तोषादनेके गदाः

प्रत्युपतिष्ठन्ते, मनसि च परितुष्टे तादृशाश्च विकाराः शमं यान्ति । प्रायशश्च यं यमेव ध्यायति, स्वेच्छानुकूलं विकारमाप्नोति । श्रुतचरं दृष्टचरञ्च लक्षणं मनसा चोद्दिष्टं समुपैति रोगिणीशरीरम् ।

कुटुम्बिनां ध्यानाकर्षणाय सहानुभूतिलाभाय चातिरिच्य प्रकाशयति स्ववेदनाम्। मूर्च्छाऽऽक्षेपापस्माराश्च योषापस्मारसहचारिणो भवन्ति गदाः। क्वचिदङ्गे स्तब्धता काठिन्यं वा समुपजायते । काचन रोगिणी वधिराऽल्पश्रवणा वा जायते । काचन मूकतां व्रजति, स्फुटास्फुटं वा वक्ति । काचन गन्धं न वेत्ति, काचन वा जिह्वाजाड्यमनुभवति ।

वेगागमवेलायां रुग्णा निश्चेतना पतति, कदाचिदपस्मारवदङ्गानि समुत्क्षिपति, हस्तौ पादौ वा प्रक्षिपति, फेनमुद्वमति च । शीतलजलपरिषेकादुग्रगन्धाघ्राणाच्च संज्ञामवाप्नोति, स्वयमेव किञ्चित्कालानन्तरं ससंज्ञा जायते, कदाचिच्च दीर्घकालं यादवपस्मारगृहीता भवति, न च विनोद्योगं संज्ञां लभते । काचन रुग्णाऽजीर्णलक्षणैराक्रान्ता जायतेऽनुभवति चोदरशूलमाध्मानमुद्गारं वमनं वा ?

रोगमीमांसायाञ्च कदाचिदपराध्यति प्रज्ञा । अपस्मारेण सह सापेक्ष्यनिदानमावश्यकं विशेषतश्च पुरुषरोगिणि । रोगेण चानेन चाक्रान्ता स्वस्था सत्यपि भूयोभूय आक्रम्यते योषापस्मारेण । रोगजनककारणनिराकरणे सति रोगशान्तिः स्वयमेव जायते । यदि चेद् रोगी रोगिणी वा सततानुध्यानपराऽत्ररसत्त्वप्राया स्यात्तदा रोगनिर्मूलनाशा क्षीणा भवति । मृदुप्रकृतिका भीतस्वभावा शोकातुरशीलाऽसहनशीला च नारी नैव स्वभावपरिवर्तनक्षमा भवत्यतश्च न सा निश्चयेन स्वस्था भवितुमर्हति । अस्य रोगस्य निराकरणाय ज्ञानबुद्धिप्रदीपेन रोगिणः पूर्णनैदानिकं परीक्षणमावश्यकम् ।

मानसरोगस्य नैदानिकप्रक्रियायामितिहाससमीक्षणं प्राथम्यं भजते । तदिदमत्यन्तमपेक्षितम् । शारीरिकरोगापेक्षयाऽत्रेतिहासस्याध्ययनं नितरामुपयोगि । इतिहाससमीक्षणेन च शारीरमानसोभयपरिस्थित्यवगत्या संप्राप्तिज्ञाने सौकर्यमुपजायते । रोगिणो न केवलं वर्तमानकालिकेतिहासज्ञानमपेक्षितम् अपि तु संपूर्णभूतकालिकेतिहासज्ञानमप्यपेक्षितम् । चिकित्सकश्च पूर्णमनोवैज्ञानिकीं पद्धतिमास्थायेतिहासमसीक्षणं कुर्यात् । इतिहासज्ञानमत्यन्तं महत्त्वपूर्णं मानसरोगेषु । चिकित्साविज्ञानविदामेतदनिवार्यं कर्म, यत्ते क्रमिकप्रश्नपरोक्षानैपुण्यमधिगच्छेयुः । पुनः पुनश्चाभ्यासो विधेयो भवति प्रश्नकरणप्रणाली सौष्ठवमधिगन्तुम् ।

यथा यथा चिकित्सक आत्मीयमधुरव्यवहारेण मधुरया गिरा समाश्वासनेन च रोगिमनसि स्थानं लभेत, तथा तथा रोगिणः स्वस्थतानुभवन्ति । अत्र चेदमवधेयं यद् वैद्यातुरयोर्मिथः प्रगाढं स्नेहसम्बन्धस्य स्थानं तथा प्रश्नकरणसौष्ठवञ्चेत्युभयं महत्त्वपूर्णमास्ते ।

रोगिविषये या काचन सूचनाऽधिगता स्यात्, सा प्रामाणिकी भवेत् । रोगिसम्बद्धजनैः शुभचिन्तकैश्च प्रामाणिकी रोगावस्था ज्ञातव्या । मानसरोगेतिहासः सर्वथा विश्वसनीयो यथार्थश्च स्यादिति प्रयासो विधेयः । रोगिभिः

सह सहयोगो वैद्यातुरसम्बन्धश्च रक्षणीयः। व्यावहारिकरूपेण वैद्यातुरावुभावपि मधुरसम्बन्धाकाङ्क्षिणौ स्याताम्, तदैव श्रेयः[१]।

वैद्यस्य रोगिणं प्रति तद्रोगविषये च साधु व्यवहारोऽपेक्षितः। रोगी च वैद्यं प्रति मातृपितृबन्धुवद् व्यवहारेण स्वात्मानमुपस्थापयेत।

मानसिकाश्च रोगाः रोगिणः प्रकृतिमनुवर्तन्ते। यदि चेद् रोगी हीनमनोबलः शोकचिन्ताक्रोधादिपरिगतो भवेत्तदा तद्रोगेऽप्येभिर्विकारैरनुगतो भवेत् केचन चिकित्सकाश्च मानसरोगिभिः सह नैव सामञ्जस्यं स्थापयन्ति, परन्तु स्वभावत एवौदासीन्यपूर्णव्यवहारं व्याहारञ्च प्रयुञ्जते। तादृशश्च व्यवहारः रोगिणामपकारक एव भवति। यदि चेन्मानसरोगातुराणां दुःखमयजीवनव्यथाकथासु दत्तावधानो भवेच्चिकित्सकस्तदा रोगिणोऽनुभवन्ति मानसिकं स्वास्थ्यम्, सन्तुष्टाश्च स्ववेदनां विस्मरन्ति।

वैद्येन वैज्ञानिकतया तर्कसङ्गतधिया मानवीयदृष्ट्या च मानसरोगिणां परिचर्या विधेया। परीक्षको वैद्यो मधुरमधुरया वाचा सुसंस्कृतेन सदाचरणेन, सम्मानजनकाचारेण च रुग्णमाश्वासयेत्। कदाचिद् वैद्यातुरयोः बौद्धिकदृष्ट्या, सामाजिकदृष्ट्या, सांस्कृतिकदृष्ट्या च तावान्मतभेदो भवति, यावान् सोढुमनर्हं आतुरोऽधिकाधिकमातुर्याभिमुखो भवति। मधुरसम्बन्धस्थापनेन चिकित्सकः रोगिषु विश्रब्धतां सञ्जनयेदथ च रमणीयतापूर्णव्यवहारेण वैद्येन सह रोगिणो निकटसम्बन्धोऽभिवर्द्धते, रोगी च विश्वसिति यदयं चिकित्सको मम शुभैषी मित्रमारोग्यप्रदाता चाऽस्ति। वैद्यस्येदं पुनीतमाचरणमातुराणाञ्चेतसि सौहार्दं सज्जनतामात्मविश्वासञ्च जागृतं कुर्यात्। वैद्येन सदा यतनीयं यदातुराणां कश्चनाप्रियोऽपि व्यवहारः सह्यो भवेत्। असहयोगात्मक उपेक्षापूर्णश्च रोगिव्यवहारः स्वीयेन मधुरेण व्यवहारेण मर्षणीयः।

रुग्णजनस्य विपरीताऽऽचरणं वैराचरणमाक्रामकभावञ्चोपेक्ष्य सर्वात्मना तद्धितसाधनं विदध्यात्, स्वस्य च चिन्तामशान्तिमुद्विग्नतामपनयेत्। यदि चेद्रुग्णजनेषु मैत्री कारुण्यं प्रीतिः सद्व्यहारो न कृतः स्यात्तदा तस्य मनःक्षोभ एव जागृतो भवेदौद्धत्यञ्च तन्मनसि प्राचुर्येण समुद्भवेत्।

चिकित्सकस्य चेदमेव चातुर्यं यदसौ तस्य मौढ्यमाक्रम्य स्वविवेकबुद्ध्या स्वस्य मधुराचरणेन तद्धृदि स्वज्ञान-विज्ञानप्रभावेण वश्यताभावमुपजनयेत्। कदा-

---

१. ज्ञानबुद्धिप्रदीपेन यो नाविशति तत्त्ववित्।
आतुरस्यान्तरात्मानं न स रोगांश्चिकित्सति॥ (च० नि० ४/१२)

चिद्रुग्णस्य सम्बन्धिजना मानसव्याध्यभिभूतानातुरानुपेक्षयन्ति, स्वक्रूरव्यवहारेण च घृणामविश्वासं भयं क्रोधञ्च तन्मनसि समुत्पादयन्ति । एतदपि दृश्यते यद् रोगिणः स्वकीया आत्मीया अपि जनाः केनाप्यप्रकटितेन हेतुना त प्रति न केवलमौदासीन्यम्; अपितु शत्रुवद् व्यवहरन्ति स्वयं क्लिष्टं तं मानसव्याधिपरीतमातुरं दुःखमुपजनयन्ति । चिकित्सकस्य चेदमुत्तरदायित्वमस्ति यदसौ न केवलं रुग्णस्यापि तु तत्सम्बद्धजनानामपि प्रवृत्तिज्ञानं लभेत । सर्वेषां च परिचर्यापरायणानां जनानां चेतसि मैत्रीत्वबीजं स्थापयेत् । रोगिणा सह तेषां मधुरसम्बन्धस्थापने सावधानो भवेत् । वैद्यस्य चेदङ्कर्तव्यमस्ति, यत्स रोगिपरिवारे स्वच्छवातावरणनिर्माणे प्रभवेत्, स्वयं च वैद्यातुरसम्बन्धभावनामुदात्तां विदध्यात्, येन च रोगिणो वास्तविकं निदानं कृतं स्यात् ।

रोगिसाक्षात्कारश्च तथा व्यवहृतो भवेद्यथाऽधिकतमा सूचनाऽधिगता स्याद् रोगिविषये, येन रोगिवैद्ययोः परस्परं ज्ञातृज्ञातभावसम्बन्धस्थापनेन विस्तृतमितिवृत्तं तथ्यञ्चावगतं स्यात् । नहि सर्वत्र रोगिपरीक्षणे कश्चन दृढो नियमोऽनुसृतो भवति; किन्तु एतत्तु परीक्षणं रोगिणो वैद्यस्य च सुविधानुसारं रोगिप्रकारानुसारं च क्रियते । तत्र तथ्यान्वेषणाय व्याधेश्च तत्त्वज्ञानार्थमतीव चित्तैकाग्रताऽपेक्षिता भवति ।

रोगिणश्चेतिहासः सर्वथा गोपनीयो भवेत् । यदि चेद्बहिरङ्गातुरालये जनागमसंकुले स्थाने मानसरोगिसाक्षात्कारः कृतो भवेत्तदा तन्मूल्यं ह्रसति । रोगी जनश्च सङ्कोचवशात् स्वस्येतिवृत्तं गोपायति । रोगिपरीक्षणकाले चिकित्सकश्च धैर्ययुक्तः रुचिसम्पन्नः सावहितश्च स्यात् । इदञ्च साधुमार्गमितिहाससङ्कलनस्य; यद् रोगी स्ववाचा स्वस्य समस्तरोगावस्थामुपवर्णयेत् । यच्चान्यदवशिष्टं जिज्ञास्यं स्यात्, तदपि प्रश्नोत्तरप्रसङ्गेन ज्ञातव्यम् । पुरा कतिपयदिवसात्प्राक् सप्ताहाद्वाऽर्वाक् सङ्कलितमितिवृत्तं नोपयुज्यते । इतिवृत्तसमाकलने निश्चितनियमानुसारं क्रमिकरूपेण समग्रस्य लेख्यस्याकलनं विधेयम् । प्रत्येकस्य रुग्णस्य पृथक्त्वेनेतिहासो लेखनीयो भवति । यदि चेत् कश्चन रुग्णो जनः स्वापराधप्रकटीभवनभिया लज्जावशाद्वा भयातुरतया वा नेच्छति स्वाभिप्रायविशेषं प्रकटयितुम् तदा, नैवाग्रहो विधेयस्तद्गोप्यपक्षोद्घाटनार्थम् । प्रथमतस्तु यस्मिन् विषये मानसव्याधिपरीतो जनः निःसङ्कोचं वक्तुमुद्यतो भवेत्तस्मिन्नेव विषये गवेषणा कार्या । अनन्तरञ्च चिकित्सको येषु विषयेषु ज्ञानार्जनमभिकाङ्क्षेत्, तद्विषयकांश्च प्रश्नान् पृच्छेत् ।

रोगिण्याः परिवारस्य व्यावसायिकी स्थितिः कीदृशी ? पूर्वापेक्षया समृद्धिरवनतिर्वा विद्यते ? वैवाहिकी स्थितिः कीदृशी ? मैथुनीशक्तिरल्पा प्रबला वा ? अपत्यसंख्या वयश्च ? दाम्पत्यं सुखदं न वा इति सावधानतया चातुर्येण प्रष्टव्यम् ? जीविकासाधनानि सन्तोषमावहन्ति किम् ? सम्बन्धिनो कीदृशाः ?

**प्रकृतिविचारः**—तस्याः प्रवृत्तिः सामाजिकी ऐकान्तिकी वा ? कीदृशो विहारो रोचते ? कीदृशोऽभ्यासः, किं शीलम् ? का भक्तिः ? पार्श्ववर्तिभिः कीदृशो व्यवहारः ?

**पारिवारिकमितिवृत्तम्**—स्पष्टरूपेण प्रष्टव्यं यत्तस्या अस्ति, आसीद्वा कश्चन मानसो व्याधिरिति ? शरीराणाञ्चामयानां सावधानतया निदानं विधेयम्। रुचिपूर्वकं रोगिण्या रोगज्ञापनं साधु श्रोतव्यं भिषजा।

**मनोवैज्ञानिकप्रणालीयसाक्षात्कार[१]:**—यथा मानवदेहे जायमाना वेदना न निराधारा, तथैव मानसिकी चिन्ताऽपि साधारा जायते। चिन्ता[२] चोन्मादापस्मारादिरोगाणां सामान्यं निदानम्।

साक्षात्कारवेलायामिदमन्वेषणमत्यन्तमाश्यकं[३] यदस्ति काचन परिस्थितिस्तादृशी या चिन्तामुद्भावयति ?

'टेक्स्टबुक आफ मेडिकल ट्रीटमेण्ट[४]' नामकग्रन्थस्य ८१०तमे पृष्ठे योषापस्मारिण्या एकमुदाहरणमुपन्यस्तम्। तद्यथा—

'एका मध्यवयस्का प्रौढा स्त्री मृत्युशय्यासीनया स्वमात्रा हीनमतिभगिनीपालनाय समादिष्टा। स्वभगिनीपरिचर्याभारं सोढुमनर्हा सा विनैव हेतुना पतिना सुतैश्च कलहायहाना समभवत्। अनन्तरं सा समस्या समाधानाय एकपादपक्षाघातेन समाक्रान्ता जाता। तदानीन्तने समये सा समस्तस्यात्मीयजनस्य प्रेम चकर्ष। एवं सा मातुराज्ञापालनभाराद्विमुक्तिं लेभे।'

---

१. The Psychotheraputic Interview.

२. Anxiety is the commonst Symptom of Neurosis, there is no hard and fast line between Neurotic and normal anxiety.

३. In interviewing, it is important to discover in the first place, whether there is any current situation which appears to provoking anxiety.

It is important to review the patients emotional reactions and to seek such characteristic patterns.

In Histeria the typical symptom is one of a physical disturbance without physical disease. The symptom is an attempet to solve an emotional conflict by translating it into physical terms and so reducing anxiety. (From 'The Text Book of Medical Treatment' p. 809).

४. Text Book of Medical treatment---Ninth Edition 1964.

एवञ्च बहुशो दृष्टचरमेतद्, यद् योषापस्मारग्रस्ताः स्त्रियः स्वचिन्ताविमुक्तये कामपि सफलां तन्त्रक्रियामाचरन्ति । तथा हि चिन्तातुरा अपि ताः कमप्युपेक्षापूर्ण-मुच्चैरट्टहासं विदधति । योषापस्मारप्रकृतिकानां तु चिन्तावञ्चनविधिविधानं प्राधान्येन परिलक्ष्यते । रोगेऽस्मिन् निदानसौकर्याय चिकित्सासौविध्याय च रोगिण्याः प्रकृतिपरिचय आवश्यकः, तस्या दिनचर्यादिगतिज्ञानप्यपेक्षितम् ।

योषापस्मारिण्यः प्रायेणात्मानं श्रेष्ठतरां श्रेष्ठतमां वा मन्यन्ते । ताः किल स्वगुणैरन्या अभिभवितुमीहन्ते । स्वोत्कर्षसंस्थापनाय च यथेप्सितं संरम्भमा-तन्वते । पार्श्ववर्तिजनसहानुभूतिसमाकर्षणक्षमास्ताश्चिकित्सकानप्यभिभवितु-मिच्छन्ति । ताश्च स्वोत्कर्षप्रकाशनाय सर्वथा समुद्योगं कुर्वते ।

ताश्चाभिनयप्रकारेण स्वान्तर्गतां भावनामाविष्कुर्वन्ति । ताश्च वेपमान-गात्र्योऽसम्बद्धप्रलापकारिण्यो भवन्ति । समाचरन्ति च तादृशाश्चेष्टाः, याभिराकृष्टः समस्त एव परिजनस्तस्या एव परिचर्याविधौ दत्तादरो भवेत् । सर्वो जनस्ता एव सन्तुष्टा विधातुं प्रयतेत् ।

ताश्च कमपि दोषारोपणं सोढुमनर्हाः । प्राबल्येन चात्मनः सम्भाविततां दोषराहित्यञ्च प्रकटीकुर्वन्ति । यथा च प्रेतबाधाभिभूताः[1] स्त्रियः प्रबलेन प्रभावेण आज्ञाकारिताया पवित्रतायाः आचारस्य च निर्देशनं विदधति, तथैव प्रबलानि चिह्नानि च समुद्भवन्ति । यद् दृष्ट्वा प्रवरसत्त्वा जितात्मानो बलशालिनोऽपि जना सहसाऽनुभवन्ति रोमाञ्चम् । तादृशानि च विलक्षणानि लिङ्गानि संदृश्यन्ते, यद्दर्शनेन चापौरुषचमत्कारपूर्णमेव तस्याश्चरित्रमालक्ष्यते । भिषङ्मोहकरत्वमन्यत्र नालक्ष्यते तथा यथाऽत्र व्याधौ । अस्मिंश्च रोगे कस्यापि व्याधेर्लिङ्गानि सम्भवतः सम्भवन्ति ।

**निदानम्**—चिन्ता-शोक-भय-क्रोधादिमनोद्वेगजनकहेतुभिः, गर्भाशयविकृतेः, रजोऽवरोधात्, पत्युरस्नेहात्, अत्यादरात्, कामेच्छातृप्त्यभावात् अन्यस्माद्वा मानस-दोषाद् मृदुस्वभाववशाद् यौवने कौमार्ये वा वयसि व्याधिरयमाक्रमते । कदाचिच्च कस्या अपि भारभूतायाः समस्यायाः समाधानाय स्वकल्पनानुरूपलक्षणजातैः रोगोऽयमुत्पाद्यते स्त्रीभिः स्वयमेव । अस्य व्याधेर्नाडीसंस्थानेन सह निकटतमः सम्बन्धोऽस्ति

मानसिकहेतुभिरुत्पन्नोऽप्ययं व्याधिरनुबध्यते शरीरविकृतिलिङ्गैर्यथास्वम् । आयुर्वेदनये चायं व्याधिरतिप्रधानः । यथा च वातव्याधिनिदाने—

रुक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ।
विषमादुपचाराच्च दोषासृक्स्रवणादपि ।। ( मा० नि० )

इत्याद्युक्तं तदनुसारमद्यत्वे स्त्रीणामाहारः कषायरसप्रधानः कटुतिक्तरस-प्रधानो वा भवति । स्निग्धपदार्थानामभावः, तीक्ष्णपदार्थानामतिसेवनम्, चाय-

---

१. Obsession.

सेवनञ्च नियमेन भवति । तेन च रौक्ष्याद् वातप्रसरो जायते, वह्नेश्च वैषम्यमुपजायते । अथ च मनोमालिन्यम्, सन्तोषाभावः, रक्तक्षयः, रजःक्षयः, अपत्याभावः, पतिवियोगः, नैराश्यम्, आत्मीयजनानां दुर्व्यवहारः, पत्युरस्नेहादिकं रोगस्यास्य समुद्भवे हेतवो भवन्ति ।

आयुर्वेदीयापतन्त्रकरोगस्यैवापरं 'योषापस्मार' इति कल्पने नास्ति काचन विप्रतिपत्तिरिति तल्लक्षणनिदानादिपर्यालोचनेन स्फुटमेवावगम्यते । यथा चाह जतूकर्णः—

'वातकफाभ्यां हृच्छिरः शङ्खपीडनमङ्गाक्षेपप्रमोहाक्षिस्तम्भनिमीलनकृच्छ्रोच्छ्वासकूजनानि अपतन्त्रके ।'

सम्प्राप्तिः—विविधैः स्वप्रकोपककारणैः प्रकुपितो वायुः स्व (वस्ति) स्थानाद् ऊर्ध्वं व्रजन् हृच्छिरःशंखादीन् पीडयति—

क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ।
पीडयन् हृदयं गत्वा शिरः शंखौ च पीडयन् ॥
धनुर्वन्नमयेद् गात्राण्याक्षिपेन्मोहयेत्तदा ।
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलकः ॥
कपोत इव कूजेच्च निःसंज्ञः सोपतन्त्रकः ॥
(मा०नि०वात०नि०)

पूर्वरूपम्—हृत्पीडा, जृम्भणम्, अङ्गशैथिल्यम्, अवसादः, मनसो व्याकुलीभावः, गात्रभञ्जनम्, कण्ठावरोधः, कूजनम्, अरतिर्ग्लानिश्च भवित ।

भेलसंहितायाञ्चास्य व्याधेः स्फुटं वर्णमुपलभ्यते—

क्रुद्धः पक्वाशयाद्वायुरथ ऊर्ध्वं प्रपद्यते ।
स पीडयित्वा हृदयं धमनीर्दश संस्थितम् ॥
ऊर्ध्वमापूर्य स्रोतांसि शिरः शंखौ च धावति ।
आक्षेपतश्च गात्राणि नाम्यन्ते च धनुर्यथा ॥
निमीलिताक्षो स्तब्धो वा निरुच्छ्वासो विचेष्टते ।
कृच्छ्रं श्वसिति सार्तिश्च कूजत्यपि कपोतवत् ॥
मुक्ते हृदि तु वातेन पुनः स्वास्थ्यं निगच्छति ।
भूयस्तु शेते स्रस्ताक्षो मुह्यत्यप्रयतो यथा ॥
घोरः स वातिको रोगो धमनीहृदयाश्रितः ।
सन्निरोधाच्च नाडीनां यन्त्रितानां च वेगतः ॥
स्रोतसां व्याकुलीभावाद् जायते चापतन्त्रकः ॥

अयं च रोगो वातप्रधानः पक्वाशयोत्थश्च भवति ।

लक्षणम्[१]—अपस्मारवेगागमः:, चित्तचाञ्चल्यम्, कदाचिद्धास्यम्, कदाचित् क्रन्दनम्, उच्चैः क्रोशः, प्रलाप, भ्रमः, औद्धत्यम्, श्वासकृच्छ्रत्वञ्च, कण्ठे वेदना, क्वचित् सर्वाङ्गवेदना, कदाचन उदरादारभ्य कण्ठपर्यन्तं सवेदनो वातप्रसारो वा भवति। अत्र च रोगे रोगिणः स्वेच्छानुसारं कस्यापि रोगस्य लक्षणानि भवितुमर्हन्ति। रोगिण्या मानसिकी दशा भिन्नाकारा भवति। चिन्ता-शोक-भयादिभिस्त्रस्ता रोगिणी सततमेव व्यग्रा संलक्ष्यते।

अस्मिंश्च रोगे सर्वमेव मूर्च्छापस्मारभेषजं यथास्वं प्रयोज्यम्। 'मानसो[२] ज्ञान-विज्ञान-धैर्य-स्मृति-समाधिभिः' इत्यनुसारमत्रापि शास्त्रज्ञानाध्यात्मिकज्ञानाभ्यां सान्त्वनां दद्यात् कारणानुसारं तत्प्रतीकाराय च प्रयत्नो विधेयः।

**गदोद्वेगः[३]—**

यदा पुरुषो मनसा कायेन वातिशयं श्रमं विधत्ते, शुचा वा परितप्तो भवति, नैराश्यं मानहानिर्वा स्यात्तदाऽवरसत्त्वो ग्रस्यते गदोद्वेगेन।

अस्य च व्याधेर्लक्षणानि विस्मयजनकानि जायन्ते। कोऽपि रोगाक्रान्तोऽनुमन्यते, यत्तस्योदरे पन्नगो प्रविष्टः, यच्च भुज्यते, तत् सर्वमश्नात्यसौ। चिन्तयति च, यत्केन मार्गेण केनोपायेन निर्यास्यति ? कदाचिद्दशेत्तदा किम्भवेत् ?

केऽपि मन्यते, यत् शिरसि कश्चन भेकः स्थितः, स मां मारयिष्यति। एवञ्चाकारणमेव चिन्ताजालमाकलय्य सदैव भयमाचिनोति, विकारनिकरमनुभवति च। उदरशूलम्, उत्क्लेशः, श्वासः, वान्तिः, पाण्डुत्वम्, हृद्रोगः, विविधाश्चान्ये कल्पनाकृता रोगा अनुभूयन्ते।

तत्र च सान्त्वना-हर्षण-धैर्य-परिचर्यया यथास्वं लक्षणानुसारिणी चिकित्सा विधेया भवति।

**शैशवसंन्यासः[४]—**

वातातपरहिते शीते गृहे, यद्वा दुर्गन्धाभ्यर्णनिवसने, दुष्टानिलदूषिते गृहे निवसनात्, पानाशनविहारैश्च दोषावहैः, क्रिमिभिर्वा शिशुराक्रान्तो भवति 'संन्यासरोगेण'।

रोगाक्रमणे शिशुरसंज्ञो भवति, उत्ताननेत्रः, दृढगात्रो च्छिन्नतरुरिव भूमौ निपतति। तत्र सद्यःफला क्रियैव शरणम्।

तत्र च निदानपरिवर्जनपूर्विका शुद्धस्तन्यपानादिका यथास्वदोषानुरूपा चिकित्सा कार्या।

---

१. आयुर्वेदविज्ञानम्।
२. च० सू० ११५८।
३. आयु० वि०।
४. आयुर्वेदविज्ञानम्।

**तत्त्वोन्माद:[1]—**

क्वचन विषये अतिदृढं चित्तस्याभिनिवेशात् पवनप्रबलोऽयं रोगो भवति, यत्र च विचित्राणि लक्षणानि जायन्ते।

कर्तव्याकर्तव्यज्ञानाभाव:, कनीनिका स्थिरा, स्पन्दरहिता च भवति, वाग्मित्वमुपजायते, उत्कटं हास्यं उन्मत्तत्वञ्च जायते।

अत्र च वातानुलोमनं भेषजं पानमन्नञ्च प्रयोजयेत्।

**मदमूर्च्छासंन्यासा:—**

कट्वम्ललवणात्युष्णरूक्षतीक्ष्णविदाहिपूतिपर्युषितोच्छिष्टामेध्याहाराद् रजस्तमोभिभूतमनसो[2]जना:, यदा वातादिप्रकोपकाहारानासेवन्ते तदा हिताहारविहाराद् रक्तादिधातुक्षयादभिघातान्मद्यादिसेवनाच्च, रजस्तमसी प्रवृद्धे भवत:, वातादयश्च प्रकुपिता रसवहानि रक्तवहानि मनोवहानि च स्रोतांसि प्रतिहत्यावतिष्ठन्ते, तदा मदमूर्च्छासंन्यासा व्याधयो जायन्ते।

तेषां मदादीनां हेतुलिङ्गोपशान्तिषु एकरूपासु यथोत्तरं बलाधिक्यं विद्यात्, अर्थाद् मदापेक्षया मूर्च्छा, तदपेक्षया च संन्यासोऽधिकमात्ययिको भवति।

एवञ्च मन्यते यद् रसवहस्रोतोवरोधान्मद:, रक्तवहस्रोतोऽवरोधान्मूर्च्छा, मनोवहस्रोतोऽवरोधाच्च संन्यासो जायते।

रजोमोहावृतत्वेन[3] दुर्बलञ्चेतस: स्थानं हृदयं यदा कुपितो वायु: प्रतिपद्यते, तदा जन्तोर्मनो विक्षोभयन् संज्ञां मोहयेत्, एवञ्च पित्तं यदा दुर्बलञ्चेतस: स्थानं प्रपद्यते, तदा जन्तोर्मनो विक्षोभयन् संज्ञां मोहयेत्, कफश्चैवमेव संज्ञामाकुलतां नयति।

मूर्च्छायां मुख्यतो हृद्विकारो भवति, हृद्विकाराच्च रक्तसञ्चारक्रिया बाध्यते। तथा च द्विविधौ हृद्विकारौ भवत:—(१) हृदयपेशीदौर्बल्यम्, हृदयद्वारविकारश्च। तेन च शरीरे रक्तप्राचुर्येऽपि सति हृदयं न शक्नोति मस्तिष्काभिमुखं रक्तं सञ्चारयितुमिति, तत्परिणतिश्च मूर्च्छोत्पत्तिर्भवति। (२) कतिपयेष्वङ्गेषु केशिकास्फारो भवति, तेन च रक्तस्य बहुलो भाग: प्रान्तस्य प्रदेशेषु व्रजति अथवा रक्ताल्पतायां हृदये रक्तमपर्याप्तमवतिष्टते, तेन च नहि मस्तिष्के यथेष्टरक्तसञ्चरणं भवति, ततोऽपि मूर्च्छा जायते।

एममेव मस्तिष्काघाताद् रक्तभाराधिक्यात्, विषसेवनान्मस्तिष्कधमनीभङ्गात् सन्तापाधिक्यात्, अहिफेन-मातुलानी-कनक-मद्यादिसेवनात्, अहिताहारविहारजन्यदोषोद्रेकाच्च मूर्च्छा, संन्यासो वा जायते।

---

१. आयुर्वेदविज्ञानम्।

२. रजोमोहाहिताहारपरस्य स्युस्त्रयो गदा:।
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवा:।
मदमूर्च्छायसंन्यासा यथोतरबलोत्तरा:॥ (अ० हृ० नि० ६)

३. च० सू० २४।

**मदलक्षणम्**[१]—वातजे मदे अव्यक्तं शीघ्रं बहु च भाषते, चञ्चलः स्खलद्गति-र्वेपनः रूक्षश्यावारुणाकृतिश्च पुरुषो भवति ।

पित्तजे मदे—सक्रोधं परुषं भाषते, कलिप्रियः, संप्रहारप्रियश्च भवति । पीताकृतिः रक्ताकृतिर्वा संलक्ष्यते ।

कफजे मदे-असम्बद्धं स्वल्पं भाषते, तन्द्रालस्ययुतो भवति, पाण्डुवर्णः प्रध्यानतत्परश्च भवति । सान्निपातिके च सर्वाणि रूपाणि जायन्ते । मद्यजो विषजो रौधिरो वा मदो न वातपित्तकफव्यतिरिक्तो जायते ।

**मूर्च्छा—वातजमूर्च्छायाम्**—नयने नीलादिवर्णाधिक्यात्तदुपलक्षितमाकाशं नीलं कृष्णामरुणवर्णं वा पश्यंस्तमः प्रविशति ( मूर्च्छितो भवति ) शीघ्रमेव च प्रति-बुद्धयते । वेपथुरङ्गमर्दः, हृदयपीडा कार्श्यञ्च जायते ।

**पित्तजायां मूर्च्छायाम्**—रक्तं हरितं पीतं वाकाशं पश्यंस्तमः प्रविशति. स्वेदे जाते प्रतिबुद्धो भवति, पिपासितः सन्तप्तः पीताभः पीताकुलेक्षणश्च जायते ।

**कफजायां मूर्च्छायाम्**—अन्धकारमयैर्मेघैरावृतं मेघसन्निभमाकाशं पश्यंस्तमः प्रविशति चिराच्च संज्ञां लभते, आर्द्रचर्मावनद्धमिव वर्ष्म प्रतीयते, उपस्थित-वमन इव सप्रसेको भवति ।

**सन्निपातजायाम्**—पूर्वोक्तान्येव सर्वाणि रूपाणि तीव्राणि जायन्ते ।

## संन्यासः[२]—

प्राचुर्येण कुपिता वातादयो दोषा वाग्देहमनसां त्रयाणामेव चेष्टामाक्षिप्य ( निरस्य ) दुर्बलं पुरुषं सम्यङ् न्यस्यन्ति ( सम्यक् तमसि सन्निक्षिपन्ति) । अतः सोऽधिकबलोन्नतकुपितप्राणायतनाश्रितदोषवान् दुर्बलो ना ( पुमान् ) संन्याससं-न्यस्तः सन् सुतरां काष्ठीभूतो निःस्पन्दमानो मृतोपमो भवति ।

तथा च प्राणविमोचनात् प्रागेव संन्यासकाल एवं प्रबोधरूपफलजनिकाः सद्यःफलाः क्रियाः कार्याः । संन्याससंन्यस्तो जनः प्रतिबुद्धोऽपि संन्यासकरदोषानु-बन्धवान् भवति, तस्मात् तदनुबन्धदोषशमनार्थं प्रबुद्धसंज्ञमपि विस्मापनादिभिरु-पाचरेत् । तस्य मनः पुनः प्रलयहेतुभ्यः संरक्षितव्यम् ।

**संन्यासे[२] सद्यःफलाः क्रियाः**—अञ्जनम्, अवपीडनस्यम् प्रधमनम्, धूम्रपानम्, सूचिभिस्तोदनम्, शस्त्रदाहः, नखान्तरे पीडा, केशलुञ्चनं, कपिकच्छ्वघर्षणम्, पिप्पलीचूर्णयुतमातुलुङ्गरसस्य मुखे गालनम्, त्रिकटुहिंगुसौवर्चलयुक्तं मद्यमम्ल-काञ्चिकं वा प्रयोज्यम् ।

एवञ्च विस्मापनैः, संस्मरणैः, प्रियश्रुतिभिः, विचित्रैश्शब्दैः विचित्रैश्च दर्शनैः, प्रियैर्गीतैः, वादित्रैश्चास्य मनसो हर्षणं प्रबोधनञ्च विधेयम् । स्रंसनम्,

---

१. च० सू० २४ ।

२. च० सू० २४ । ४६-५२ ।

वमनम्, कवलग्रहमञ्जनम्, शोणितमोक्षणम्, उद्घर्षणञ्च कर्तव्यम्। आभिश्च क्रियाभिश्चेतः प्रबुद्धसंज्ञं सद्य एव जायते, येन च संन्यासामयोऽपगतो भवति, विप्लुतं मनो दार्ढ्यमवलम्बते, सत्त्वबलमुदेति, प्राणापगमनस्य पन्था अवरुध्यते।

सापेक्ष्यनिदानम्—

| मूर्च्छा | अपस्मारः | संन्यासः |
|---|---|---|
| १—क्रमिको वेगः | सहसा | सहसा |
| २—आक्षेपाभावः | आक्षेपः | आक्षेपाभावः |
| ३—प्रायो हृद्विकारजः | मनोदोषजः | मनोदोषजः |
| ४—स्वयं वेगशान्तिः | स्वयं वेगशान्तिः | औषधप्रयुक्तवेगशान्तिः |

सापेक्ष्यनिदानम्

| अपतन्त्रकः | अपस्मारः |
|---|---|
| १—क्रमिकरूपेण आक्रमणम्, अनियत—कालिकः, मनोदेहजः। | सहसाऽऽक्रमणम्, प्रायो नियतकालिकः मनोदोषजः। |
| २—चिरकालीनो वेगः | स्वल्पकालिको वेगः |
| ३—आक्रान्तो जनो भाषते | न भाषते |
| ४—सावधानो रोगी पतति, न जिह्वाक्षता जायते, न मूत्रोत्सर्गः | संज्ञाहीनो पतति, प्रायः अग्निसमीपे जलाशये वा पातेन आघातो जायते, जिह्वाक्षता भवति, संज्ञानाशदशायां मूत्रोत्सर्गो भवति। |
| ५—नेत्रे निमीलिते भवतः, पक्ष्मकम्पः | नेत्रेऽर्धनिमीलिते स्थिरे च। |
| ६—वातप्रधानः | मनोदोषजः |
| ७—स्त्रीषु प्रायो भवति | पुरुषेषु बाहुल्येन |

भ्रम-मद-मूर्च्छादीनां परस्परं भेदः[1] —

भ्रमे—पित्तं वायुः रजश्च दोषाः प्रधाना।
मदे—तमो वायुः कफश्च प्रधाना दोषाः।
मूर्च्छायाम्—पित्तं तमश्च दोषौ प्रधानौ भवतः।

मदे मूर्च्छायाञ्च[2]—वेगे गते रोगी स्वयमेव प्रबुध्यते।

अन्ये च मानसा व्याधयः—'मानसास्तु क्रोध-शोक-भय-हर्ष-विषादेर्ष्याभ्यसूया-दैन्य-मात्सर्य-काम-लोभप्रभृतय इच्छा-द्वेषभेदैर्भवन्ति।' (सु० सू० १)।

तत्र डल्हणः—"मानसास्त्वित्यादि। क्रोधः पराभिद्रोहलक्षणः, शोकः पुत्रादिवियोगे चित्तोद्वेगः, भयं परस्मात्त्रासः, हर्षः उत्सेकः, असिद्धिभयाद्विविधेषु

---

१. 'मूर्च्छा पित्ततमःप्राया रजः पित्तानिलाद्भ्रमः' –मा० नि० मू०।

२. दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम्।
स्वयमेवोपशाम्यन्ति, संन्यासो नौषधैर्विना॥ (च० सु० २४।४२)

कर्मसु सादोऽप्रवृत्तिः; विषादः, ईर्ष्या परसंपत्तापसहिष्णुता, छिद्रान्वेषितया परगुणेषु दोषारोपणमसूया, दैन्यं क्लिष्टचित्तता, मात्सर्यं परगुणेषु अमाध्यस्थ्यम्, क्रौर्यं वा, काम इन्द्रियार्थेषु अभिकाङ्क्षा, लोभः परस्वग्रहणाभिलाषः, आदिग्रहणाद् मानमददम्भादय इच्छा सातिशयोऽर्थाभिलाषः, सा च नानावस्त्ववलम्बिनी नानाकामतश्च भिन्ना भवति, तत्र हर्ष-शोक-दैन्य-काम-लोभादय इच्छाभेदेन, द्वेषः अप्रीतिः, सोऽपि नानावस्त्ववलम्बी नानारूपो भवति, क्रोधमयविषादेर्ष्यासूयामात्सर्याणि द्वेषभेदेन" (सु० सू० १।२४ (३)।

**शारीरेषु रोगेषु मानसविकृतिलिङ्गानि—**

ज्वरे —'ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ' (च०चि० ३।२८)
शीलवैकृतम्, स्वादुषु भक्ष्येषु च प्रद्वेषः,
हितोपदेशेऽरुचिः ।

वातज्वरे—भ्रमः, प्रलापः, विलापः, अश्रद्धा, घर्मेच्छा (वा०नि० ३)।

पित्तज्वरे—निद्राल्पत्वम्, प्रलापः, मदः, भ्रमः, शीतेच्छा (मा०नि०ज्व०)।

श्लेष्मज्वरे—अरुचिः, तन्द्रा, निद्राधिक्यम्, उष्णकामता (तदेव)।

वातपित्तज्वरे—मूर्च्छा, भ्रमः, स्वप्ननाशः, अरुचिः, वाक्प्रवृत्तिः ।

वातकफज्वरे—तन्द्रा, निद्रा, अरुचिः ।

पित्तकफज्वरे—अरुचिः, तन्द्रा, मोहः ।

सन्निपातज्वरे—तन्द्रा, मोहः, प्रलापः, अरुचिः, भ्रमः, गीतनृत्यहास्यादिविकारः, अनिद्रा, मूर्च्छा ।

शीतादौ ज्वरे—मूर्च्छा, मदः ।

दाहादौ ज्वरे—तन्द्रा, क्लमः ।

ग्रहजे ज्वरे—हास्यम्, रोदनम्, भयः, मूर्च्छा, कम्पनम् ।

कामजे ज्वरे—भ्रमः, ह्री, निद्रा, धृतिभ्रंशः, तन्द्रा ।

क्रोधजे ज्वरे—कम्पः ।

भयजे ज्वरे—प्रलापः ।

शोकजे ज्वरे—प्रलापः ।

आमे ज्वरे—तन्द्रा, अरुचिः ।

पच्यमाने ज्वरे—प्रलापः, भ्रमः ।

ज्वरप्रमोक्षे—क्लममोहाद्यपगमः, करणसौष्ठवम्, चित्तप्रसादः ।

रक्तपित्ते—अरुचिः, शीताभिकामिता, भ्रमः, क्लमः, मदः, मूर्च्छा स्वप्ने रक्तवर्णवस्तूनां दर्शनम् ।

कासे—अरुचिः, मोहः (वातजे) भ्रमः (पित्तजे) कफजे-अरोचकः ।

उर्ध्वश्वासे—प्रमोहः, अरतिः, भ्रान्तिः ।

महाश्वासे—प्रनष्टज्ञानविज्ञानः, विभ्रान्तलोचनः ।

छिन्नश्वासे—उद्विग्नचित्तता, प्रलापः, मूर्च्छा ।

तमकश्वासे—मोहः, अरुचिः, उष्णाभिकाङ्क्षा शयाने अनिद्रा ।

राजयक्ष्मणि--शुचावप्यशुचीक्षणम्, अरुचिः, वाह्वोः प्रमाणजिज्ञासा, पाण्योः अवेक्षा, घृणित्वम्, स्वप्ने काकशुकशल्लकिनीलकण्ठगृध्रकृकला-सैरुह्यमानत्वम्, केशास्थितुषभस्मराशौ समधिरोहणम्, शून्यानां ग्रामजनपदानां दर्शनम्, शुष्यतां कासाराणां दर्शनम्, पततां गिरीणां ज्वलतां महीरुहाणाञ्च दर्शनम्।

अरोचके--शोकक्रोधलोभभयादीनां मनःसन्तापस्य चारोचकोत्पत्तौ कारणत्वम्।

छर्दिरोगे--मूर्च्छा, भ्रमः, तन्द्रा, अरुचिः, मोहः।

हृद्रोगे--दैन्यम्, भयः, क्लमः, मोहः, अरुचिः।

तृष्णारोगे--मोहः क्लमः, प्रलापः, चित्तविभ्रंशः, मूर्च्छा, निद्रा, अरुचि।

अर्शोरोगे--भ्रमः, क्लमः, अरोचकः, मोहः।

अतीसारे--मूर्च्छा, भयशोकयोः कारणत्वम्।

ग्रहणीरोगे--सर्वेषु रसेषु गृद्धिः, मनसः सदनम्, भ्रमः, मूर्च्छा।

प्रमेहे--अरुचि, निद्रा, मूर्च्छा, उन्निद्रता।

गुल्मरोगे--अनन्नाभिलाषः, अक्षमत्वम्।

रक्तगुल्मे--दौहृदम्।

उदररोगे--(पैत्तिके) मूर्च्छा, भ्रमः।

श्लेष्मोदरे--निद्रा, अरुचिः।

सन्निपातोदरे--मूर्च्छा।

पाण्डुरोगे--तन्द्रा, अरोचकः, क्लमः, हतेन्द्रियत्वम्।

कामलारोगे--तन्द्रा, मोहः, अरोचकः।

शोथे (पैत्तिके)--भ्रमः, मदः।

कफजे--निद्रा, अरोचकः।

विसर्पे--(वातजे) क्लमः, अरुचिः, अरतिः।
(वातपित्तजे) मूर्च्छा, भ्रमः, अरोचकः।
(कफजे) अरुचिः, निद्रा, तन्द्रा, भ्रमः।

कृमिरोगे--मूर्च्छा, भ्रमः, अस्वप्नम्।

वातव्याधौ--निमीलितनेत्रता, स्तब्धनेत्रता, निःसंज्ञता।

उरुस्तम्भे--तन्द्रा, अरुचिः।

वातरक्ते--शीतद्वेषानुपशयौ।

पित्तानुगते वाते—सम्मोहः, मदः, स्पर्शाक्षमत्वम् ।

उदाने कुपिते—मनोभ्रंशः, अरोचकः, व्याने कुपिते—चित्तोपप्लवः ।

पित्तावृते—शीतकामिता, भ्रमः, कफावृते—उष्णाभिकामता ।

मूत्रकृच्छ्रे—मूर्च्छा ।

सद्योव्रणे—( मांससिरास्नाय्वस्थिसन्धिमर्मसु क्षतेषु )—भ्रमः, प्रलापः, मूर्च्छा, इन्द्रियार्थोपरमः, स्पर्शाज्ञत्वम् ।

अम्लपित्ते—मूर्च्छा, भ्रमः, अरोचकः, अरतिः ।

मसूरिकायां—कम्पः, अरतिः, क्लमः, अरुचिः, प्रलापः, मूर्च्छा ।

# पञ्चमं काण्डम्

## भूतविद्यामयानां सामान्यनिदानम्

प्राचीनकाले शारीरिकधातुवैषम्यादय इव[1] रक्षोभूतप्रेतपिशाचग्रहस्कन्दादीनां रुद्रादिदेवानाञ्च[2] कोपावेशादयोऽपि रोगकारणतया मता आसन्। वैदिकमन्त्रलिङ्गादपि 'रक्षोहामीवचातनः' इत्यादिरूपेण रोगनिरसनाय तन्निदानभूतानां रक्षःप्रभृतीनामपाकरणमप्युपायतया निर्दिष्टमुपलभ्यते। पश्चात्कालीनवैद्यकग्रन्थेष्वपि उन्मादापस्मारादिषु भूताद्यावेशादीनामपि निदानत्वेनोल्लेख उपलभ्यते।

वैदिककाले एतद् दृष्टेर्विशेषेणोल्लेखः। कौशिकसूत्रादिष्वाथर्वणमन्त्रविशेषाणां तत्र तत्र रोगे तन्निदानभूतरक्षःप्रभृत्यपसारणपरत्वेन विनियोग उपदर्शितः। तत्तद्रोगकारणत्वेन यत्क्रमीणां उल्लेख उपलभ्यते, तदपि रोगकारणीभूतानां राक्षसादीनामेव बोधकम्।

त्रिशिरस्त्रिपादरक्तलोचनादिरूपेण ज्वरादिरोगाणां मूर्तयो ग्रन्थकृद्भिरुल्लिखिता दृश्यन्ते, यास्तन्निदानभूतानां रक्षःप्रभृतीनां कीटाणूनां वा रूपाण्यध्यारोप्य कल्पिता अपि सम्भवन्ति।

अद्यत्वे सूक्ष्मवीक्षणयन्त्रैरवेक्षणे तेषु रोगेषु विचित्रा विभिन्नाकृतयः कीटाणव उपलभ्यन्ते। एवंविधान् भीषणाकृतीन् कीटाणून् अन्तर्दृशोपलब्धवद्भिः पुरातनैर्महर्षिभिस्तेषां रक्षोरूपेण वर्णनं कृतमिति सम्भाव्यते।

अद्यापि पर्वतीयेषु वन्यजातिषु च ज्वरादीनां भूतादिजन्यत्वमङ्गीकृत्य अपामार्जनप्राण्यन्तरसंक्रामणवलिदानादयो मान्त्रिका उपचाराः प्रायो विधीयन्ते, सफलता च लभ्यते। अद्यत्वे क्वाचित्कव्यवहाररूपेण दृश्यमाना अपि तादृशा उपाया न निर्मूलाः, अपि तु प्राचीनवैदिकावस्थात आरभ्यैवानुवर्तमाना विच्छिन्नविकलाङ्गेन केनापि रूपेणावशिष्यन्ते।

इदृशो मान्त्रिकप्रक्रियासंवलितो भैषज्यविषयो न केवलं प्राचीनभारत एव, अपि तु प्राचीनमिस्रादिषु पाश्चात्त्यदेशेषु, उत्तरामेरिकापर्यन्तं देशान्तरेष्वपि आसीदिति तत्तदीयपूर्ववृत्तानुसन्धानतः प्रकटीभवति।

आथर्वणसम्प्रदाये केवलं मान्त्रिकीभूतविद्यैव रोगनिरसनोपाय आसीदिति विचारो न सर्वांशतः स्थिरीभवति। वैदिकसमये मिथ्याहारविहारा इव पापानि, प्रेतभतादयो रुद्रादिदेवकोपा अपि रोगहेतुतया गण्यन्ते स्म। रोगोपशान्त्यै

---

१. यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषक् रक्षोहामीवचातनः॥ (ऋ० वे० १०।९७।६)

२. च० नि०—७।

औषधिविशेषाणां प्रयोगा इव तत्तद्देवतानामाराधनेन प्रसादनानि, मन्त्रविशेषैर्भूतान्यपसारयितुं रोगिणो मार्जनजलाभिमन्त्रणधूपनादीन्यपि, रोगनिरसनोपायतया यद्यपि प्रयुक्तानि, किन्तु सहैव बहूनां रोगाणां निर्वहणाय मन्त्रविध्यतिरिक्ता भेषजप्रक्रियाऽपि प्रचलिताऽऽसीत्। तेन मन्त्रविद्या भेषजविद्या चेत्युभयवर्त्मनी पूर्वैः परिगृहीते आस्ताम्। आथर्वणमन्त्राणां शाब्दिकार्थालोचने भूतविद्यासंपृक्तायुर्वेदीयविषयप्रतिपादकत्वेन कौशिकसूत्रकृताऽभिचारमन्त्रकरण्डकबन्धनभूतापसरणादिपरत्वेन विनियोजनं जलादिप्रतिपादकानां 'शंनो देवी'रित्यादिमन्त्राणां शनिग्रहादिपरत्वेन गृह्यकारादिभिर्विनियोजनम्, एतत्सर्वं भूतविद्यायास्तत्कालीनप्रसारपद्धतिमेवातनुते।

ऋक्संहितायामल्पमात्रया दृश्यमानाया मान्त्रिकोपचारप्रक्रियाया भैषज्यविद्यायाश्चाथर्वणे आधिक्यदर्शनेन प्रभूतो विकासः परिलक्ष्यते। अनन्तरञ्च केवलभैषज्यावबोधकमन्त्राणां कौशिकसूत्रकृता मन्त्रविद्यापरकार्थकरणेन तत्सूत्रकाले मान्त्रिकप्रक्रियाया विकासविशेषः प्रावर्तत इति क्रमविकासपरम्परयाऽवसीयते।

एवञ्चाचार्या मन्वते यदथर्वा भूतविद्याया आचार्य आसीदिति श्रूयते। तत एवाथर्वणे वेदे भूतविद्याया मान्त्रिकप्रक्रियायाश्च विषया सम्मिलिता अभवन्।

वृद्धजीवकीयतन्त्राभिधानायां काश्यपसंहितायां बालरोगेषु स्कन्दापस्मारग्रहपूतनादयो निदानत्वेन वर्णिताः, तेषां चिकित्साविधौ च बलिहोमोपहारधूपनपूजनादयो वर्णिताः, साकमेव वातादयोऽपि रोगहेतुतया तथा तत्तदौषधोपयोगा अपि रोगनिवर्हणोपायतया प्रतिपाद्यमाना दृश्यन्ते, तेन च पूर्वकालप्रवृत्तामुभयीं प्रवृत्तिमङ्गीकृत्य वर्णनं निर्दर्शितम्।

लोके यावन्ति प्राचीनवैद्यकपुस्तकानि तेषु सर्वेषु ऋग्वेदोत्तरमाथर्वणं वैद्यकसाहित्यं सर्वप्रथममिति सम्मान्यते। अथर्ववेदो भारतीयचिकित्साविज्ञानस्योत्पत्तिस्थानमिति नात्र कश्चन विसंवादः। आथर्वणे तेषु तेषु रोगेषु मन्त्रप्रक्रियया औषधप्रक्रियया च द्विधा चिकित्सा प्रदर्श्यते। एवमेव कौशिकसूत्रकृताऽपि क्वचन मन्त्रोपयोगेण जलादीनां सेचनेन पानेन वा विनियोगः प्रदर्श्यते। क्वचन मन्त्रेण सहापि तेषु रोगेषु औषधविशेषाणामप्युपयोगो विहितोऽस्ति। रोगोत्पत्तौ कारणत्वेन दुष्टा देवविशेषाः स्कन्दग्रहादयो यातुधाना वा मन्त्रेषूपलभ्यन्ते, तेषां निरसनाय च मान्त्रिकी प्रक्रिया प्रयुज्यते स्म। सैव प्रक्रियाऽद्यापि भूतविद्यासम्बन्धिरोगेषूपचाररूपेण ग्रन्थेषु व्यवहारेषु चानुवर्तते कारणमित्यामनन्ति संहिताकाराः। तथा च भूतविद्यापरिभाषायां सुश्रुतः—

'भूतविद्या नाम देवासुर गन्धर्वयक्षरक्षः पितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादिग्रहोपशमनार्थम्'[1] इति।

---

१. सु० सं०—सू० १।७।

अथ च शारीरा वातादयः, मानसौ च दोषौ भूतविद्यारोगाणां हेतू समाम्नातौ चरक-सुश्रुत-वाग्भटादिग्रन्थेषु। तत्सर्वमत्र यथास्थलं वर्णयिष्यते।

## भूतविद्यासम्बन्धिनां रोगाणां मूलकारणानि

अविकृताः वातादयो देहसम्भवे हेतवो भवन्ति। शुक्रार्तवादिसहकारितया ते हि देहजनका अभिप्रेताः। तैरेव प्रकृतिस्थैरधोमध्योर्ध्वसन्निविष्टैर्वातपित्तश्लेष्मभिः शरीरमिदं धार्यते आगारमिव स्थूणाभिस्तिसृभि अतश्चः, त्रिस्थूणमिदं शरीरमिति।

त एव च दोषाः व्यापन्नाः सन्तः शरीरमिदं व्याधिमन्दिरीकुर्वन्ति[1]। अथ च शरीरं हि दोषधातुमलमूलमुच्यते। तत्र पञ्चधा प्रविभक्तो वायुः शरीरं धारयति, पञ्चधा प्रविभक्तं पित्तमग्निकर्मणा शरीरमुपकरोति, कफश्च पञ्चधा प्रविभक्त उदककर्मणा शरीरमनुगृह्णाति (सु० सू० १५)।

एवञ्च इष्टवर्णगन्धरसस्पर्शविधिविहितमन्नपानं प्राणिनां प्राणमाचक्षते। अन्नपानहेतुना च जठराग्निस्थितिः। अग्निस्थितिश्च प्राणहेतुः। (बलमारोग्यमायुश्च प्राणश्चाग्नौ प्रतिष्ठिताः—च० सू० २७) तेन दोषा अग्निस्थित्या देहं धारयन्ति विगुणास्तूपघ्नन्ति। एवञ्च—'दोषा एव हि रोगाणां सर्वेषामादिकारणम्'। एकेन हिरण्याक्षाभिधेयेनाचार्येण तु–'षड् धातुजस्तु पुरुषः रोगाः षड्धातुजास्तथा' इत्युक्तम्। शरीरञ्च चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकमुच्यते (च० शा० ६।४)।

पञ्चभूतैः सह त्रिगुणानां साधर्म्यप्रसङ्गे चैवमुक्तं यत् 'तत्र सत्त्वबहुलमाकाशम्, रजोबहुलो वायुः, सत्त्वरजोबहुलोऽग्निः, सत्त्वतमो बहुला आपः, तमो बहुला पृथिवीति। (सु० सं० शा० १।२०) तेन पञ्चमहाभूतैः सह त्रिगुणानां सामञ्जस्यमङ्गीकृतमेव। यथा च मूलप्रकृतिस्तृभिर्गुणैरन्विता, सत्त्वरजस्तमोमयमव्यक्तम्, तेन षड्धातुके पुरुषे गुणानां स्वीकरणमस्त्येव। दोषाश्च भूतैरास्यूताः, गुणाश्च तेर्न भिन्नाः। अतश्च शरीरस्य समुत्पत्तौ धातूनामिव त्रयाणां गुणानामपि माहात्म्यमव्याहतमेवाथर्ववेदे च (१०।८।४३)—

पुण्डरीकं नवद्वारं त्रिभिर्गुणैरावृतम्।
तस्मिन् यद्यक्षमातन्वत् तद्वै ब्रह्मविदो विदुः॥

एतेन शरीरमिदं त्रिगुणमाख्यातम्। श्वेताश्वतरोपनिषदि, गर्भोपनिषदि च गुणानां वर्णनमुपलभ्यते। यथा च गुणाः शरीरस्य सम्भवे हेतवो भवन्ति, तथा यिकारेऽपि।

---

१. ··· ··· त एव व्यापन्नाः प्रलयहेतवः, (सु० सं० २१।३)।

रजस्तमोभ्यां हि मनः परीतं सत्त्वसंज्ञकम् ।
शरीरस्य समुत्पत्तौ विकाराणाञ्च कारणम्[1] ॥

अथ च— येषामेव हि भावानां सम्पत् संञ्जनयेन्नरम् ।
तेषामेव विपद्व्याधीन् विविधान् समुदीरयेत् ॥

प्रकृतिवर्णनप्रस्तावे च दोषप्रकृतिवर्णनेन सह भौतिकप्रकृतिवर्णनमपि कृतम् । यथा च—

प्रकृतिमिह नराणां भौतिकीं केचिदाहुः,
पवनदहनतोयैः कीर्तितास्तास्तु तिस्रः ।
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान्
शुचिरथ चिरजीवी नाभसः खैर्महद्‌भिः[2] ॥

एतेन पृथिव्यप्तेजोवाय्वाकाशीयामपि प्रकृतिमवर्णयन् महर्षयः । अन्ये च वदन्ति यत् सा चैकशो द्विशस्त्रिशश्चतुर्भिर्वा भूतैः प्रस्तार्यमाणा बहुधा सञ्जायते । उक्तञ्च—

'एकैकेन वदन्ति पञ्चदश तु द्वाभ्यां त्रिभिस्तावतीर्भूतैः पञ्च, चतुर्भिरेव भिषजस्त्वेकां समस्तैरपि । एकत्रिंशतमत्र भूमिसलिलस्वाहाप्रियस्पर्शनाकाशैश्च प्रकृतीर्गुणैरपि पुनः प्राहुः स्म सप्तापरा[3] ॥'

एवमिदं शरीरं पाञ्चभौतिकमामनन्ति ऋषयः । यथाह चरकः—'गर्भस्तु खलु अन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः'[4] । अथ च यथा शरीरं भूतैराचितम्, तथैव गुणैरपि सत्त्वादिभिश्चितम् । अत एव सप्तमहाप्रकृतयोऽपि वर्णिताः । ता एव वित्तप्रकृतयोऽभिधीयन्ते ।

चिकित्सायाञ्च प्रकृतिज्ञानमावश्यकमास्ते, न हि प्रकृतिज्ञानमन्तरा विकृतिज्ञानं यथार्थतः कर्तुं पार्यते । 'कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत्[5] ।' चरकेण चातुरपरीक्षणप्रस्तावे प्रागेवोक्तम्—'तस्मादातुरं परीक्षेत—प्रकृतितश्च विकृतितश्च, सारतश्च……' (च० वि० ८।९६) ।

एवञ्च शारीरेषु मानसेष्वामयेषु च सर्वतः प्रकृतिज्ञानमपेक्ष्यते । यैश्च भावैः शरीरं धार्यते, तैरेव व्यापन्नैर्व्याधितं भवति । अतश्चोभयत्र शरीरस्य तत्त्वस्य वा पर्यवेक्षणमावश्यकम् । मानसाश्च रोगा उभयथा जायन्ते त्रेधा वा जायन्ते शारीरदोषात्, मानसदोषात् आगन्तोर्वा हेतोः । अत एव तत्र तत्र विकारकारणत्वेनागन्तवोऽपि हेतवः समाख्याताः । 'ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः' (मा० नि० ज्वर०) । सुश्रुते च—'शारीरमानसागन्तुव्याधिभिर्विविध…' (सु० सं० सू० १।४) 'ते चतुर्विधाः आगन्तवः, शरीराः मनसाः, स्वाभाविकाश्च' (सु० सं० सू० १।२४) ।

---

१. च० सू०—२५।११ ।
२. तत्रैव—२५।२९ ।
३. सु० सं०—शा० ४।८० ।
४. तत्रैव—४।८०—डल्हणटीका ।
५. च० सं०—शा० ४।६ ।

भूतविद्यायाञ्च देवादिभिरुपसृष्टचेतसां नैरोग्याय शान्तिकर्मादि विधीयते। चरके च—'किं चास्य देवादिप्रकोपनिमित्ता विकारा संभवन्ति, आहोस्विन्न ?' इति प्रश्ने कृते समाधानं दत्तम्--'आप्तोपदेशाददभुतरूपदर्शनात् समुत्थानलिङ्ग-चिकित्सितविशेषाच्चादोषप्रकोपानुरूपा देवादिप्रकोपनिमित्ता विकाराः समुपलभ्यन्ते' (च० सं० शा० ६।२७)।

एतेन च भूतविद्यासम्बन्धिरोगाणां शरीरमनोदोषकारणत्वम्, आगन्तूनाञ्च कारणत्वमङ्गीकृतं प्रतीयते। यतः क्वचन शारीराः, क्वचन मानसाः, क्वचन चागन्तवो हेतवो भन्ति। यथाह माधवः—

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः।
मानसेन च दुःखेन स च पञ्चविधो मतः॥
विषाद् भवति षष्ठश्च··· ।

विरुद्धादुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः॥

(मा० नि०, उन्मादनि०)

'प्रज्ञापराधाद्धचयं देवर्षि-गन्धर्व-यक्ष-राक्षस-पिशाच-गुरु-वृद्ध-सिद्धाचार्य-पूज्यानवमत्याहितान्याचरति, अन्यद्वा किञ्चिदेवंविधं कर्माप्रशस्तमारभते। तमात्मनोपहतमुपघ्नन्तो देवादयः कुर्वन्त्युन्मत्तम्[1]'। 'दोषाः प्रकुपिताः रजस्तमोभ्यामुपहतचेतसामान्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसृत्य पर्यवतिष्ठन्ते, तथेन्द्रियायतनानि च। तत्र तत्र चावस्थिताः···हृदयम्। काम···शोकचिन्तोद्वेगादिभिः सहसाऽभिपूरयन्ति, तदा जन्तुरपस्मरति[2]।'

अपस्मारे—'वातपित्तकफैर्नृणां चतुर्थः सन्निपाततः[3]'। उन्मादनिदाने च-- एकैकशः समस्तैश्च दोषैरत्यर्थमूर्च्छितैः। मानसेन च दुःखेन स पञ्चविध उच्यते[4]। एवञ्च वातादयो दोषाः, मानसो दोषो, आगन्तवश्च हेतवस्तत्र तत्र समीरिताः सन्ति।

**देवाः व्याधीनभिनिर्वर्तयन्ति**--आयुर्वेदीयसंहिताग्रन्थेषु बहूनां रोगाणां समुत्पत्तौ विभिन्नानां देवानां हेतुत्वमङ्गीकृतमास्ते। तेषाञ्च रोगाणां चिकित्साविधौ वल्युपहारप्रणिपातादीनां तथा प्राविधानं प्रार्थना च निर्दिष्टा वर्तते। एतदपि कल्प्यते यत्ते देवास्तान् व्याधितपुरुषानवेक्षयन्ति, तेषां मनसि बुद्धौ शरीरावयवेषु च स्वप्रभावमधिक्षिपन्ति। अयञ्च विचारो वैदिके वाङ्मये समुपलभ्यते, यद् देवाः पापाचारान् व्याधिप्रायश्चित्तेन दण्डयन्ति।

एवञ्च यो व्याधिर्येन देवेन जनितस्तस्य व्याधेर्प्रतीकारे स एव देवः प्रमाणम्। रुद्र-सोम-वरुण-वास्तोष्पति-आदित्य-मरुत्प्रभृतयः स्वस्वशक्तिभिर्वि-

---

१. च० नि ७।१३। २. च० नि० ८।४।
३. सु० सं-उ० त० ६१।११। ४. तत्रैव ६२।४।

विधान् व्याधीन् जनयितुं प्रभविष्णवः । 'तक्मन[१]' रोगस्य जनको वरुणः, जलोदर-रोगस्य[२] च प्रवर्तको वरुणः 'आस्रव'रोगः[३] पर्जन्याज्जातः, 'शूल' रोगः रुद्रेण प्रकटीकृतः रुद्रस्य शूलाच्च 'गुल्म'[४] रोगोऽजायत । 'तक्मन' रोगः 'काशिका' (श्लेष्मा[५]) च रुद्रस्य शस्त्रभूतौ स्तः ।

मरुताम्[६] आराधनेन कुष्ठरोगः शाम्यति । 'ज्वरश्च' रुद्रकोपाग्निसम्भूतः[७] । चरकश्च ज्वरचिकित्सिते प्राह 'रुद्रकोपाच्च दारुणात्'[८] । अन्यत्र च—

ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥ (हरिवंशपु०) ।

ज्वरस्य रुद्रकोपसंभवत्वेन देवतात्मकत्वात् पूजार्हत्वमुक्तम् । यथाह विदेहः 'ज्वरस्तु पूजनैर्वापि सहसैवोपशाम्यति' ।

एते च देवा भिषगित्र रुग्णान् नैरुज्यमाददते । इन्द्रो गात्राणि सन्दधाति, नेत्रयोर्ज्योतिर्ददाति, पूर्णमायुः वितरति, बहुभ्यश्च व्याधिभ्यः संरक्षति । वरुणः कतिचन सहस्रसंख्याकभेषजानां[९] स्वामी । सोम आतुरान् नीरोगान् करोति । वास्तोष्पतिः रोगमुक्तिं विदधाति, अश्विनौ च देवभिषजौ । एवञ्च देवानां व्याधिभिर्नितरां घनिष्ठः सम्बन्धो वर्तते ।

भूतविद्याङ्गस्य कृते ह्यायुर्वेदोऽयमथर्ववेदस्य महद् ऋणभारमावहति, पूर्वोक्तेषु सन्दर्भेषु एतत्सम्बन्धिनां विषयाणां यथा यथाऽथर्ववेदे वर्णनमुपलभ्यते, तत्प्राकाश्यं नीतमेव ।

अथर्ववेदस्य 'मातृनाम'[१०] मन्त्राणि तु तस्य वाङ्मस्यादर्शभूतानि सन्ति । येषु च रोगोत्पादकानां भूतानां दैत्यानाञ्च वर्णनं कृतमास्ते । ते च कृष्णवर्गाः, जटाधारिणः, स्वप्नदर्शनाः, छायानुचराः, योषापस्मारकारिणः, तमसि स्त्रीनर्तयितारश्च कथिताः । तीव्रैरुद्वेजकैरपकारकगन्धैरुद्विजन्ति, पलायन्ते च ते । भास्कराचिर्नं सहन्ते । ते हि कण्टकिनो भवन्ति । स्त्रीणाञ्च श्रोणितटं पीडयन्ति । तरु-लता-कुञ्जेषु प्रकाशमुपजनयन्ति । आममांसभोजिनो भवन्ति । गर्भं स्रावयन्ति पातयन्ति वा ।

गन्धर्वाः, अप्सरसः, पिशाचाः, कण्वाः, अत्रिप्रभृतयो नानाविधान् व्याधीन् जनयितुं समर्था भवन्ति । गन्धर्वा[११] शिखावला भवन्ति । तेऽप्यप्सरसां पतयो भवन्ति । ते नृत्यन्ति, विदुलादींश्च भक्षयन्ति, स्त्रीषु[१२] चाकृष्टा भवन्ति विशेषेण ।

१. अथर्व० १।२५।३, ६।९६।२ ;
२. ऐत० ब्रा० ७।५ ।
३. कौ० सू० ३१।७ ;
४. अथर्व० ६।५७ ।
५. अथर्व० ११।२।२२–२६ ;
६. कौ० सू० २६।२४ ।
७. मु० उ० ३९।९ ;
८. च० चि० ३।१४ ।
९. ऋ० वे० १।२४।९ ;
१०. अथर्व ८।६ ।
११. तत्रैव—४।३७।११ ।
१२. तत्रैव—४।७।२३ ।

ते च सर्पवद् विषवन्तो[१] भवन्ति। वृक्षेषु[२] लतासु च निवसन्ति। एभिश्च सन्दर्भैरिदं प्रतीयते, यदेते गन्धर्वाः केऽपि जीवाणवो भवन्ति दन्तविषाः। अप्सरसश्च जलाशयेषु तैः सह वसन्ति, किंतु न ते सविषाः, तथैव पिशाचा अपि आममांसभोजिनः, जले च ते प्रकाशं[३] प्रसारयन्ति। ते मांसाशिनो[४] भवन्ति। न च चक्षुषा[५] प्रत्यक्षीकर्तुमर्हाः। आहारसाहचर्येण च ते मानवान् आक्रामन्ति[६]। ते वायुना सह गगने भुवि वा परिभ्रमन्ति[७]। ते मनो[८] भ्रामयन्ति, ते मक्षिकावद् गुञ्जन्ति[९]। एते च पिशाचा मांसभुजो जीवाणवः सन्ति इति प्रतीयते।

एके वदन्ति, रोगाभिसराः दैत्या भूताश्च सविषकण्टकजीवाणव एव ये चाथर्ववेदे वर्णितचराः। अथर्ववेदे च तेषां नामानि सुन्दराणि गन्धर्वादीनि। अथर्ववेदे च विविधेषु मन्त्रेषु येषां भूतानां वर्णनमुपलभ्यते, संभाव्यते यत्ते नान्यैः जीवाणुभ्यः। 'अथो[१०] सर्वं श्वापदं मक्षिकातृप्यतु क्रिमिः' इत्यत्र मक्षिकापदेन सर्वेषामेव कृमीणां ग्रहणमभीष्टम्।

**भूतविद्यायां कीटाणूनां कृमीणाञ्च रोगकारणता**—अथर्ववेदे क्रिमिक्रमिशब्दौ स्तः। तत्र क्रिमिपदेन कीटाणवः क्रिमयश्चाभिधीयन्ते। ये च कूर्दन्ति सर्पन्ति वा (परिसर्पन्ति)[११] मनुष्यदेहे प्रविश्य विविधान् व्याधीन् जनयन्ति (येऽस्माकं तन्व आविविशुः सर्वं तद्धन्मि जनिं कृमीणाम्[१२]। केचन दृश्यन्ते कतिचन चादृश्याः (दृष्टांश्च[१३] ह्यदृष्टांश्च)। 'दृष्टाश्च[१४] ……… अदृष्टाश्च[१५]—ते सर्वं मारणीयाः। सूर्यश्च तान् हन्ति[१६]। केचन क्रिमयः सर्वत्रैव समुपलभ्यन्ते—वृक्षेषु, लतासु, पर्वतेषु, जले, मनुष्येषु[१७] च।

ते क्रिमयः 'मानवाश्रयाः' मानवदेहे च यथा कथञ्चन प्रविश्य रोगहेतुत्वमापद्यन्ते। सामान्यतस्तान् रोगाणून् प्रचक्ष्महे। तेऽतिथी भवन्ति। अथर्ववेदे च कतिपयरोगाणूनां वर्णनमुपलभ्यते[१८]।

अन्वान्त्रं शीर्षण्यमथो पार्ष्ठेयं क्रिमीन्।
अवस्कवं व्यध्वरं क्रिमीन् वचसा जम्भयामसि॥

---

१. तत्रैव, ८।७।२३।
२. तत्रैव, ११।९।२४।
३. तत्रैव, ४।३७।१०।
४. तत्रैव, ८।२।१२।
५. तत्रैव, ४।२०।६।
६. अथर्व०, ५।२९।६।
७. तत्रैव, ४।२०।६।
८. तत्रैव, ५।२९।१०।
९. तत्रैव, ४।३६।१०।
१०. तत्रैव, ११।९।१०।
११. तत्रैव, ५।२३।३।
१२. अथर्व०, ११।३१।५।
१३. तत्रैव, ४।२३।६।
१४. तत्रैव, ४।२३।७।
१५. तत्रैव, ११।३१।२।
१६. तत्रैव, ४।२३।६, ११।३२।१।
१७. तत्रैव, ११।३५।५।
१८. अथर्व० ११।३१।४।

अन्वान्त्र्ये क्षुद्रान्त्रवासिनः, शीर्षण्यम्—ये शिरःस्थाः सन्तः मतिविभ्रमं उन्मादञ्च जनयन्ति, पार्ष्ठेयं—ये पृष्ठकशेरुकासु—पर्शुकासु[१] वा तिष्ठन्ति, तत्र च रोगान् विदधति, अवस्कवंम्-ते रोगाणवः मांसपेशीषु व्यत्यासं कृत्वाऽनिच्छयैव समुत्तेजनां संकोचं वा जनयन्ति। व्यध्वरं-विशिष्टानां रोगाणां जनयितारः विशिष्टा रोगाणवो भवन्ति, येषां विशेषणशब्दोऽयं[२] वर्तते।

विश्वरूपं चतुरक्षं क्रिमिं शारङ्गगर्जुनम्।
शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः॥

अनेन वर्णनेन कस्यापि विशिष्टस्य[३] रोगाणोः वर्णनं कृतमास्ते। यश्च भ्रूणावस्थायामेव पूर्णं रूपं बिभर्ति। असौ चतुःसंख्याकान् आचूषकान् धत्ते, श्वेतवर्णः क्वचन चिह्नितः। अमुं हन्तुं शिरश्च्छेद एव कर्तव्यः।

प्र ते शृणामि शृंगे याभ्यां वितुदायसि।
भिनद्मि ते कुषुम्भं यस्ते विषधानः[४]॥

अत्र चान्यस्य विशिष्टस्य[५] रोगाणोः वर्णनम्। यश्च द्वितयं कंटकजालं बिभर्ति यस्य शरीरे तीव्रं विषं सञ्चितंभवति, यश्च मानवदेहेऽरुन्तुदां व्यथां संजनयति। कुषुम्भशब्दश्च कमण्डलुवाचको वर्तते, तेन तस्य रोगाणोः शरीरे विषाधानपात्रं यदस्ति तस्य भेदनं कथितमस्ति पद्येऽस्मिन्।

त्रिशीर्षाणं त्रिककुदं क्रिमिं शारङ्गमर्जुनम्।
शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः॥ (११।२३।९)

अत्र श्लोके वर्णितस्य[६] जीवाणोः शिरसि त्रितयं समुन्नतं ककुद्-उत्सेघम् आस्ते, शिरस्त्रेधा विभक्तमिव प्रतीयते, अयश्च श्वेतवर्णो भवति। अस्य शिरश्चलायमानं भवति। एतद्वर्णनानुसारमाधुनिकैर्वर्णितम् Round Worm यद्वा Thread Worm गृहीतुं शक्यते। अथ च—

'अलगण्डून्सर्वाञ्छलुनान् क्रिमीन् वचसा जम्भयामसि।
अलगण्डून् हन्मि महता वधेन दूना अदूना अरसा अभूवन्॥
शिष्टानशिष्टान्नितिरामि वाचा यथा क्रिमीणां न किरच्छिषाते।
(११।३२।२-३)

दृष्टमदृष्टमतृहमथो कुरूरुमतृहम्।
अलगण्डून् सर्वान् क्रिमीन् वचसा जम्भयामसि॥ ११।३१।२।

---

१. Gonococcii causing Gonorrhoea, Auaskava and Vyadhvara are descriptive epithets of 'Tinea medinensis'

२. अथर्व ११।३२।२। ३. This is Taenis Saginate. ४. अ० वे० ११।३२।६।

५. Bladder worms of Taenia Saginate in Cow.

६. Nmatodes Oslyuris Varmicilaris.

यो अक्ष्यो परिसर्पति यो नासे परिसर्पति ।
दतां यो मध्यं गच्छति तं क्रिमिं जम्भयामसि ।। (४।२३।३)
ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्वन्तः ।
ये अस्माकं तन्वमाविविशुः सर्वं तद्धन्मि जनिं क्रिमीणाम् ।।(११।३१।५।)

एतेषां क्रिमीणां नाशार्थं कण्व-जमदग्नि-अत्रि-अगस्त्यप्रमुखैः भिषगृषिभिः विविधाः प्रकाराः प्रयुक्ताः । क्रिमीणां नाशने ते हि दक्षा आसन्[1] । स्थूलरूपेण प्रतिषेधविधिः, विसंक्रामणम्, वारणम्, धूपनम् इति चत्वारो विधयः प्रयुज्यन्ते स्म ।

पूर्वोक्तानामथर्ववेदे वर्णितानां क्रिमीणां परवर्तिनि वाङ्मये सविस्तरं वर्णनमवाप्यते । तथा च–

'विंशतिः क्रिमिजातय इति, यूकाः पिपीलिकाश्चेति द्विविधा बहिर्मलजाः । केशादाः लोमादाः लोमद्वीपाः सौरसा औदुम्बरा, जन्तुमातरश्चेति षट्शोणितजाः । अन्त्रादाः, उदरावेष्टाः, हृदयादाश्चुरवो, दर्भपुष्पाः·सौगन्धिकाः, महागुदाश्चेति सप्तकफजाः । ककेरुकाः, मकेरुकाः, लेलिहाः, सशूलकाः, सौसुरादाश्चेति पञ्चपुरीषजाः[2] ।'

सुश्रुते च––

अजवा विजवाः किप्याश्चिप्या गण्डूपदास्तथा ।
चुरवो द्विमुखाश्चैव ज्ञेयाः सप्तपुरीषजाः ।।
दर्भपुष्पा महापुष्पाः प्रलूनाश्चिपिटास्तथा ।
पिपीलिका दारुणाश्च कफकोपसमुद्भवाः ।।
केशरोमनखादाश्च दन्तादाः किक्किशास्तथा ।
कुष्ठजाः सपरीसर्पा ज्ञेयाः शोणितसम्भवाः[3] ।।

एवं चाष्टाङ्गसंग्रहे माधवनिदानेऽष्टाङ्गहृदये च सविस्तरं क्रिमिजन्यरोगाणां वर्णनमुपलभ्यते ।

### ऐन्द्रजालिका रोगानुद्भावयन्ति

इन्द्रजालविद्याविदोऽभिनिर्वर्तयन्त्यामयान् । ते हि मायाविनो भवन्ति । तेषां कृत्यादिभिर्मानवाः व्याधिभिरभिभूयन्ते ।

'तक्मानं सर्वं नाशय सर्वांश्च यातुधान्यः[4]' ।

एकत्र तादृशः सन्दर्भ उपलभ्यते–'यत् मायाविहितषड्यन्त्रप्रभावेण त्वयि क्षेत्रियः (अपस्मारः) समाविष्टः, यस्य प्रतीकारमहं जानामि[5] ।'

---

१. अथर्व० ४।२३।१० ।        २. च० सू० १९।१३ ।
३. सु० सं० उ० ५४ ।        ४. अथर्व० १।२८।४ ।
५. अथर्व० ११।७।६ ।

एवञ्च यथा इन्द्रजालस्तथैवाभिशापः कुदृष्टिर्वा रोगान् जनयति[१], शापो व्याधिकरो भगति । 'दुर्हार्दः संघोरं चक्षुः पापकृत्वानमागमम्'[२] । एतेन दुश्चक्षुरपि रोगकरंभवतीत्युक्तम् ।

कौशिकसूत्रे च बहूनां क्लेशप्रदानामैन्द्रजालिकजन्यानां रोगाणां निवारण-प्रकारो वर्णितः[३] । तत्र च तादृशा रोगा वर्णिताः, ये खलुशापाज्जाताः । ब्रह्म-गवीपद्येषु ब्राह्मणातिक्रमणजन्यानां भार्या-विभवादिहानिकराणां भविष्यतां व्याधीनां वर्णनमुपलभ्यते । तत्र च नानाविधानां व्याधिजन्यविपत्तीनां वर्णनमास्ते, ये रोगाः शापाभिद्रोहजन्या भवन्ति ।

एवञ्च भूतविद्यासम्बन्धिरोगाणां निदानत्वेन वातादयो दोषाः, रजस्तमसी मानसो दोषो, कृत्याभिशापरक्षःपितृपिशाचादिप्रकोपः, गुरुवृद्धसिद्धाचार्यादीनामभि-धर्षणम्, पूर्वजन्मकृतं दुष्कर्म, अधर्माचारः, सूर्यादिग्रहाणम्, बालग्रहाणाञ्च कोपः, भूतादीनामावेशः, विविधाश्च कृमिजातयः, अनेके चागन्तुका हेतवो सन्तीति नातिसंक्षेपविस्तरेण सर्वमत्रोपवर्णितम् । अग्रे च यथास्ववर्णनप्रसंङ्गे वर्णयिष्यते ।

## निदानभूता आहाराः

रजस्तमोभ्यामुपहतचेतसश्चावरसत्त्वा जना यदा काम[४]-क्रोध-लोभ-मोहेर्ष्या-ह्री-शोक-भय-चिन्तोद्वेगोपतप्ता "[५]अष्टावाहारविधिविशेषायतनान्यं[६] परि-गणय्य मोहात् प्रमादाद्वाऽऽत्मानमनभिसमीक्ष्यानुष्ण[७]मस्निग्धममात्रावदजीर्णे विरु-द्धवीर्यसमलविकृतमुपहितमन्नं हीनमधिकमात्रं वा सेवन्ते, दोष-देश-काल-बल-शरीराहार-सात्म्य-वयसामवस्थान्तराण्यविचार्य अनुचितान्याहारजातानि[८] वैषम्य-युक्तेनोपयोगविधिनोपयुञ्जन्ते, तदाभ्युदीर्णा दोषाः प्रवणत्वं भजन्ते, दूषयन्ति च मनोवहानि स्रोतांसि, जयन्ति च विविधान् मानसामयान् ।

यदा च मांस[९]-मधु-तिल-गुड-मद्योच्छिष्टमुपयुङ्क्ते, कट्वम्ललवणतीक्ष्णा-त्युष्णरूक्षविदाहीनि[१०] अशितपीतलीढखादितानि निषेवते, गतरसं, पूति, पर्युषित-ममेध्यं, यातयाममुच्छिष्टमन्नपानमाहरति गरदुष्टमन्नपानं[११] सेवते, चाण्डालादि-स्पृष्टमश्नाति, विरुद्धवीर्यमन्नमासेवते[१२] तदा च मनोवहानि स्रोतांस्यधिष्ठायोदीर्णा दोषा जनयन्ति मनोविकारान् तथा च--

षाण्ढ्यान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम् ।
मूर्च्छामदाध्मानगलामयानां पाण्ड्वामयस्यामविषस्य चैव ।।

---

१. अथ० वे० ५।१९।२३ ।
२. तत्रैव—१९।३५।३ ।
३. कौ० ११।७।१ ।
४. कौ० सू० ४।१८।१९ ।
५. च० वि०--२।११ ।
६. च० वि०--१।२५ ।
७. च० वि० १।३६ ।
८. च० वि० ७।४ ।
९. च० नि० ७।१७ ।
१०. श्रीमद्भगवद्गीता–१७।९।१० ।
११. मा० नि० उन्मादनि० ।
१२. च० सू० २६।८९।१०९ ।

किलासकुष्ठग्रहणीगदानां शोषास्रपित्तज्वरपीनसानाम् ।
सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम्[१] ॥

## निदानभूतो विहारः

भूतविद्यासम्बन्धिव्याधीनामाक्रमणञ्च भयत्रासशोकाद्युपतप्तानामवरसत्त्वानां भीरूणामुपक्लिष्टसत्त्वानामुपर्येव जायते। वैषम्येन च दिनचर्या[२]-रात्रिचर्या-ऋतुचर्याणामुपसेवनम्, वैषम्येन शरीरचेष्टानिर्वर्तनम्, कायवाङ्मनोभिर्हिंसास्तेय-पैशुन्यपरुषानृतंवर्तनम्, देवगोविप्रवृद्धवैद्यतिरस्कारः,अनातपत्रपदत्राणपदातिगमनम्, बाहुभ्यां नदीसंतरणम्, देहवाक्चेतसामतिशयश्रमः, प्राणिवधस्थानाटवीश्मशान-शून्यगृहवासः, शिरसाऽतिभारवहनम्, चैत्यचत्वरचतुष्पथसुरालयेषु एकाकीगमनम्, धर्मार्थकामानां विरोधेन सेवनम्, हीनानार्यजनसेवा, शत्रु-सत्र-गणाकीर्णपणिका-गणिकाशनम्, सन्ध्यावेलयां भोजनम्, स्वप्नमध्ययनं स्त्रीसेवनं वा, पर्वसु, निषिद्धतिथिषु वा मिथुनीभावः, विधिमुत्सृज्याप्रशस्तामेध्यातुरानिष्टरूपाचार-स्त्रीसेवनम्, सलिलौषधद्विजगुरुसुरालयेषु व्यवायसेवनम्, पादयोर्मलायनेषु च वैमल्याभावः, अविनींतावृद्धिजनसंगः, अमर्षः, प्राणिषु द्वेषः, पतितस्त्रीमित्रभृत्यसा-हचर्यम्, रात्रौ, श्मशानघातनचत्वरनिवासः, गिरिविषममस्तकानुचरणम्, अनास्तीर्णासमानुपहितशयनम्, जलौघवेगावगाहनम्, परदाराभिलाषः, परस्वाप-हरणेच्छा, परदोषानुकीर्तनम्, साहसातिस्वप्नातिजागरणातिनानातिपानानि, अना-र्याश्रयणम्, गुरुवृद्धातिथितिरस्कारः, वैमनस्यम्, मद्यद्यूतवेश्याप्रसङ्गरुचिः, दीर्घ-सूत्रता, हर्षविषादातियोगः, सर्वविश्रम्भः, सर्वाभिशङ्का, ब्रह्मचर्यदानमैत्रीकरुणा-परित्यागः, बालवृद्धलुब्धमूर्खली बसख्यम्, अभिचारकर्मपूज्यपूजाध्ययनेष्व-शुचित्वमित्येवमादयो विहारा भूतविद्यामयानाविर्भावयन्ति।

## निदानभूत आचारः

अधार्मिकजनसंगतिः, गुरुवृद्धसिद्धाचार्येष्वविनयः शुभेतराचारः, पूज्यमंगला-वमाननम्, पूज्यपूजाव्यतिक्रमः, मद्यद्यूतवेश्याप्रसंगासक्तिः, स्वजनानुरक्तकृच्छ्रस-हायजनबहिष्कारः, मनसश्चञ्चलत्वम्, असात्म्येन्द्रियार्थसंयोगः, अतिदीर्घसूत्रता, दुःखहेतुशीलाचारोपचारः, गोविप्रपरिवादः, तन्त्राभिचारकर्मणां[३] वैषम्येण विधिनोपयोगः, ध्यानायासोद्वेगातिसेवनम्, दिनर्तुरात्रिचर्याणां मिथ्योपयोगः, नृशं-साभिप्रायः, बलिमंगलहोमोपहारादिप्रयोगाणां वैगुण्यम्, नियमव्रतादिभंगः, वमना-दिपञ्चकर्मणां मिथ्यातिहीनयोगः, द्विजगुरुसुरयतिपूज्याभिधर्षणम्, सन्ध्यावेलायां निशि वा सूनाटवीचैत्यश्मशानाभिगमनम्, रजस्वलाभिगमनमित्यादयश्च कदा-चारा भूतविद्यामयानामायतनानि भवन्ति।

---

१. च० सू० २६।१०८।१०९।

२. अष्टाङ्गहृ० सू० २ तथा च० सू० ६ एवं सु० सं० ४६।

३. च० नि० ७।

वितथभाषणम्, क्रोधः, आस्यासुखम्, धैर्यदानतपोविरतिः, जपशौचराहित्यम्, क्रौर्यम्, कार्यकालातिपातः, क्रियातियोगः, अहंकारः, देशकाल-स्वभावानवबोधः, अजितेन्द्रियत्वम्, धर्मशास्त्र वृद्धास्तिकजनावमाननम्, रजस्तमोभ्यामुपहतचित्तत्वम्, शारीरमानसदोषोच्छ्रयः, एवमादयश्च भावा भवन्ति कारणानि मानस-व्याधीनाम् ।

अथ च या स्त्री[१] त्यक्तधर्ममंगालाचारशौचदेवक्रिया, गोविप्रद्वेषिणी, दुराचा-राऽहंकृता, मांस-हिंसा-निद्रा-मैथुनप्रिया, दन्दशूका, वावदूका, विगतसाध्वसाऽनृत-वादिनी, सर्वाशिनी, पथ्यवचनाशनत्यागिनी, भर्तरि प्रतीपा, पुत्रेषु निःस्नेहा, नित्यशपथा, श्वसुरननान्दादेवरानवमन्यते, या चैषाममंगलवादिनी, शान्ति-होम-जप-दान-बलि-स्वस्त्ययनवर्जिता, सा जातहारिण्या ग्रस्यते । अन्ये च भूतविद्यास-म्बन्धिव्याधय एभिरेवानाचारैः प्रवर्तन्ते ।

**प्रज्ञापराधः**

प्रज्ञायतेऽनया इति प्रज्ञा ( ज्ञाऽवबोधने ) बुद्धिः । तथा च–

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः[२] ॥

तस्याः अपराधः प्रज्ञापराधः । बुद्धिर्हि सर्वमेव वस्तु यथाभूतं पश्यति । समदर्शनं हि बुद्धेर्वैशिष्टचम् । यदा च बुद्धिर्विषमम्-उचितम्-अनुचितम्, नित्यम्-अनित्यम्, हितम्-अहितम् यद्वा अनुचितम्-उचितम्-अनित्यम्, नित्यम्, अहितम् हितं विजानाति, वैषम्येण च प्रवर्तयते तदा ह्यथाभूतत्वेनाध्यवसानं 'प्रज्ञापराधः[३]' इत्युच्यते । प्रज्ञायाश्च धीधृतिस्मृतयस्त्रयो भेदाः । तासाञ्चा अपराधः ( विभ्रंशः ) दुःखकारणं भवति । यथा चाह—

धी-धृति-स्मृतिविभ्रंशः सम्प्राप्तिः कालकर्मणाम् ।
असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतव[४] ॥

अन्यत्र च बुद्धेर्हीनमिथ्यातियोगाः[५] रोगकारणत्वेनोद्भाविताः । कर्मजव्या-धीनामपि च प्रज्ञापराधजन्यत्वमुक्तम्—

---

१. का० सं० क० स्या० रेवती कल्पः ।

२. अमरकोषः १।५।१ .

३. बुद्धया विषमविज्ञानं विषमं च प्रवर्तनम् ।
प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत् ॥ ( च० शा० १।१०९ )

४. च० शा० १।९८ ।

५. कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च ।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ (च० सू० १।५४।

प्रज्ञापारधात् संभूते व्याधौ कर्मज आत्मनः ।
नाभिशंसेद्बुधो देवान्न पितॄन्न च राक्षसान्[1] ॥
आत्मानमेव मन्येत कर्तारं सुखदुःखयोः ।
तस्माच्छ्रेयस्करं मार्गं प्रतिपद्येत नो त्रसेत् ॥ (च० नि० ७।२५)

अथ च—'तस्य मूलमधर्मस्तन्मूलं चासत्कर्म पूर्वकृतम् । तयोर्योनिः प्रज्ञापराध एव'[2] । असात्म्येन्द्रियार्थसंयोगोऽपि प्रज्ञापराध एवापतति, यथा चोक्तम्—

'प्रज्ञापराधादहितानर्थान् पञ्च निषेवते[3] ।'

तथापि प्रत्यासन्नकारणत्वात् पृथगुपात्तः सामान्यतश्च प्रज्ञापराधः-कायवाङ्मनःक्रियापराधे[4] वर्तते । तथा हि बुद्धेर्हीनयोगे कायवाङ्मनसां सर्वात्मना प्रवृत्त्यभावो वा भवति । यथा च कफजोन्मादे –

सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि संप्रदुष्टः ।
बुद्धिं स्मृतिं चाप्युपहत्य चित्तं प्रमोहयन् संजनयेद्विकारम्[5] ॥

अत्र हि-बुद्धि-स्मृति-चित्तविक्षेपाच्च शरीरवाङ्मनःप्रवृत्त्यभावो लक्ष्यते । [6]चरकोक्तलक्षणेषु च 'स्थानमेकदेशे' इति शारीरो हीनयोगः, 'तूष्णीं भावः' इति वाग्हीनयोगः 'रहस्कामता' इति मनोहीनयोगः प्रदर्शितो वर्तते ।

एवञ्च समंपश्या बुद्धिर्यदा हिताहितेषु भावेषु विषमाभिनिवेशं कुरुते, तदा शरीरवाङ्मनसां मिथ्यायोगा भवन्ति । [7]अधार्यवेगधारण-धारणीयवेगोदीरण-विषमस्खलन-विषमपतन-विषमाङ्गप्रणिधानाङ्गमर्दनप्रहारा बाह्यसाधनेन निःश्वासावरोधः-व्रतोपवासादिभिश्च शरीरसंक्लेशनादिभिर्मिथ्यायोगः शरीरस्य । पैशुन्य-अनृत-कलह-अप्रिय-असम्बद्धवचन-प्रतिकूल-वचन-परुषवचनादयश्च वाङ्मिथ्यायोगाः, भयशोकचिन्तोद्वेगक्रोधलोभमोहमानेर्ष्यादिर्मानसो मिथ्यायोगः । अथ च कायवाङ्मनसामतिप्रवृत्तिरतियोग इत्युच्यते ।

तथा हि—हीनयोगातियोगमिथ्यायोगरूपं[8] कायवाङ्मानसं त्रिविधं कर्मप्रज्ञापराधो भवतीति । प्रज्ञापराध[9] एव समेषामेव व्याधीनाम्मूलं कारणम् आगन्तुकोन्मादे तथान्येषु[10] च व्याधिषु प्रज्ञापराधस्य[11] हेतुत्वमङ्गीकृतमाचार्यैः ।

प्रज्ञापराधस्य परिभाषा--बुद्धिविभ्रष्टः, धृतिविभ्रष्टः, स्मृतिविभ्रष्टश्च जनो यत् किमपि दुःखोदर्कं कर्म समाचरति, तदेव प्रज्ञापराध[12] इति व्यवस्येत् ।

---

१. च० नि० ७।२४ । २. च० वि० ३ ।
३. च० सू० २८।३९ । ४. च० सू० ११५४ चक्रपाणिः ।
५. मा० नि० उ० । ६. च० नि० ७।९ । ७. च० सू० ११।३९ ।
८. 'इति त्रिविधविकल्पं त्रिविधमेव कर्मप्रज्ञापराध इति व्यवस्येत्' (च० सू० ११।४१ ।)
९. च० शा० १।१०८ । १०. च० नि० ७।१३ ।
११. च० सू० ११।४३ । १२. च० शा० १।९९ ।

**बुद्धिविभ्रंशः**—कार्याकार्यं-हिताहित-शुभाशुभ-नित्यानित्य-सुखासुखभावेषु वैषम्यबुद्धिरयथाभूतत्वेनाध्यवसानम् बुद्धिविभ्रंश इत्युच्यते। यथा—पैत्तिकोन्मादे-अमर्षसंरम्भविनग्नभावाः[१], सन्तर्जनाभिद्रवणरोषाः, शस्त्रलोष्टकशाकाष्ठ-मुष्ट्यादिभिर्हननं स्वेषां परेषां वा। वातिकोन्मादे-परिसरणमजस्रम्[२], यानमयानैः अलङ्करणमनङ्गारिकैर्द्रव्यैः, अभीक्ष्णं स्मितहसितनृत्यगीतवादित्रप्रयोगाश्चास्थाने एवमादि चान्यानि लक्षणानि।

**धृतिविभ्रंशः**[३]—धृञ् धारणे ( भ्वा० उ० अ० ) क्तिन् ( ३।३।९४ ) धृतिः। 'धृतिर्धारणधैर्ययोः' इत्यमरः। धृतिः किलाकार्यप्रसक्तं मनो निवर्तयति, मनसो नियमनं विदधाति। यदा च धृतिरहितादर्थान्मनो निवर्तनेऽक्षमा भवति, विषयेषु समासक्तं मनो न निगृह्णाति, तदा हि 'धृतिविभ्रंशः' इति ज्ञेयः। यदा मनो नियमनं कर्तुमशक्ता धृतिः स्वकर्मविभ्रष्टा भवति, तदा धृतिविभ्रंश इत्युच्यते। यथा अपस्माररोगे[४]-धृतिसंप्लवमुद्दिश्यैव जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च स्थानेभ्योऽपस्मारिणो रक्षोपदेश उपदिष्टः। यथा च कफजापस्मारे[५] चिराच्च संज्ञां प्रतिलभमानम्, उत्पतन्तम्, लालामुद्वमन्तं श्लेष्मणापस्मरन्तं विद्यादिति। पैत्तिकेऽपस्मारे क्षणेन संज्ञां प्रतिलभमानम्, अनुकूजन्तं, आस्फालयन्तं भूमिम् इत्यादिस्थले धृतिविभ्रंशो लक्ष्यते। वातापस्मारे[६] च असाम्ना विलपनम्, सततमक्ष्णोर्वैकृतम्, अनवस्थितसक्थिपाणिपादमित्यादिलक्षणैर्वातिनापस्मरन्तं विद्यात्। एवञ्च धृतिनियमनविभ्रंशे विविधाः शारीरा मानसा वाऽऽमया भवन्ति।

**स्मृतिविभ्रंशः**—स्मृतिः खलु स्मर्तव्यविषयेषु मनसः प्रणिधानादुपजायते। सतामुपासनेन[७], असतां परिवर्जनेन ब्रह्मचर्योपवासशौचसन्तोषतपःस्वाध्यायेश्वर-प्रणिधानधर्मशास्त्राध्ययनादिभिः, विषयविरागविजनरतिमोक्षोदयनधृत्यादि-भिश्च स्मृतिरुपजायते। आत्मादीनाञ्च यथाभूतानुस्मरणम्, आत्मा शरीराद्यनुप-कार्यः शरीरादयश्च तदधीनभावा इत्यादिकस्मरणरूपा स्मृतिस्तत्त्वस्मृतिरुच्यते। तत्त्वस्मृत्युदयाच्च भावानां स्वभावमनुस्मरन् प्राणी दुःखात् प्रमुच्यते। तत्त्वस्मृति-बलेन च महर्षयोऽपुनर्भवत्वमवाप्नुवन्। रजस्तमोभ्यामुपहतचेतसः[८] तत्त्वज्ञाने ( आत्मादीनां यथा भूतार्थज्ञाने ) स्मृतिर्भ्रश्यते, स किल स्मृतिविभ्रंश इत्युच्यते। सात्त्विकैराप्तजनैः स्मर्तव्यत्वेन तत्त्वज्ञानस्य स्मरणं विधीयते। रजोमोहावृतात्मनः स्मृत्यपराधात् स्मर्तव्यस्य यदस्मरणम्, तत् "स्मृतिविभ्रंशः" इति विद्यात्।

---

१. च० नि० ७।७। २. च० शा० १।१००।
३. च० चि० १०।६६। ४. च० नि० ८।१०।
५. तत्रैव ८।९। ६. तत्रैव ८।८।
७. च० शा० १।१४३-१४४; १४७। ८. तत्रैव १।१०१।

तथा च धीधृतिस्मृतिविभ्रष्टो[1] जनोऽधार्यान् वातविण्मूत्रक्षवतृट्क्षुधानिद्राकासश्रमश्वासजृम्भाश्रुछर्दिरेतोवेगान् धारयति[2], धार्यांश्चानिष्टफलान् मनोवाक्कायव्यापार-साहस-लोभ-शोक-भय-क्रोध-मानेर्ष्यातिरागाभिध्या-सूचकानृत-वचनादिवेगानुदीरयति। नारींश्चातिसेवते। गुरुवृद्धसिद्धर्षिपूज्यान्यवमत्याहितान्याचरति। शब्दादीनामसात्म्यसंयोगमाचरति। न चाचारमाद्रियते। विनयमवमनुते। तादात्विकेषु सुखेषु रमते। परिणतिमनवधार्यैवाहितान् भावान् निषेवते। पापं कर्म समाचरति। देवर्षि-पितृ-गन्धर्व-यक्ष-राक्षस-पिशाचादीन् तिरस्करोति। द्विज-गुरु-सुर-यतीनामभिधर्षणं करोति। [3]औन्मादिकांश्चायतनानि निषेवते। सन्ध्यावेलायां निशीथे वा दुरधिगमदेशेषु सञ्चरति। पतितजनैश्च मैत्रीं करोति। नाग्निमुपचरति। न च प्रशस्ता ओषधीर्धारयति। अनवसरे परुषाहितममितं भाषते। [4]सद्वृत्तोदितांश्चाचारान् न समाचरति, रजोमोहावृतचेताश्च विविधं निन्दितं कर्म समाचरति। तत्सर्वं दोषप्रकोपणं नानाव्याधिकारणञ्च भवति।

एवञ्च प्रज्ञापराध एव प्राधान्येन भूतविद्यासम्बन्धिरोगाणां कारणतामवलम्बत इति प्रतिपादितम्।

## भूतविद्या रोगोत्पत्तौ कर्मणो कारणता—

आयुर्वेदशास्त्रे हि रजस्तमोभ्यामनुबद्धं[5] मनः, नियतविपाकं बलवच्च कर्म, शरीरधारणे धर्माधर्मक्रियाप्रवृत्तौ च कारणत्वेनाम्नातम्। पौर्वदेहिकं[6] कर्म जन्मान्तरमनुव्रजति, कर्मफलोपभोगार्थश्च जन्मान्तरकृतं पापं कर्म व्याधिरूपेण बाधते। तथा च—

'न हि कर्म महत् किञ्चित् फलं यस्य न भुज्यते[7]।'

'ब्रह्मस्त्रीसज्जनवधपरस्वहरणादिभिः।

कर्मभिः ... ... ... ॥[8]

रोगहेतुप्रज्ञापराधासात्म्येन्द्रियार्थसंयोगं विनाऽपि पूर्वजन्मकृताशक्यपरिहारकालयुक्तदैवस्यावश्यं रोगकारणता भवति—

'जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम्[9]'

एतेन च बलवद्दैवमवश्यं व्याधिं जनयतीति सिद्धयति। अत्युत्कटस्य च पापकर्मण इहैव जन्मनि फलभोगार्थमपि रोगा भवन्ति। अत एव च वाग्भटाचार्येण व्याधेस्त्रैविध्यं वर्णितम्—

---

१. तत्रैव—१।१०२-१०८।
२. अ० हृ० सू० ४।
३. च० नि० ७।१७।
४. च० सू० ८, अ० हृ० सू० २।
५. च० शा० २।३८।
६. निर्दिष्टं दैवशब्देन कर्म यत्पौर्वदेहिकम्।
हेतुस्तदपि कालेन रोगाणामुपलभ्यते॥ (च० शा०, १।११६)
७. च० शा० १।११७।
८. सु० सं० नि० ५।२९।
९. च० शा० २।४३।

'दृष्टापचारजः कश्चित् कश्चित् पूर्वापराधजः।
तत्संकराद् भवत्यन्यो व्याधिरेवं त्रिधा मतः[१]॥

व्याधिसमुद्देशीयप्रकरणे[२] च षष्ठं दैवबलप्रवृत्तं व्याधिभेदं निर्दिशन्नेवमाह देवगोगुरुसिद्धर्षीणां द्रोहाद् देवाद्याक्रोशजाः, उपसर्गाभिशापाभिचाराभिषङ्गजाः, अथर्ववेदविहिताभिचारिकमन्त्रैः कृताः मारणात्मकाः। ताश्च व्याधयो द्विधा भवन्ति विद्युत्कृताः (तिर्यक्पतन्ती वह्निरूपाः) अशनिरूपाः (अधः पतनशीला मारणात्मिकाः) पुनश्च द्विविधाः-देवादिद्रोहकजनसंपर्कजा आकस्मिकाश्च। स्मृतिग्रन्थेष्वपि[३] पूर्वजन्मकृतपापकर्मणां व्याधिजनकत्वं वर्णितम्। पुराणेष्वपि कर्मफलस्य कर्मविपाकस्य च वर्णनमुपलभ्यते। ज्योतिषशास्त्रे च बहुषु ग्रन्थेषु कर्मफलरूपेण तत्तद्रोगाणां वर्णनं कृतमास्ते।

'महापातकजा रोगाः सप्तजन्मसु जायन्ते[४] ···'
'पापं कर्म च कुर्वताम्[५]' ··· ··· ॥

'पितृहा चेतनाहीनो भवति, भ्रातृहा मूकः, धूर्तः अपस्मारी, गर्भपातकर्ता च जलोदरी भवति[६]।'

'अधर्मस्य कारणं पूर्वजन्मकृतमसत्कर्म[७]'। ये च धर्महीना[८] गुरुवृद्धसिद्धर्षिपूज्यान् तिरस्कृत्याहितान्याचरन्ति, ते गुर्वादिभिरभिशप्ता भवन्ति, इत्यादि। तथा च—

'यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषसमन्वितो भवत्युन्मादस्तमागन्तुमाचक्षते। केचित्पुनस्तस्य निमित्तं पूर्वकृतं कर्माप्रशस्तमिच्छन्ति[९]।'

'पापस्य कर्मणः समारम्भे, पूर्वकृतस्य वा कर्मणः परिणामकाले, विगुणो वाऽध्ययनबलिमंगलहोमप्रयोगे···द्विजगुरुसुरयतिपूज्याभिधर्षणे वा, धर्मव्याख्यानव्यतिक्रमे वा, अन्यस्य वा कर्मणोऽप्रशस्तस्यारम्भे इत्यभिघातकाला व्याख्याता भवन्ति[१०]।'

प्रज्ञापराधात्सम्प्राप्ते व्याधौ कर्मज आत्मनः।
नाभिशंसेद् बुधो देवान्न पितॄन्नापि राक्षसान्[११]॥

---

१. अ० हृ० सू० १२।५६-५७। २. सु० सं० सू० २४।७।
३. शातातपस्मृतिः २।९०, मनुस्मृतिः ११। ४. शाता० स्मृ० ११।१-१०।
५. च० चि० १३।१५। ६. शाता० स्मृ० ३।४।
७. च० वि० ३।२४।
८. च० वि० ३।२७ एवं च 'अकर्मतश्च साध्यत्वं कश्चिद्रोगोऽतिवर्तते' (वि० नि० २।२२) तत्राकर्मतः अधर्मादिति चक्रपाणिः।
९. च० नि० ७।१३। १०. च० नि० ७।१७।
११. तत्रैव ७।२४।

या[1] च स्त्रीधर्ममंगलाचारशौचहीना दुराचारा वैरकलिहिंसामैथुनप्रिया चण्डा पथ्यवचनत्यागिनी महतोऽवमन्यते शान्तिकर्महोमबलिस्वस्त्ययनपरिवर्जिता साऽशुभकर्मपरिगता रेवती ( जातहारिणी ) ग्रहेण गृहीता भवति ।

गोवध[2]-उष्ट्रवध-महिषीवधांगभेदकारिणं जातहारिणी सन्तानबाधां करोति । ब्रह्मस्वहारिणां दुरात्मनां तस्कराणां शठानां प्रजा उग्ररेवती हन्ति । ये च पापकार्यरताः कुलमर्यादाभेदका नीतिविपथगामिनो निर्दया अविनयाचारा अधर्मप्रवर्तका गोविप्रघातकास्तेषां प्रजा जातहारिणी हन्ति । यश्च वणिक् पण्योपघातं करोति, यश्च कुसीदलुब्धोऽतिवार्धुषिको भवति, स बहुरूपया जातहारिण्या हन्यते ।

पूज्यपूजाव्यतिक्रमाच्चोन्मादो[3] जायते । लुप्तधर्मव्रताचारं[4] भिन्नमर्यादमशुचिं पापाचारमात्मोपघातिनं देवादयो घ्नन्ति । तथा च भूतविज्ञानाध्याये वाग्भटः—

छिद्रं पापक्रियारम्भः पाकोऽनिष्टस्य कर्मणः ।
एकस्य शून्येऽवस्थानं श्मशानादिषु वा निशि ।।
दिग्वासस्त्वं गुरोर्निन्दा रतेरविधिसेवनम् ।
अशुचेर्देवतार्चादि परसूतकसंकरः ।।
होममन्त्रबलीज्यानां विगुणं परिकर्म च ।
समासाद्दिनचर्यादिप्रोक्ताचारव्यतिक्रम[5]: ।।

सप्तसु[6] च व्याधिभेदेषु आदिबलप्रवृत्तस्य, जन्मबलप्रवृत्तस्य, दैवबलप्रवृत्तस्य च' कर्मणाऽनुस्यूतत्वमस्त्येवेति ।

## भूतविद्यासम्बन्धिरोगाणां वर्गीकरणम्—

सुश्रुताचार्येण समेषामामयानामधोनिर्दिष्टदिशा विभागो विहितः । 'तच्च दुःखं त्रिविधम् । आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकमिति । तत्तु सप्तविधे व्याधावुपनिपतति । ते पुनः सप्तविधा व्याधयः, तद्यथा-आदिबलप्रवृत्ताः, दोषबलप्रवृत्ताः, संघातबलप्रवृत्ताः, कालबलप्रवृत्ताः, दैवबलप्रवृत्ताः, स्वभावबलप्रवृत्ताश्चेति ।

तत्र आदिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शः- प्रभृतयः, तेऽपि द्विविधा मातृजाः पितृजाश्च । जन्मबलप्रवृत्ता ये मातुरपचारात् पंगुजात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते, तेऽपि द्विविधाः—रसकृताः, दौहृदापचार-

---

१. काश्यप० रेवतीकल्प० १४-२१ ।
२. अ० हृ० उ० ६।३ ।
३. अ० हृ० उ० ४।५ ।
४. तदेव ।
५ अ० हृ० उ० ४।६-८ ।
६. सु० सं० सू० २४ ।

कृताश्च । दोषबलप्रवृत्ता ये आतंकसमुत्पन्ना मिथ्याहाराचारकृताश्च, तेऽपि द्विविधा आमाशयसमुत्थाः पक्वाशयसमुत्थाश्च । पुनश्च द्विविधाः—शारीरा मानसाश्च । त एते आध्यात्मिकाः ।

संघातबलप्रवृत्ता ये आगन्तवो दुर्बलस्य बलवद्विग्रहात्, तेऽपि द्विविधाः—शस्त्रकृताः, व्यालकृताश्च । एते आधिभौतिकाः । कालबलप्रवृत्ता ये शीतोष्णवातवर्षातपप्रभृतिनिमित्ताः, तेऽपि द्विविधाः—व्यापन्नऋतुकृताः, अव्यापन्नऋतुकृताश्च । दैवबलप्रवृत्ता ये देवद्रोहादभिशप्तका अथर्वणकृता उपसर्गजाश्च, तेऽपि द्विविधाः--विद्युदशनिकृताः, पिशाचादिकृताश्च । पुनश्च द्विविधा संसर्गजा आकस्मिकाश्च । स्वभावबलप्रवृत्ता ये क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः, तेऽपि द्विविधाः-कालजाः, अकालजाश्च । तत्र परिरक्षणकृताः कालजाः, अपरिरक्षणकृता अकालजाः । एते आधिदैविकाः । अत्र सर्वव्याध्यवरोधः[१] ।'

इदं वर्गीकरणं 'भूतविद्या' रोगविज्ञानस्य मूलस्रोतः । अवधानदानेन सूक्ष्मनिरीक्षणेन चास्य वर्गीकरणस्येदं तथ्यं प्रत्यक्षीभवति, यद् भूतविद्याङ्गमेकं स्वतन्त्राङ्गमायुर्वेदस्य, तदिदमङ्गं मानसामयसादृश्येऽपि पृथगस्तित्वमाकलयति निदानौषधयोर्वैशेष्यात् ।

सुश्रुतसंहिताधारेण[२] भूतविद्यासम्बन्धिरोगाणां वर्गीकरणं १८९ पृष्ठे द्रष्टव्यम्—

अत्र चाचार्यवरेण मानसा व्याधय आध्यात्मिककोटौ परिगणिताः । भूतविद्याङ्गपरिगृहीताश्चामया आधिदैविककोटौ परिगणिताः, एवञ्च आधुनिकैर्मानसशास्त्रविशारदैरपि मानसरोगाणां द्वैविध्यमङ्गीकृतम् । एके मनःशरीरोभयसम्भवा, अपरे मानसा इति ।

तथा च दोषबलप्रवृत्ताः शरीररचनाविकारेण शरीरक्रियाविकृत्या वा जायमाना रोगाः सुश्रुताचार्येण खलु आध्यात्मिकवर्गे गृहीताः । एतद्भिन्ना अपरिलक्ष्यशारीररचना शारीरक्रियाविकृतिव्याधयोऽतिसूक्ष्ममानसक्षेत्रजा आधिदैविकवर्गे गृहीता भवन्ति ।

तथा हि सप्तविधे व्याधौ भूतविद्यासम्बधिव्याधीनां कतमस्मिन् व्याध्यधिकरणे समावेशो भवतीति ।

---

१. सु० सं० सू० २४ ।

२. 'तद्दुःखसंयोगा व्याधय उच्यन्ते ।' तत्र डल्हणः-'तच्छब्देनानन्तरनिर्दिष्टः पुरुषोऽधिक्रियते, दुःखं कायवाङ्मानसी पीडा, विविधं दुःखमादधातीति व्याधयः, तस्य पुरुषस्य दुःखाय संयोगो येषामागन्तुप्रभृतीनां ते व्याधय अथवा तस्य पुरुषस्य येषु सत्सु यैर्वा करणभूतैः, येभ्यो वा दुःखं जायते, ते व्याधयः ।' (सु० सं० सू० १।२३)


व्याधिः
आध्यात्मिकः
आधिभौतिकः
आधिदैविकः
आदिबलप्रवृत्तः
जन्मबलप्रवृत्तः
दोषबलप्रवृत्तः
संघातबलप्रवृत्तः
मातृजः
पितृजः
रसकृतः
दौहृदापचारकृतः
शारीरः
मानसः
शस्त्रकृतः
व्यालकृतः
शुक्रशोणितदोषजाः
पङ्गुः
आगन्तुजः
कुष्ठः
उरः क्षतादिः
जात्यन्धः
आमाशयसमुत्थः
पक्वाशयसमुत्थः
सर्पकीटदंशः
अर्शः
वधिरः
अलर्कः
प्रमेह
मूकः
अस्थिभग्नादयः
क्षयप्रभृतिः
मिन्मिनः
वामनः
कालबलप्रवृत्ताः
दैवबलप्रवृत्ताः
स्वभावबलप्रवृत्ताः
व्यापन्नऋतुकृताः
अव्यापन्नऋतुकृताः
विद्युदशनिकृताः
पिशाचादिकृताः
कालजाः (परिरक्षणकृताः)
अकालजाः (अपरिरक्षणकृताः)
ज्वरादयः
ज्वरादयः
संसर्गजाः
आकस्मिकाः
क्षुधा
पिपासा
देवद्रोहकृताः
जरा
देवाभिशापजाः
निद्रा
अथर्वणकृतमारणादयः
उपसर्गजाः
मृत्युः

आयुर्वेदनये शरीरं मनश्चोभयं व्याध्याश्रयमाख्यातम्[१]। तत्रापि मन एव प्राधान्येन वेदनानामधिष्ठानम्। अत एव चायुर्वेदशास्त्रस्याधिकरण-प्रस्तावे[२] सर्वतः प्रथमं मन एव निर्दिष्टमास्ते। वेदनाधिष्ठानकथने च मन एव प्रागुपात्तम्। यतो हि सुखे प्राप्तीच्छारूपा, दुःखे दुःखद्वेषरूपा, तृष्णा सर्वदुःखानां कारणत्वेनाम्नाता[३]। सा च तृष्णा मनस्यैवोदेति, मनश्च विषयप्रवृत्तिहेतुर्भवति। देहश्च सेन्द्रिय एव वेदनाधारो भवति। सेन्द्रियग्रहणेन च पुनर्मन एव देहेन्द्रिय-गतत्वेन तदाधारत्वेन प्रतीयमानानां वेदनानामनुभवं करोति। एवं हि सर्वतोभावेन मन एव वेदनानुभूतिमाकलतीति स्पष्टम्। वेदनानामात्यन्तिकनिवृत्तिप्रस्तावे च—

'मनो बुद्धिसमाधानं तत्त्वज्ञानार्थदर्शम्[४] ।। इत्यारभ्य
…………………समूलाः सर्ववेदनाः।'
'ससंज्ञाज्ञानविज्ञाना निर्वृत्तिं यान्त्यशेषतः।'

इत्यन्तं मनःसमाधिसाधनं सत्त्वगुणसमाधानसाधनञ्च वैशद्येन प्रतिपादि-तम्। तेन चेदमध्यवसीयते, यन्मन[५] एव रागादिजनकेषु संसारानुवृत्तिजनकेषु च दुःखेषु प्राधान्येन हेतुर्वर्तते।

अथ च महाप्रकृतिवर्णनप्रस्तावे[६] ब्राह्म-माहेन्द्र-वारुण-कौवेर-गान्धर्व-याम्य-आर्षभेदेन सप्तसात्त्विकाः। आसुर-सार्प-शाकुन-राक्षस-पैशाच-प्रेतसत्त्वभेदेन षड्राजसाः। पाशव-मात्स्य-वानस्पत्यभेदेन च तिस्रः तामसप्रकृतयो चित्तस्य वर्णिताः। यदनुकृतिर्मनसि परिलक्ष्यते यदनुसारेण च प्रकृतिर्जायते, अतस्ता एताश्चित्तप्रकृतय आख्याताः।

एवञ्च मनो यथानूकमपि[७] भवति। तत्रानूकं पूर्वाव्यवहिता जातिः, तेन यत् खलु देवशरीरादागत्य मानवशरीरमभ्येति, तन्मनो देवसत्त्वं, यन्मनः पशुशरी-रादागत्य मानवशरीरमेति, तन्मनः पशुसत्त्वं भवति। तथा च—

जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः।
तेनैवाभ्यासयोगेन तच्चैवाभ्यस्यते पुनः।। इति।

गर्भावस्थायामाकृतिबुद्धिप्रभृतिनिर्माणेऽपि[८] कर्मात्मकं मनः, रजस्तमसी, अनेक-विधञ्च कर्म कारणं भवति।

---

१. 'वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः' (च० शा०, १।१३६)
२. 'सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत्' (च० सू०, १।४६)
३. 'तृष्णा च सर्वदुःखानां कारणं पुनरुच्यते' (च० शा, १।१३४)
४. च० शा० १। १४६-१५४।
५. रजस्तमोभ्यां हि मनोऽनुबद्धं ज्ञानाद्विना तत्र हि सर्वदोषाः।
गतिप्रवृत्त्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म।। (च० शा० २।३८)
६. महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः।
प्रोक्ता लक्षणतः सम्यग्भिषक् ताश्च विभावयेत्।। (सु० सं० शा० ४।९९)
७. 'सत्त्वं यथानूकमपि व्यवस्येत्' (च० शा० २।२७)
८. 'भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमस्तत्र च कर्महेतुः' (च० शा० २।३६)

एवमेव बीजग्रहणकाले[1] मिथुनीभावापन्नयोः पुंसोः शुक्रशोणितसंयोगे स्त्रिया मनो यं प्राणिनमनुध्यायेत, तत्कालीनचिन्तयैव बीजं चिन्त्यमानजन्तुसदृशारम्भकशक्तिकं क्रियते। मानसानाञ्च भावानां भूतविशेषकारणसंयोगे शक्तिविशेषो भवति। एवञ्च मनसि क्षुब्धे मानसा[2] भावा विपर्यसितां व्रजन्ति, तदा च संजायन्ते विविधा भूतोन्मादादयो भूतविद्यासम्बन्धिनो रोगा इति। एवं च रजस्तमोदोषा बलप्रवृत्तत्वाद् भूतविद्यासम्बन्धिरोगा आध्यात्मिकाः समाख्याताः।

सूक्ष्मबुद्ध्या निरीक्षणेन चैतेषामामयानाम् आदिबलप्रवृत्तत्वमपि परिलक्ष्यते। यतो हि शरीरे ये भावाः सम्भवन्ति, तत्र पितरौ[3] कारणौ भवतः। इन्द्रियादीनां वैकृत्ये च जन्मबलप्रवृत्ता मातुरपचाराः[4] कारणीभवन्ति। मातुरपचाराद्धि जात्यन्धमूकमिन्मिनप्रभृतयो जायन्ते।

तथा हि—शुक्रशोणितदोषान्वयत्वात्, मातुरपचारात्, दौहृदापचारात् शरीरस्थवातादिदोष-मानसरजस्तमोदोषजनितत्वाच्च भूतविद्यासम्बन्धव्याधीनाम् आध्यात्मिकत्वमामनन्ति सुश्रुताचार्या इति।

अथर्ववेदे[5] च अपस्मारस्य मातृपितृशरीरादागतत्वमुक्तम्। अस्य चापस्मारस्य संज्ञा 'क्षेत्रियः'[6] इत्यपि। अर्थात् तादृशो व्याधिः यस्य चिकित्सितं पुत्रपौत्रादिशरीरेऽपि क्रियते। तेन चापस्मारस्यादिबलप्रवृत्तत्वं (शुक्रशोणितदोषजनितत्वं) सिद्ध्यति।

अन्यत्र[7] च मातृपितृजसंक्रमणशीलव्याध्यवरोधार्थं संक्रामकरोगग्रस्तकुलेषु विवाहो निषिद्धः। अयञ्च निषेधः पितृभ्यामपत्ये संक्रामकरोग-संक्रमणप्रतिषेधार्थक एवेति।

आदिबलप्रवृत्ता हि व्याधयो पाश्चात्त्यैराधुनिकैश्च[8] चिकित्सकैः स्वीकृताः, यतो हि मातृपितृशरीरात्सन्ततौ प्रसरं लभन्ते। अद्यत्वे च जनता प्रायेण आदिबल-

---

१. 'गर्भोपपत्तौ तु मनः स्त्रियाः यं जन्तुं व्रजेत्तत्सदृशं प्रसूते (च० शा० २।२५)

२. 'भक्तिः-शीलं-शौचं-द्वेषः-स्मृतिर्मोहस्त्यागो-मात्सर्यं-शौर्यं-भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं-मार्दवं-गाम्भीर्यमनवस्थितत्वमित्येवमादयश्चान्ये ते सत्त्वविकाराः' (च० शा०, ३।१९)

३. 'रसात्ममातापितृसम्भवानि भूतानि विद्याद्दशषट् च देहे' (च० शा० २।३३)

४. बीजात्मकर्माशयकालदोषैर्मातुस्तथाहारविहारदोषैः ।
कुर्वन्ति दोषा विविधानि दुष्टा संस्थानवर्णेन्द्रियवैकृतानि ॥ (२।२९)

५. मातृपितृशरीरादागतानां कुष्ठापस्मारग्रहण्यादिरोगाणाम् (अ० वे० २।१।४।५)

६. 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' क्षेत्रियो व्याधिः—(पा० सू० ५।२।९२)

७. हीनक्रियनिष्पुरुषनिश्छन्दोरोमशार्शसम् ।
हृदयामयव्यपस्मारिश्वित्रिकुष्ठकुलानि च ॥ (मनुस्मृतिः—३)

८. An inherited constitution is an important factor as revealed by the high familiar incidence in certain cases'—Price.

हीनैव संलक्ष्यते, तदपत्यानि तथैव हीनसत्त्वानि भवन्ति । अतश्च पित्रोः मानस-दोषादपत्याश्च संतप्यन्ते विविधैर्मानसैर्भूतविद्यासम्बन्धिव्याधिभिरिति, नात्र कश्चन विसंवादः । मानसव्याधीनां[१] कुलजत्वात्तेषाम् आदिबलप्रवृत्तत्वमङ्गीकरणीयमेव । तथा च तेषामाध्यात्मिकत्वम् ।

'दैवबलप्रवृत्तव्याधिषु च भूतविद्यासम्बन्धिरोगाणां परिगणनात्तेषाम् आधिदैविकत्वमपि स्वीक्रियते । तथा हि—

'देवबलप्रवृत्ता ये देवद्रोहादभिशस्तकाः ( ऋषीणामाक्रोशजाः ) अथर्वणकृताः ( अथर्ववेदप्रणीताभिचारिकमन्त्रैः कृताः मारणात्मका व्याधयः ) उपसर्गजाश्च । तेऽपि द्विविधाः—विद्युदशनिकृताः, पिशाचादिकृताश्च । पुनश्च द्विविधाः—संसर्गजाः, आकस्मिकाश्च ।' ( सु० सं० सू० २४७ )

## चिकित्सासूत्रम्

**सर्वेषु ग्रहेषु**—परिषेक[२]ः, अभ्यंगः, घृतप्रयोगः, क्षीरप्रयोगः, धूपनम्, प्रदेहः, औषधिधारणम्, मणिबन्धनम्, बलिनिर्हरणम्, रक्षामन्त्रप्रयोगः, स्नानादिकञ्च विधेयम् । उत्सादनम्, पूजा, होमः, दानम्ः, यज्ञादिकञ्च यथास्वं कर्तव्यम् ।

**उन्मादे[३]–नैजे आगन्तुके च ।**

**निरावरणे वातजे**—स्नेहपानम् । आवृतमार्गे वाजते-सस्नेहं मृदुशोधनम् ।

**पित्तोद्भवे**—स्नेहनं, स्वेदनं, विरेचनम् ।

**कफोद्भवे**— स्निग्धस्विन्नस्य वमनम् ।

**दोषभूयस्त्वे**—यथादोषं वमनं, विरेचनं, निरूहं स्नेहवस्तिं, शिरोविरेचनञ्च पुनः पुनः प्रयुञ्जीत ।

**आगन्तुके**—संशोधनं संशमनञ्च । परिजनमारणाद्यविनये सति तीक्ष्णं नावनमञ्जनञ्च प्रयोज्यम् । मनोबुद्धिदेहसंतर्जनार्थं ताडनमपि कर्तव्यम् ।

**अविनयाधिक्ये**—शून्ये तमोगृहेऽपसारितकाष्ठलोहादिमारणसाधने गृहे पट्टैर्बन्धयित्वा निरोधयेत् । वाचा तर्जनं, राजपुरुषादिभिस्त्रासनं, हर्षणं, सान्त्वनं, विस्मयादयश्च विधेयाः । मनोवुद्धिसंज्ञास्मृतिप्रबोधानार्थाश्च प्रदेहोत्सादनाभ्यङ्गधूमसर्पिःपानस्नानादिकाः क्रियाः प्रयोज्याः ।

---

१. Of remote causes of the liability ( to mental diseases ) in addition to organic disease of the brain, heredity is the most important. ( Price )

२. सु० सं० उ० त० २८-३६ अध्यायाः द्रष्टव्याः ।

३. च० चि० ९।३२।४० ।

**कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवे**--परस्परप्रतिद्वन्द्विभिरेव शमं नयेत्। [1]मन्त्रौषधिमणिमंगलबल्युपहारहोमनियमव्रतोपवासस्वस्त्ययनतीर्थयात्रागमनादीनि च प्रयोज्यानि। बुद्ध्या[2] हिताहितमवेक्ष्यावेक्ष्य धर्मार्थकामानामहितानामननुसेवने हितानां चोपसेवने प्रयतितव्यं, तद्विद्यवृद्धानां चोपसेवने प्रयतितव्यम् आत्मदेशबलकालशक्तिज्ञाने च यतितव्यम्। शास्त्रज्ञानाध्यात्मज्ञानाभ्यां,[3] विषयेभ्यो मनोनिग्रहणेन, अनुभूतार्थस्मरणेन धैर्यादिभिश्चात्मानं नियमयेत्। अद्भुतानि[4] रूपाणि दर्शयेत् भीमाकारैर्नरैर्नागैः सुशिक्षितैश्च निर्विषैर्व्यालैर्भीषयेत्। तृणाग्निना त्रासयेत्, जलेन तर्जयेत्, निर्जले सपिधाने कूपे निवासयेत्।

**सिराव्यधनम्**--उरोपाङ्गललाटेषु च सिराव्यधो विधेयः।

**वस्तिप्रयोगः**—वमनादिना शान्तदोषं स्नेहवस्तिभिरुपाचरेत्।

सर्वेषु चोन्मादेषु चेष्टाप्रापणसान्त्वनाश्वासनादिभिः चित्तप्रसादनं कुर्यात्।

**अपस्मारे**--अत्र[5] च ग्रहोक्तप्रकारेण चिकित्सामाचरेत्। विशेषतश्च पुराणसर्पिषः पानमभ्यंगञ्च कुर्यात्। वमनं त्रिरेचनं शिरोविरेचनञ्च विदध्यात्। रुद्रस्य तद्गणानाञ्च पूजां कुर्वीत। सिद्धार्थकं नाम सर्पिः, पञ्चगव्याख्यञ्च घृतं पाययेत्। उरोपांगललाटजाञ्च सिरां विध्येत्।

**भूतदोषजे चोन्मादे**[6]--रोगिणो वयः, सात्म्यं, दोषं देशं, कालं, बलाबलं, देहं, सत्त्वं प्रकृतिञ्च सम्यगवधार्य, घृतपानं, मन्त्रतन्त्रप्रयोगं, देवादीनामपचितिं, बलिं, उपहारं, यज्ञादिकं, जपं, शौचं, मंगलं, कर्म, अञ्जनं, रत्नौषधधारणं, दानं, व्रतोपवासादिकञ्च समाचरेत्।

**देवर्षिपितृगन्धर्वोन्मत्तेन**--एतान् तीक्ष्णाञ्जनादिक्रूरकर्मभिरुपाचरेत्। ऐतेषां कृते मृदुभैषज्यमाचरेत्। सर्पिष्पानं, पूजां, बल्युपहार-मन्त्रजपशान्तिकर्महोमेष्टिस्वस्त्ययननियमव्रतादि च कारयेत्। अथ च—

भूतानामधिपं देवमीश्वरं जगतः प्रभुम्।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम्॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये।
तेषां पूजां च कुर्वाण उन्मादेभ्यः प्रमुच्यते॥
बलिभिर्मंगलैर्होमैरोषध्यगदधारणैः।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः॥
देवगोब्राह्मणानाञ्च गुरूणां पूजनेन च।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा॥

---

१. च० नि० ७।१९।
२. च० सू० ११।४६।
३. च० सू० ११।५८।
४. सु० सं० उ० त० ६२।
५. सु० सं० उ० त० ६१।
६. च० चि० ९।

**अतत्त्वाभिनिवेशे**[१]—स्निग्धस्विन्नं रोगिणं वमनविरेचनप्रभृतिभिः पञ्चकर्मभिः प्राक् संशोधयेत्। संसर्जनक्रमेण च प्रकृतिभोजनमानयेत्। ततश्च बुद्धिवर्धकैः स्निग्धैः सात्म्यैर्मेध्यैरन्नपानैरुपाचरेत्। रसायनाधिकारोक्तैश्च मेध्यरसायनानि सेव्यानि। अनुरक्ताः शुचयोऽनुकूला आप्ता धर्मार्थवादिनश्च सुहृदः प्रियहितवचनैः मनोज्ञालापैः धैर्याश्वासनचित्तवृत्तिनियमनैश्चैनमुपाचरेयुः।

**गदोद्वेगे**[२]—तर्पणं, पाचनं, वह्निकरं, वातानुलोमनं, पित्तहृन्नातिकफकृच्च भेषजं, रसायनं वातघ्नतैलं घृतानि च प्रयुञ्जीत। हृद्यं, स्निग्धं, लघु चान्नपानं दद्यात्।

**योषापस्मारे**[३]—धातुपोषकमौषधमन्नपानञ्च प्रयोज्यम्। कोष्ठशुद्धिं कुर्यात्। मूर्च्छा चेत्तदा शीततोयेन शिरसि चक्षुषोश्च परिषेचनं कर्तव्यम्। शिरोविरेचनं देयम्। सान्त्वनाश्वासनधैर्योपदेशेन च विक्षुब्धं मनः स्थिरीकुर्यात्। सर्वञ्च मूर्च्छापस्मारभेषजं दद्यात्, प्रियवस्तून्युपाहरेत्।

**तत्त्वोन्मादे**[४]--यद्यत् स्नायुस्थैर्यकरं वातानुलोमनमौषधमन्नपानं तत्तत् प्रयोज्यम्।

**मूर्च्छायां**[५]--शीतजलाभिषेकः, शीतजलावगाहनम्, शीतलप्रलेपः, शीतपानकं, व्यजनानिलसेवनञ्च विधेयम्।

**रक्तजायां मूर्च्छायां**--सर्वशः शीतक्रिया विधेया।

**मद्यजायां**—पीतस्य मद्यस्य वमनं, विषजायाञ्च विषघ्नौषधानि।

**भ्रमे**--दुरालभाक्वाथः पूर्वोक्ताश्च शीतविधयः प्रयोज्याः।

**संन्यासे**[६]—अनेन ग्रस्तः काष्ठीभूतो मृतोपमो भवति, सद्यःफलां क्रियां न कुर्याच्चेद् रोगी प्राणाञ्जह्यात्, अतश्च[७] नेत्रयोरञ्जनं, रसोनस्वरसादिनस्यं, (त्रिकटुवादीनां), सूचीभिरङ्गेषु व्यधनं तप्तलोहशलाकया दाहः, नखान्तरे कण्टकसूच्यादिभिर्पीडा, केशलुञ्चनं, दन्तैर्दशनं आत्मगुप्ताफलघर्षणञ्च शरीरे विधेयम् मुखे[८] कट्वम्लरसगालनं, लशुनस्वरसपानञ्च प्रबुद्धे सति प्रयोज्यम्। पुनरनुबन्धप्रतिरोधार्थञ्च स्रंसनोल्लेखधूमपानशोणितावसेचनविस्मापनस्मारणाप्रियगीतवादित्रश्रवणप्रियदर्शनव्यायामशीलनादिभिरेनं संन्यासरोगिणमुपाचरेत्।

**मदात्यये**[९]- संन्यासविहितं सर्वमेव संज्ञाप्रबोधनम्, तीक्ष्णं शिरोविरेचनादिकं कर्म प्रयोज्यम्। प्रसक्तवेगे-मुखनासावरोधनम्, मानुषीक्षीरनावनम्, सत्त्वस्यालम्बनं, विषयविरागः, शोणितावसेचनं पञ्चकर्माणि च यथास्वं विदधीत।

---

१. च० चि०–१०। २. आयुर्वेदविज्ञानम्।

३. आयु० वि०। ४. आयु० वि०।

५. भै० र०–मूर्च्छा०।

६. दुर्गेऽम्भसि यथामज्जद्भाजनं त्वरया बुधः।
गृह्णीयात्तलमप्राप्तं तथा संन्यासपीडितम्॥ (च० सू० २४।४५)

७. च० सू०–२४।४६–४७। ८. अ० हृ० चि०–७।१२–१५।

९. अ० हृ० चि० ७ तथा सु० सं० —उ० त० ४६।

सर्वेषु च पूर्वमद-मध्यममद-पश्चिममद-पानात्यय-परमद-पानाजीर्ण-पानविभ्रमेषु पूर्वोद्दिष्टां क्रियामाचरेत् । अन्यच्च—

सेवेत वा मरिचजीरकनागपुष्पत्वक्पत्रविश्वचविकैलयुतान् रसांश्च ।
सूक्ष्माम्वरसुतहिमांश्च सुगन्धिगन्धान् पानोद्भवान्नुदति सप्तगदानशेषान् ।।

पानात्ययेषु विकटोरुनितम्बवत्यः
पीनोन्नतस्तनभरानतमध्यदेशाः ।
प्रौढाः स्त्रियोऽभिनवयौवनपीनगात्र्यः
सेव्याश्च पञ्चविषयातिशयस्वभावाः ।।

दाहे— तत्रैनमम्बुरुहपत्रसमैः स्पृशन्त्यः
शीतैः करोरुवदनैः कठिनैः स्तनैश्च ।
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबलाः सुकलैः प्रलापैः ।।

म्लानं प्रतान्तमनसं मनसोऽनुकूलाः
पीनस्तनोरुजघना हरिचन्दनाङ्ग्यः ।
ता एनमार्द्रवसना सह संविशेयुः
श्लिष्ट्वाऽबलाः शिथिलमेखलहारयष्ट्यः ।।

हर्षयेयुर्नरं नार्यः स्वगुणैर्रहसि स्थिताः ।
ताः शैत्याच्छमयेयुश्च पित्तपानात्ययान्तरम्[1] ।।

## दैवव्यपाश्रयचिकित्सा

देवर्षिगन्धर्वपितृपरिगृहीतेषून्मत्तेषु क्रूरं कर्म निषिध्यते। एतेषामावेशे कारणद्वयं परिलक्ष्यते—( १ ) रतिः ( काम्यार्थोपलब्धिः ), (२) अभ्यर्चना चेति । अतश्चैतेषामभिप्रायपरिज्ञानपूर्वकं तत्तद्ग्रहाद्यभिलषितवस्तूपहारबलिहोमेज्यापूजामन्त्रादिचिकित्सा प्रयुज्यतेतराम्। एते हि मृदुनाऽनुकूलेन चोपचारेणोपचर्या भवन्ति। शान्तिकर्मस्वस्त्ययनपूजादिकं वैदिकं कर्म विधेयम् । भूताधिपतिं शिवमभ्यर्च्य चोन्मादभयान्मुच्यते । रुद्रस्य च ये प्रमथाभिधाना गणा भुवि विचरन्ति, तत्पूजया च मानवो मुच्यते चोन्मादात् । तथा च—

सर्पिष्पानादिरागन्तौ मन्त्रादिश्चेष्यते विधिः ।
पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः ।।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ।
देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान् ।।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म च ।
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।।
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ।

---

१. सु० सं०—उ० त० । ४२' ४४, ५९, ६४, ६५, ।

रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ॥
तेषां पूजां च कुर्वाण उन्मादेभ्यः प्रमुच्यते ॥
बलिभिर्मंगलैर्होमैरोषध्यगदधारणैः ।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः ॥
देवगोब्राह्मणानाञ्च गुरूणां पूजनेन च ।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ॥
(च० चि० ९।९९-१०१)

एवञ्च देवग्रहे[1]—देवायतने दर्भस्वस्तिकापूपधृतपायससघृतं बलिं दद्यात् ।

असुरग्रहाय—सन्ध्याकाले चतुष्पथादिषु यथोचितं बलिमुपहरेत् ।

गन्धर्वग्रहे—जाङ्गलमांससंभृतं साम्बुबलिं गोष्ठे दद्यात् ।

यक्षग्रहे—यवपिष्टकृतशृंगाटकशोणितसुरादिभिर्युतं माधवीकुन्दकमलपुष्पैश्च सह मनोहरे भवने बलिमुपहरेत् ।

पितृग्रहाय—कुशास्तरणभूषितं तिलगुडपायसादिबलिं दद्यात् ।

नागग्रहाय—गुडमध्वासवपायसैर्नानाप्रकारैर्नद्यास्तटे बलिं दद्यात् ।

राक्षसाय—भयंकरेषु स्थानेषु मांसासृक्सुरादिसंभृतं बलिमुपहरेद्रात्रौ ।

पिशाचाय—शून्यायतने आममांसपशूपहारमद्यादियुक्तं बलिं दद्यात् ।

एवञ्च मन्त्रादिपरिग्रहादेतेषां चिकित्सा विधेया ।

अपस्मारे च—'पूजां रुद्रस्य कुर्वीत तद्गणानां च नित्यशः[2]' ।

बालग्रहेषु च—ग्रहानुकूल्येन दैवव्यपाश्रयचिकित्साया विशदं वर्णनमुपलभ्यते । यच्च सर्वमत्राकलितमास्ते । तथा च—

पूजाबल्युपहारशान्तिविधयो होमेष्टमन्त्रक्रिया
दानं स्वस्त्ययनं व्रतानि नियमः सत्यं तपो मंगलम् ।
प्रायश्चित्तविधानमञ्जनविधी रत्नौषधीधारणम्
भूतानामनुरूपमिष्टचरणं गौरीपतेरर्चनम् ॥
ये च स्युर्भुवि गुह्यकाश्च प्रमथास्तेषां समाराधनम् ।
देवब्राह्मणपूजनं च शमयेदुन्मादमागन्तुकम् ॥
(भैषज्यर० उन्मादाधिकारः)

भूतानुबन्धिज्वरे—

गंगाया उत्तरे कूले अपुत्रस्तापसो मृतः ।
तस्मै तिलोदकं दद्यान्मुच्यत्येकाहिको ज्वरः ॥

---

१. सु० सं० — उ० त० ६०।३२-३७ । २. तत्रैव — ६१।२६ ।

एतन्मन्त्रेण चाश्वत्थपत्रहस्तः प्रतर्पयेत् ।
सोमं सानुचरं देवं समातृगणमीश्वम् ।।
विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ।
स्तुवन् नामसहस्रेह ज्वरान् सर्वान् व्यपोहति ।।

( चक्रदत्तः ज्वरचि० )

बलिप्रकार:--

ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः ।।
दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः ।।
स्नानवस्त्रवसामांसमद्यक्षीरगुडानि च ।
रोचते यद्यदा येभ्यस्तत्तेषामाहरेद्बलिम् ।।
शुचिशुक्लानि माल्यानि गन्धाः क्षैरेयमोदनम् ।
दधिच्छत्रं च धवलं देवानां बलिरिष्यते ।।
रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषी ।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम् ।।
सुरर्षिगुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये ।
दिश्युत्तरस्यां तत्रापि देवायोपाहरेद्बलिम् ।।
पश्चिमायां यथाकालं दैत्यभूताय चत्वरे ।
गन्धर्वाय गवां मार्गे सवस्त्राभरणं बलिम् ।।
चतुष्पथे राक्षसाय भीमेषु गहनेषु च ।
रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसाम् ।।
शून्यालये पिशाचाय पश्चिमां दिशमास्थिते[1] ।।

एवञ्च नागग्रहबलिः,[2] यक्षबलिः, ब्रह्मरक्षोबलिः, राक्षसबलिः, पिशाचबलिर्यथास्वं प्रदीयते ।

### सत्त्वावजयः

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः', सत्त्वावजयः पुनरहितेभ्योऽर्थेभ्यः मनोनिग्रह उच्यते[3]मनोऽग्राधो विषयारण्यभूमिषु स्वच्छन्दं संचरति । मन एव भूतानि दुःखोदधौ निमज्जयति । तद्धि प्रमाथि बलवच्च । तदेव संसाररथस्य सारथिः । यश्च मनस्वी विश्वस्य प्रभुत्वमभिकांक्षति, प्राक् स्वस्य मनसः स्वामित्वमर्जयतु । मनोजयी किल जगतः प्रभुत्वमर्जयिष्यति । मन एव जीवात्मानमनेकासु योनिषु

---

१. अ० हृ० उ० स्थानम् ५।२१-२९ । २. तत्रैव ५।३२-४४ ।
३. च० सू०- ११।५४ ।

बम्भ्रामयति। मनश्च पूर्वजन्माभ्यस्तकर्मानुसारमेव विषयेष्वनुरज्यते। आसक्त्या च निबध्यते भृशम्। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिश्चैकाग्रतां व्रजति, तदा च सत्त्वगुणोद्रेकान्मुच्यते कर्मबन्धनैः।

एवञ्च मानसाभिर्क्लिश्यमाना जना आधिभिः कथंकारं मुच्येयुरिति जिज्ञासायां सत्त्वावजयनस्यैव पन्थाः श्रेयसे कल्पते। स एव मनोनिग्रह इत्याख्यायते। ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिश्च[1] मानसामयो प्रशाम्यति। अनुकूलाश्च[2] सुहृदो धर्मार्थसंवादैः क्षुब्धं मनःप्रशमं नयन्ति। आश्वासनेन[3] हर्षणेन स्वेष्टवस्तुप्रदानेन च कामादिमानसज्वराः शाम्यन्ति। काम्यैरर्थैः मनोज्ञैश्च सद्वाक्यैः मनः शाम्यति। मनोनिग्रहणे ध्येयानुकूलमेव कर्माचरणीयम्। संयतेन भाव्यम्। तथा च—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा[4]॥

स्वस्य (मनसः) निग्रहश्च मनस एव कर्म। सर्वविधेषु चाहारविहारेषु सम्यग्योग एव श्रेयान्। अतश्च मिथ्यायोगातियोगहीनयोगेभ्यो मनः संरक्षितव्यम्। अनेकाग्रविक्षिप्तमस्थिरं मनो नैव क्रियासाफल्यप्रदं भवति। अतश्च मनसोऽनुपतापाय[5] सात्म्येन्द्रियार्थसंयोगेन सम्यङ्निरीक्ष्य कर्माचरणेन देशकालात्मगुणाविपरीतोपासनेन चात्महितं चिकीर्षता सद्वृत्तपालने प्रयतितव्यम्। आयुर्वेदे च विस्तेदशः मनोनिग्रहोपाया वर्णिताः तथा च 'सद्वृत्तप्रकरणे'—

ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः।
नृणामागन्तवो रोगाः प्रज्ञातेष्वपराध्यति॥
ईर्ष्याशोकभयक्रोधमानद्वेषादयश्च ये।
मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्।
आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः।
प्राज्ञः प्रागेव तत्कुर्याद्धितं विद्याद्यदात्मनः॥
आप्तोपदेशप्रज्ञानं प्रतिपत्तिश्च कारणम्।
विकाराणामनुत्पत्तावुत्पन्नानाञ्च शान्तये॥
पापवृत्तवचः सत्त्वाः सूचकाः कलहप्रियाः।
मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः॥

---

१. च० सू०— ११५८।
२. च० चि० — १०।१६।
३. च० चि० ३।३१९–३२०।
४. श्रीमद्भगवद्गीता—६।१७
५. च० सू०–८।१७।

परापवादरतयश्चपला रिपुसेविनः ।
निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः ॥
बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः ।
वृद्धोपसेविनो वृद्धाः स्वभावज्ञाः गतव्यथाः ॥
सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः ।
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥
आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च ।
परं प्रयत्नमातिष्ठेद् बुद्धिमान् हितसेवने[१] ॥

अथ च— इमांस्तु धारयेद्वेगान् हितार्थी प्रेत्य चेह च ।
साहसानामशस्तानां मनोवाक्कायकर्मणाम् ॥
लोभशोकभयक्रोधमानवेगान् विधारयेत् ।
नैर्लज्येर्ष्यातिरागाणामभिध्यायांश्च बुद्धिमान् ॥
परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।
वाक्यस्याकालयुक्तस्य धारयेद् वेगमुत्थितम्[२] ॥

तथाहि मनोनिग्रहार्थं मंगलाचारवान्, विद्यावयोवृद्धसिद्धाचार्यानुगामी, महोत्साहः, क्षमायुक्तः, मितभाषी, वश्यात्मा, धर्मात्मा, परपरुषवचनसहिष्णुः, सर्वभूतेषु भ्रातृभाववान्, दीनजनरक्षिता, दुर्गतिगतानां पालकः, दाता, शान्तिप्रियः, गुणवदौषधिधारकः, सुमनाः, प्रातः सायं स्नाता, धार्मिकः, भयापहर्ता, अतिथि-पूजकः, रागद्वेषानभिनिविष्टश्च भवेत् ।

न चाधार्मिक-पतित-प्रमत्त-नीचसंगतिं कुर्यात् । न चोत्तमैः सह विरोधमा-चरेत् । न कौटिल्यं भजेत् । न परेषां भयमुत्पादयेत् । न साहसं न प्रजागरं न चातिस्वप्नपानाशनान्यासेवेत । न वैरं कलिं वा समाश्रयेत् । न संघनियमं त्यजेत् । न मद्यवेश्याद्यूतसेवनं कुर्यात् । नाहंकारी भवेत् । न कमप्यवमानयेत्, न धैर्यं त्यजेत् । न बान्धव-ब्राह्मण-कृच्छ्रद्वितीय-गो-सुर-वृद्धजनानधिक्षिपेत्, न सर्वत्र शङ्केत, न च सर्वेषु विश्वासमाचरेत् । बाललुब्धमूर्खक्लीबजनसंख्यं कुर्यात् ।

कथञ्चनापि इन्द्रियाणां न स्वामित्वमंगीकुर्यादपि तु भृत्यानिवेन्द्रियाणि स्वायत्तव्यापारेषु विनियोजयेत् । इन्द्रियाणि च प्रसभं मनो हरन्ति, मनश्च वेगव-च्चञ्चलञ्च नोभावपि स्वेच्छाचारित्वमर्हतः । न चेन्द्रियाणां दासतां स्वीकुर्यात् । न सदा चिन्तावशगो भवेत् । न बुद्धीन्द्रियाणां भृशं भारमावहेत् । न चिरक्रियः स्यात् । न शोकपरवशो भवेत् । न क्रोधातिरेकं हर्षातिरेकं वा व्रजेत् । सति साफल्ये नातिगर्वयुक्तो भवेत् । असाफल्ये च न दैन्यमधिगच्छेत् । असत्यभाषणं न कुर्यात् । असत्यवक्ता च साहसविकारेण ग्रस्यते । न परधनापहरणे मतिं कुर्यात् । न च

---

१. च० सू० ७ । ५१ । ६० । २. तत्रैव । ७ । २६ । २८ ।
३. तत्रैव अ० ८ । १८ । १९ ।

परस्त्रियमभिलषेत्[1]। एतद्धि सर्वनाशस्य मूलम्। पापाचारेऽपि न पापी स्यात्। न परस्य दोषान् ब्रूयात्। न कस्यापि रहस्यं प्रकाशयेत्। ब्रह्मचारी, ज्ञानसम्पन्नो धीमान्, करुणापरायणः, दानशीलः, प्रशमनशीलश्च भवेत्।

एवञ्च विविधेषु शास्त्रेषु मनोनिग्रहणार्थमनेके उपायाः समाम्नाताः। यथा च सत्याबुद्धि[2] समुदेति, तथा चरकाचार्येण शरीरस्थानस्य पञ्चमेऽध्याये विस्तरेण प्रतिपादितम्।

**योगसूत्रे सत्त्वावजयविधिः**—"अभ्यासवैराग्याभ्यां तन्निरोधः तत्र स्थितौ यत्नोऽभ्यासः। स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः। दृष्टानुश्रविकविषयवितृष्णस्यवशीकारसंज्ञा वैराग्यम्। ईश्वरप्रणिधानाद्वा। प्रच्छर्दनविधारणाभ्यां वा प्राणस्य। मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्[3]।" इत्यादीनि सत्त्वावजयनानि।

शमादिषट्कञ्च मनोनिग्रहसमर्थं भवति। च—शमादयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः। शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। निवर्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिरथवा विहितानां कर्मणां विधिना परित्यागः। तितिक्षा-शीतोष्णादि-द्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्। गुरूपदिष्टवाक्येषु विश्वासः श्रद्धा[4]। (वेदान्तसारः)

एवञ्च दशधा[5] पापं कर्म त्यजेत्। वृत्तिहीन-व्याधित-शोकार्तान् यथाशक्ति उपकुर्यात्। अपकारपरेऽपि उपकारप्रधानो भवेत्। संपत्सु विपत्सु च तुल्यमनाः स्यात्। दयालुता[1] कायवाक्चेतसां दमः, परार्थेषु च न स्वार्थबुद्धिरिति सर्वोत्कृष्टं सद्व्रत-

---

१. "नहीदृशनायुष्यं परदारोपसेवनम् ॥"

२. शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्तते।
यया भिनत्त्यतिबलं महामोहमयं तमः।
सर्वभावस्वभावज्ञो यया भवति निःस्पृहः।
योगं यया धारयते सांख्यः संपद्यते यया ॥
यया नोपैत्यहंकारं नोपास्ते कारणं यया।
यया नालम्बते किञ्चित्सर्वं संन्यस्यते यया ॥ (च० शा० ५।१६-१८)

३. पातञ्जलयोगसूत्रम्।

४. हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते।
संभिन्नालापव्यापादमभिध्या दृग्विपर्ययम् ॥
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ (अ० हृ० सू० २)

५. आर्द्रसन्तानता त्यागः कायवाक्चेतसां दमः।
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥ (अ० हृ० सू० २)

माचरेत् । कथञ्च नक्तं दिनानि यान्ति, इति च नित्यमनुस्मरेत् । इमांश्चाचाराननुपालयन् मनसो निग्रहे आयुरारोग्ययशोऽभिवृद्धये च प्रभवेत् । उक्तञ्च—

"धर्म्याः क्रिया हर्षनिमित्तमुक्तास्ततोऽन्यथा शोकवशं नयन्ति ।
जितेन्द्रियं नानुपतन्ति रोगाः (तत्कालयुक्तं यदि नास्ति दैवम्) ।
नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥
मतिर्वचः कर्मसुखानुबन्धं सत्त्वं विधेयं विशदा च बुद्धिः ।
ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः[१] ॥

एवमादिसन्दर्भेण च 'सत्त्वावजयचिकित्सायाः' किमपि विशिष्टं पदमास्ते सर्वास्वपि चिकित्साविधिषु । न हि हीनसत्त्वानामजितेन्द्रियाणामामया साध्यतां व्रजन्ति । सर्वास्वपि चिकित्सासु सत्वावजयो नितरामपेक्षितः । सुश्रुते च–

"न राजद्विष्टपरुषपैशुन्यानृतानि वदेत्, न देवब्राह्मणपितृपरिवादांश्च, न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचाचारानुपासीत ।"

"गां धयन्तीं धापयन्तीं परशस्यं वा चरन्तीं न कस्मैचिदाचक्षीत, न स्वप्नजागरणशयनासनस्थानक्रमणायानवाहनप्रधावनलंघनप्लवनप्रतरणहास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत । द्यूतवादित्रमद्यातिसेवाप्रतिभूसमाह्वानगोष्ठीसाक्षित्वादीनि न सेवेत ।"एवमादिसन्दर्भः मनोनियमनोपायाः समादिष्टाः[२] ।

## शस्त्रकर्म[७]

सिराव्यधः—यथाविधिकृतस्नेहनस्वेदनमातुरं[३] यथादोषप्रत्यनीकं रक्तोत्क्लेशनार्थं द्रवाधिकमन्नं भुक्तवन्तं सात्म्यापेक्षया यवागूं वा पीतवन्तं नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रजालसंवृतार्के काले सन्निधाने समुपस्थाप्यासीनं स्थितं वा वस्त्रपट्टचर्मान्तर्वल्कललतानामन्यतमेन यथासुखं यन्त्रयित्वा मर्मरहितं शरीरप्रदेशमासाद्य यथोपयुक्तं शस्त्रमादाय सिरां विध्येत् । तत्र 'शंखकेशान्तसन्धिगतामुरोऽपांगललाटेषु चोन्मादे'[४] ।

"उरोपांगललाटेषु[५] सिराश्चास्य विमोक्षयेत् ।
उरोपांगललाटस्थामुन्मादेऽपस्मृतौ पुनः ।
हनुसन्धौ समुद्भूतां सिरां भ्रूमध्यगामिनीम्[६] ॥"
"हनुसन्धिमध्यगतामपस्मारे[७]
सिरां विध्येदथ प्राप्ताम्[८] ।"

---

१. च० शा० २ । ४१-४७ ।
२. सु० सं० चि० अ० २४ ।९२,९६, १०१ ।
३. सु० सं० शा० ८ । ६ ७ ।
४. सु० सं० शा० ८ । १७ ।
५. सु० सं० उ० त० ६२ । ३३ ।
६. अ० हृ० सू० २७ । १२ ।
७. सु० शा० ८ । १७ ।
८. सु० सं० उ० त० ६१ । ४१ ।

"शंखकेशान्तसन्धौ वा मोक्षयेज्ज्ञो भिषक् सिराम् ।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव[1] च ॥"
"नस्यं सिराव्यधो दानं त्रासनं बन्धनं भयम्[2] ।"

सिराव्यधो हि स्नेहादिकर्मभिः किमपि गुणोत्कर्षमादधाति । तथा च—

स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि ।
यान्त्याशु व्याधयः शान्तिं यथा सम्यक् सिराव्यधात्[3] ।

सिराव्यधानन्तरं मासं बललाभं यावद्वा परिहर्तव्यानि 'क्रोधायासौ मैथुनं दिवास्वापः व्यायामः यानयानमुच्चैरध्ययनं स्थानासनचङ्क्रमणानि शीतवातातपसेवनं विरुद्धाशनमसात्म्यभोजनमजीर्णादिकश्चेति[4] ।'

इति "आयुर्वेदशास्त्रे भूतविद्यायाः संवीक्षणात्मकमध्ययनम्"
॥ पञ्चमं काण्डं समाप्तम् ॥

---

१. च० चि० ९ । ८४ ।
२. भै० र० अप० चि० ।
३. सु० सं० शा० ८ । २२ ।
४. सु० सं० शा० ८।२४ ।

# षष्ठं काण्डम्

## यौगिकी चिकित्सा

"रजस्तमोगुणात्मिकमाऽविद्यया मायया स्वीयैरसाधारणधर्मात्मकदुःखमोह-बन्धनफलविशेषैरावद्धानाम्, आध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकाऽभिधामयत्रयेण संताप्यमानानामविद्याऽस्मिता-राग-द्वेषाभिनिवेशात्मकपञ्चक्लेशैरापीड्यमानानां प्राणिनामभ्युदयसम्पादनसमर्थमाधिनिवर्तकं तत्त्वज्ञानसमन्वितमष्टाङ्गयोगमेवे-त्याकलय्य यौगिकी चिकत्सा वर्ण्यते ।"

**योगनिरुक्तिः**--योगशब्दार्थावगमनमन्तरा न शक्यते यौगिकीचिकित्सायाः क्षेत्रविज्ञानमिति कृत्वाऽऽदौ योगशब्दार्थश्चिन्त्यते । युज्समाधौ ( दिवादिः ) युजिर्योगे ( रुधादिः ) युज्सं यमने ( चुरादिः ) एभ्यो धातुभ्यो योगशब्दो निष्पद्यते । तेन योगशब्दाभिधेयतामर्हन्त्यर्था इमे । तथाहि योगपदस्य चित्तवृत्ति-निरोधार्थत्वाद् यत्र यत्र चित्तवृत्तिनिरोधसत्ताऽनुभूयते, तत्सर्वमपि योगात्मकम् । तथा च यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयो योगात्मका, भक्तिज्ञानवैराग्याणि च तदंङ्गानि व्याख्यातानि ।

(१) योगः समाधिः ( समाधिश्चित्तवृत्तिनिरोधः ) ।

तत्र चित्तस्य वृत्तयः ( भूमिकाः ) अवस्थाविशेषाः पञ्च—( १ ) क्षिप्तम्, २– मूढम्, ३–विक्षिप्तम्, ४– एकाग्रम्, ५– निरुद्धमिति ।

(१) **क्षिप्तम्**—रजोगुणस्य समुद्रेकात् तत्तद्विषयेषु क्षिप्यमाणमस्थिरं सततप्रवृत्तिमच्चित्तं बोध्यम् ।

(२) **मूढम्**—तमोगुणस्य समुद्रेकात् तत्तद्विषयेभ्यः परावृत्तं सद् आलस्य-निद्रावृत्तिमद् गुरुचित्तं बोध्यम् ।

(३) **विक्षिप्तम्**--सत्त्वगुणस्य समुद्रेकेऽपि रजसानुविद्धत्वात् प्रायशोऽस्थिरम् । अत्र हि "व्याधि[1]-स्त्यान-संशय-प्रमादालस्याऽविरति-भ्रान्ति-दर्शनालब्धभूमित्वाऽन-वस्थितत्वादयश्चित्तविक्षेपाः" अनुवर्तन्ते । तत्र **व्याधिर्नाम**--वातपित्तश्लेष्मणां वैषम्यवेदना, अशितपीताहारपरिणामात्मकरसवैषम्यवेदना, इन्द्रियाणां वैषम्य-वेदना चेति । **स्त्यानं नाम**--चित्तस्य योगानुष्ठानाऽर्हता । **संशयः**--मुक्तिफलजनकत्व-संशयः । **प्रमादः**--समाधिसाधनेष्वप्रयत्नः । **आलस्यं**--शरीरगौरवात् तमोगुण-प्रयुक्तचित्तगुरुत्वाद्वा समाधिसाधनालस्यम् । **अविरतिः**--चित्तस्य विषयाभिलाषा । **भ्रान्तिदर्शनम्**--योगस्य समाधिसाधनत्वं वास्तीत्याकारकं विपरीतज्ञानम् ।

---

१. यो० द० पाद १।३० ।

**अलब्धभूमिकत्वम्**--मधुमती-मधुप्रतिका-विशोका-संस्कारशेषाख्यभूमिकालाभा-भावः । **अनवस्थितत्वम्**--एकस्या मधुमत्या द्वयोर्वा तिसृणां वा लाभे सति तावतैव परिपूर्णतां मन्यमानस्य तत्र तत्रापि चित्तस्यानास्था ।

एवञ्च प्रतिकूलवेदनीयतया त्रिविधम्-आध्यात्मिकाधिदैविकाधिभौतिकं दुःखम् । तत्रात्मानमधिकृत्य यद्भवति, तदाध्यात्मिकम् द्विविधम् तत्र वातपित्त-श्लेष्मवैषम्यजन्यं ज्वरादिकं शारीरम्, कामक्रोधादिजनकरजस्तमोदोषजं मानसम् । भूतान्यधिकृत्य जायमानमाधिभौतिकम् । आधिदैविकञ्च यक्षराक्षस-पिशाचभूतग्रहादिजन्यमाधिदैविकं दुःखं दौर्मनस्यादिकञ्च चित्तविक्षेपाज्जायन्तेऽति-तराम् ।

एताश्च क्षिप्त-मूढ-विक्षिप्तावस्था अन्तराया विघ्नात्मिका भवन्ति योगे । अतश्च क्षिप्ते मूढे विक्षिप्ते च चेतसि न भवति योगः ।

(४) **एकाग्रम्**--रजस्तमोवृत्त्यभावे सत्त्वस्यातीव समुद्रेके सति सत्त्वमात्र-वृत्तिकमत्यन्तं स्थिरमेकतानं चित्तं बोध्यम् । अत्र हि रजस्तमोवृत्तीनां विरहाद् दुःखादयो व्याध्यादयश्च तिरोभूताः सन्तो विप्लुता भवन्ति, न तु वर्तन्ते । एतस्मिन् काले यत्र विषये प्रयुक्तं तत्र द्रागेव मनो लग्नमचलञ्च भवति । अत एतत्काले--

'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिसंज्ञकानि योगाङ्गानि'' सम्यगनुष्ठेयानि सफलानि च भवन्ति । अत्र चैकाग्रे चेतसि शुद्धसत्त्वमय्या वृतेः सद्भावात्--सम्प्रज्ञायते मनाक् सत्त्ववृत्तिर्यत्रेति व्युत्पत्त्या **'सम्प्रज्ञातयोगं'** इति ख्यायते । तस्य चत्वारो भेदा एकाग्रे चित्ते एव विद्यन्ते, ते यथा--सवितर्क-सम्प्रज्ञातः, सविचारसम्प्रज्ञातः, सानन्दसम्प्रज्ञातः, सास्मितसम्प्रज्ञातश्चेति । तत्र चायं चतुर्विधोऽपि सम्प्रज्ञातयोगो विनाऽऽलम्बनं न भवत्यतः सालम्बनसमाधिरिति ख्यायते । अत्रैव एकाग्रे चित्ते चित्तस्य तिस्रो भूमिका अन्या अपि भवन्ति, ताश्चमधुमती मधुप्रतिका-विशोका इत्यभिधाना विद्यन्ते ।

तत्र स्थूलालम्बनमादाय चित्तस्यैकाग्रतायां मधुमतीभूमिका । सूक्ष्मालम्ब-नमादाय चित्तैकाग्रतायां मधुप्रतिका भूमिका । सत्त्वगुणांशसुखमात्रां चालम्बनीकृत्य चित्तैकाग्रतायां विशोका भूमिका बोध्या ।

(५) **निरुद्धम्**--सत्त्वरजस्तमोमयीनां यावतीनां वृत्तीनां स्वकारणे बुद्धावत्यन्तलयः । तादृशं चित्तं केवला बुद्धिरुच्यते, सा चातीव स्थिरतमा । अत्रैव वशीकारसंज्ञं परमवैराग्यमुपपन्नं भवति । परमवैराग्ये सति लौकिकवैदिक-दिव्यादिव्याद्यनेकविधविषयेषु स्वसन्निधावुपस्थितेष्वपि तत्र यस्य तृष्णाऽपि न स्यात् । अस्यामवस्थायां बुद्धौ क्षयं गतानां कारणात्मकानामस्मिता-राग-द्वेषाभि-निवेशानां क्लेशानां बीजभावस्य दग्धता भवति । एवं च बुद्धौ कारणात्मकतयाऽव-स्थितानामन्तरायाणां स्वरूपाण्यपि दग्धानि भवन्ति, अतो निर्बीजसमाधिरि-

त्युच्यते (असम्प्रज्ञातसमाधिरिति यावत्)। तथा च सोऽयं योगो द्विविधोऽपि एकाग्रे निरुद्धे च चेतसि समापन्नो भवति। तमिमं द्विविधं योगमालम्ब्य तत्साधनानि, तत्प्रतिबन्धकानि, तत्सहकारीणि तत्फलानि च निरूपयिष्यन्ते।

**चित्तस्य निर्मलीकरणम्**—चित्तस्य स्थैर्यार्थं चित्तप्रसादात्मकमुपायमाचरेत्, यतो हि चेतसि प्रसन्ने सत्येव चित्तस्य प्रसादनं बुद्धेश्च स्थिरीकरणञ्जायते। उक्तं यथा गीतायाम्[1]—

> रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
> आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥
> प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।
> प्रसादे सर्वदुःखानां हानिरस्योपजायते॥

तत्र 'मैत्री-करुणा-मुदितोपेक्षाणां सुखदुःखपुण्यविषयाणां भावनातश्चित्तप्रसादनम्[2]'।

**मैत्री**—सत्त्वगुणाधिकेषु सुखितेषु मैत्रीं भावयतः पुरुषस्य ईर्ष्याकालुष्यं चित्तस्य निवर्तते। **करुणा**—रजोऽधिकेषु दुःखितेषु करुणां स्वस्मिन्निव परत्र दुःखप्रहाणाभिलाषां भावयतः पुरुषस्य परापकारचिकीर्षाकालुष्यं निवर्तते चित्तस्य। **मुदिता**—पुण्यशालिपुरुषेषु मुदितां हर्षं भावयतः पुरुषस्य असूयाकालुष्यं निवर्तते चित्तस्य। **उपेक्षा**—अपुण्यशीलेषु पुरुषेषु चोपेक्षां माध्यस्थ्यं भावयतः पुरुषस्य अमर्षकालुष्यं निवर्तते चित्तस्य। अथ च चित्तं प्रसन्नममलञ्च जायते। प्रसन्नं सदेकाग्रं मनः स्थिरतामालम्बते।

**समाधिः**—समाधिर्द्विविधः—सविकल्पको निर्विकल्पकश्चेति।

**सविकल्पकसमाधौ**—ज्ञातृ-ज्ञान-ज्ञेयानां भेदज्ञाने सत्यपि वस्तुतत्त्वज्ञानं जायते। यथा मृन्मयगजादिभानेऽपि वस्तुतः मृन्निर्मितवस्तुषु मृदेव नान्यत्, स्वर्णघटितकटककुण्डलादिभानेऽपि स्वर्णमेव सर्वं नान्यदिति। एवञ्च वाचारम्भणमात्रत्वात्तदेकमेव मृत् स्वर्णं वा भवति, भिन्नतायामप्येकताया एवानुभवात् तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम्। तथाहि यथा परमात्मनो भिन्न-भिन्नोपाधीनां निर्देशेऽपि वस्तुगत्या सर्वोपाधय एकस्यैव परब्रह्मणो विभिन्ननामानीति, तदेकत्वं न विरुध्यते, तथैव सविकल्पकसमाधौ ज्ञात्रादिभेदभानेऽपि तत्सर्वमद्वैतं ब्रह्मैवेति भिन्नतायामप्येकताया एवानुभवेऽद्वैतस्य भानं न विरुध्यते।

**निर्विकल्पकसमाधौ** तु ज्ञातृ-ज्ञान-ज्ञेयभेदभावभानाभावो भवति। यथा जलाकाराकारितलवणस्य न पृथगवभासो जायतेऽपितु जलमात्रस्यैवावभासो भवति, तथैव परब्रह्मणि ज्ञेये चित्तस्य निश्चलावस्थित्या तदाकाराकारितचित्तवृत्तेरतितरामेकीभावेनावस्थानम्, निर्विकल्पकसमाधिरित्युच्यते।

---

१. श्रीमद्भगवद्गीता—२।६४।६५।   २. यो० द० पाद १।३३।

चित्तम्

क्षिप्तम् | मूढम् | विक्षिप्तम् | एकाग्रम् | निरुद्धम्

रजःप्रधानम् तमःप्रधानम् सत्त्वे प्रधाने सत्त्वमात्र- सत्त्ववृत्तीनामपि लयः
रजःसहकारि वृत्तिः चित्तं
प्रमाणविपर्ययविकल्पा-निद्रा- स्थिरम् स्थिरता पराकाष्ठा
प्रधानम् प्रमाण-

दयो वृत्तयो भवन्ति, जाग्रदवस्था व्यवहार- विषयं करोति

विपर्ययविकल्प-व्याध्यादि- अष्टाङ्गयोगफलं
स्मृत्यादयो दुःखादयः स्व- परमो योगः
भवन्ति व्यवहारं-कारणे लीनाः विवेकख्यात्यपर-
योग्यता च वैराग्ययोः फलं
यमनियमादीनामनुष्ठानम् परमो वैराग्यः

विशुद्धं तत्त्वज्ञानम् क्लेशादिबीजभावदग्धता

संसारलग्नता योगलेशस्याभावः

विवेकख्यातिरपरो वैराग्यश्च निर्बीजसमाधिः

क्लेशादीनां बीजभावमात्रता सबीजसमाधिः स्वस्वरूपावस्थाना-
न्निरालम्बो योगः

सम्प्रज्ञातयोगोऽपरः
प्रारब्धसंस्कारक्षये संस्कार-
शेषा भूमिका

सवितर्कः | सविचारः | सानन्दः | सास्मितः | जीवनन्मुक्तः

स्थूल-लक्ष्यम् | सूक्ष्मतन्मात्रादि लक्ष्यम् | सत्त्वसुखमात्रा लक्ष्यम् | बुद्धिपुम्प्रतिबिम्बसंयोगे लक्ष्यता | असम्प्रज्ञातयोगः

परमात्मस्वरूपावाप्तिः

मुक्तिः परमा

स एव सालम्बनयोगः

मधुमती | मधुप्रतिका | विशोका

स्थूलालम्बनम् | सूक्ष्मालम्बनम् | आत्मस्वरूपालम्बनम्

धर्ममेधा

सोऽयं सम्प्रज्ञातोऽपरयोगः

अत्र प्रकृतिलयाः, विदेहाः योगभ्रष्टा अपि भवन्ति ।

अस्य च समाधेरङ्गानि यमादीनि वक्ष्यमाणानि ।

(२) योगः संयमः ( युज् संयमने ) ।

महाभारते च संयमस्य किमपि विशिष्टं महत्त्वमाख्यातमुपलभ्यते—

महदश्वसमायुक्तं बुद्धिसंयमनं रथम् ।
समारुह्य स भूतात्मा समन्तात्परिधावति ॥
इन्द्रियग्रामसंयुक्तो मनः सारथिरेव च ।
बुद्धिसंयमनो नित्यं महान् ब्रह्ममयो रथः ॥
य एवं वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम् ।
स धीरः सर्वभूतेषु न मोहमधिगच्छति[1] ॥

अत्र च ब्रह्मरथरूपिणः शरीरस्य वर्णनेन बुद्धिसंयमनस्य मनःसारथेश्च महत्त्वमाख्यातमास्ते । शिवात्मकैश्च संकल्पैर्युतं मनो ज्योतिषां ज्योतिः, दूरंगमं, प्रज्ञानमजरं जविष्ठञ्च वर्णितम्[2] ।

संकल्पः, वासना, इच्छा, स्मृतिः, धृतिः, उत्साहः, श्रद्धा, कारुण्यं, प्रेम, दया, कृतज्ञता, कामः, लज्जा, भयः, रागः, द्वेषः, संगः, लोभः, मदः, मात्सर्यं, क्रोधश्चेति मानसा भावा उक्ताः[3] । एतदनुसारि च मनः स्वेषु भावेषु प्रवर्तते ।

एवञ्च यदि चेन्मनो न निगृहीतं भवेत्तदा तद्धि स्वच्छन्दमेव विषयारण्यभूमिषु सञ्चरेदनारतम् । तस्य च संयमनमन्तरेण क्लेशा एवावृण्वन्ति । गीतायाञ्च स्पष्टमेवोक्तम्–'यो यच्छ्रद्धः स एव सः' । चरके च—

प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षे च यत् परम् ।
मनः समाधौ तत्सर्वमायतं सर्वदेहिनाम्[4] ॥

योगशास्त्रं हि नाम मानसामयप्रतीकारपरायणं तन्त्रम् । न केवलमिदं मनःस्वास्थ्यमुपदिशति, अपितु शास्त्रमिदं मनोदोषौषधम् । सर्वात्मना च मनोदोषदूरीकरणमार्गमादिशति ।

**तत्र मनः संयमोपाया**—यमः आत्मनियन्त्रणम् ( Self control ), नियमः ( Regimentation ), आसनम् ( Posture ), प्राणायामः ( Breathing Control ), प्रत्याहारः (Withdrawal), धारणा ( Recollection ), ध्यानम् ( Meditation ), समाधिः ( Concentration ) ।

एभिश्चोपायैर्दिव्यमुन्नतमादर्शमास्थाप्य मनोव्याधिमपनेतुं शक्यते ।

---

१. म० भा० अ० मै० ५१ ।
२. यजुर्वेदस्य शिवसंकल्पसूक्तं द्रष्टव्यम् ।
३. बृ उ० १ । ५ । ३ तथा तै० उ० ६ । ३० ।
४. च० चि० २४ । ५२ ।

यमः—'शरीरसाधनापेक्षं नित्यं यत्कर्म 'तद्यमः'[1] ।

दुःखनाशाय च संयमयोगस्य पालनमावश्यकम् । तथा च—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा[2] ।।

'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः[3] ।' अहिंसा – खलु प्राणिनां प्राणवर्धमानानामुत्कृष्टतमा[4] समाख्याता[5] देहवाङ्मनोभिः परपीडनेऽनादरः परस्त्रीभोगपरद्रव्यहरण-प्राणिपीडाविरामः । परुषसूचकानृताकालवचनाप्रयोगः । ईर्ष्या-शोक-भय-क्रोध-द्वेषत्यागः । वृद्ध-सिद्धाचार्यजनेष्वादरः । प्राणिषु बन्धुभावः । आत्मनीव सर्वप्राणिष्ववेक्षा । परपरुषवचनसहिष्णुता । अक्रोधनत्वमनिष्ठुरत्वमनृशंसवादित्वममानित्वम् । मनसाऽपि परपीडनविरतिः । क्षमा-दम-धैर्यतितिक्षाशीलनम् । एवमादिगुणैः कायेन[6], वचसा मनसा वा कस्यचनानिष्टकरणेऽप्रवर्तनं कस्मैचन कष्टाप्रदानमहिंसेत्युच्यते । तथा च—

'न हिंस्यात् सर्वभूतानि मैत्रायणगतश्चरेत्[7] ।'

अहिंसायाः स्थैर्ये सति अहिंसकस्य पुरुषस्य सन्निधौ शाश्वतिकविरोधस्वभावा अपि मूषक-मार्जार-अहि-नकुल-कुक्कुरद्वयप्रभृतयो निर्वैरा भवन्ति[8] ।

---

१. अमरको० २ । ७ । ४८ । २. श्रीमद्भगवद्गीता—६ । १७ ।

३. पा० यो०सू० ।

४. च० सू० ३० । १५ तथा 'अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः' सु० सं० ।

५. अभयं सर्वभूतेभ्यो दत्वा यश्चरते मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ।। ( म० भा०, शा० प०—१९२।४ )

६. इमांस्तु धारयेद्वेगान् हितार्थी प्रेत्य चेह च ।
साहसानामशस्तानां मनोवाक्कायकर्मणाम् ।।
लोभशोकभयक्रोधमानवेगान् विधारयेत् ।
नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायांश्च बुद्धिमान् ।।
परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।
वाक्यस्याकालयुक्तस्य धारयेद्वेगमुत्थितम् ।।
देहप्रवृत्तिर्या काचिद् विद्यते परपीडया ।
स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान् विधारयेत् ।।
पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्मणाम् ।
धर्मार्थकामान् पुरुषः सुखी भुङ्क्ते चिनोति च ।।—(च० सू० ७।२६-३०)

७. म० भा० शा० प० २२९।१८ ।

८. अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः—( यो० द० २।३५ )

यत्र चाहिंसकस्तिष्ठति, तत्र खलु देशकालादयोऽपि सत्त्वप्रधानाः सत्त्वव्याप्ता भवन्ति । वायुमण्डलमपि शान्तं निर्वैरं भवति ।

अहिंसा--कायेन स्वपरदुःखानामाचरणं, वाचा स्वपरदुःखोत्पादकशब्दाप्रयोगः, मनसा स्वपरद्रोहसंकल्पाभावः । यथा च--

'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च[1] ।'

एवञ्च अहिंसा सर्वेषामेव मानसाधीनां परिहारहेतुः समाम्नाता ।

सत्यम्—सत्यं हि परमं तप उच्यते । सत्यस्य वचनं श्रेयसे प्रभवति । तथा च—

सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत् ।<br>यद्भूतहितमत्यन्तमेतत् सत्यं मतं मम[2] ।।

भूतहितञ्च तदेव भवितुमर्हति, यदा सत्या बुद्धिरुदेति । यदा हि पुरुषो जाति-रूप-वित्त-बुद्धि-विद्याद्यहंकृतः कर्मस्वासज्जते भौतिकेषु, यदा शरीरेन्द्रियादिविशेषराशिमेव सर्वस्वं मन्यते, यदा कार्याकार्यहिताहिताशुभाशुभज्ञानरहितो भवति, तदा हि सः खलु विविधाभिराधिभिरभिपीड्यतेतराम् ।

एवञ्च धी[3]धृतिस्मृतिविभ्रष्टोऽहंकाराभिनिविष्टः, सक्तः, ससंशयोऽभिसंप्लुतबुद्धिरन्यथादृष्टिर्विमार्गगो भवत्यायतनं मानसानामामयानाम् । तैश्चाहंकारादिर्बम्भ्राम्यमाणो नातिवर्तते सत्त्वदोषान् । यदा हि पुरुष आत्मवश्यैरिन्द्रियैरिन्द्रियार्थानसज्जमानः सन्नुपभुङ्क्ते, प्रशान्तचित्तः समाहितोऽचपलो जितात्माऽपरिग्रहः, दान्तश्च भवति, तदा हि सत्त्वं निर्मलं संजायते । शुद्धे च सत्त्वे सत्या बुद्धिरुदेति । शुद्धया च बुद्ध्याऽहंकारादिकं मोहजालं नश्यति । तदा हि सांसारिकेषु विषयेष्वरतिर्जायते । तदा च नियतैरिन्द्रियैर्धारावर्षैरिव तृप्तिमधिगच्छति ।

सत्या च बुद्धिः, विद्या, सिद्धिर्मेधा, प्रज्ञा चाप्युच्यते । तथा सति विवेको वर्धते, निर्मला मतिरुदेति, अज्ञाननिशा नश्यति, नवाभ्युदयो भवति ।

एवञ्च मन्यते यत्—

भैषज्यमेतद्दुःखस्य यदेतन्नातिचिन्तयेत् ।<br>चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ।।

सत्यया प्रज्ञया मानसं दुःखं हन्यात् । अनित्ये यौवने, रूपे, जीविते, द्रव्यसञ्चये च न गृध्नुर्भवेत् । संतोषं हि परमं धनं मत्वा भौतिकेषु भावेष्वनासक्तः, समनस्कानामिन्द्रियाणामनुपतापाय सात्म्येन्द्रियार्थसंयोगेन, बुद्ध्या सम्यगवेक्ष्यावेक्ष्य कर्मणां प्रतिपादनेन, स्मृतिं सत्यां बुद्धिञ्चास्थाय मनसो प्रकृतिभावे सत्त्वोत्कर्षाय च प्रयतेत् । एवञ्चाचरन्मुच्यते मानसामयैरिति ।

---

१. श्रीमद्भगवद्गीता १२।१३ । २. म० भा० शा० प० ३२९।१३ ।<br>३. च० शा० ५।१० ।

अथ च--

'अप्रियानृतवर्जितं यथाभूतार्थवचनं सत्यमिति'[1]
'यथा दृष्टार्थगोचरभूतहितवाक्यं सत्यम्[2]'
दृष्टं श्रुतं चानुमितं स्वानुभूतं यथार्थतः ।
कथनं सत्यमिप्युक्तं परपीडाविवर्जितम्[3] ॥

एवञ्च प्राणिहितकामनया सत्यप्रयोगेण रजस्तमोभ्यां मुच्यते ।

अस्तेयम्--( अचौर्यम् ) "अदत्तस्य धनस्य स्वाम्यनुज्ञां विनैव ग्रहणं स्तेयमुच्यते" । परद्रव्यस्यापहरणेनापहर्तु र्मनःसंक्षोभो जायते, तेन च स्तेनश्चाहितायुर्भवति । यश्च परस्वादुपरतो भवति, स हितायुरुक्तः[4] । अज्ञानवशात्त मोऽभिभूतो जन आकृष्यते लोभेन, लोभाभिभूतश्च कामनापूर्तये चौर्यमाचरति । अभ्यासवशाच्च मोहाभिभूतस्तमेव पापमाचरति । चौर्यप्रसंगेन कामक्रोधावपि सहैव प्रवर्धेते । एवञ्च त्रिविधमिदं[5] द्वारं निरयस्य व्रजन्ति मूढ़धियः परस्परानुषंङ्गात् । तथा च--

क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रमाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति[6] ॥

यथा चाह चरकः--'काम-राग-क्रोध-लोभ-हर्ष-भय-मोहायास-शोक-चिन्तोद्वेगादिभिः मनस्युपहते बुद्धौ प्रचलितायामभ्युदीर्णा दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि स्रोतांसि आवृत्य जनयन्त्युन्मादम्[7] ।'

तथाहि निदानपरिवर्जनात् कामादित्यागान्निवर्तते चौर्यात् । सोऽयमस्तेयभावाद्वियुज्यते मानसामयैरिति, अस्तेयस्य महत्त्वमाख्यातम् ।

स्तेयम्—हठात् प्रत्यक्षं वा परस्वाद्याहरणम् अर्थात् परसत्तावद्द्रव्यादि यत् किमपि वस्तु विना तत्स्वामिनिर्देशं गृह्यते, तदिदं स्तेयं, तदभावोऽस्तेयमिति । तथा च--

अनादानं परस्वानामापद्यपि विचारतः ।
मनसा कर्मणा वाचा तदस्तेयं समासतः ॥

अस्तेयस्य सिद्धौ सत्यां तत्सन्निधौ सर्वेषां रत्नानामैच्छिका भवत्युपस्थितिः अर्थात् यदेवेच्छति तदेव प्राप्नोति ।

---

१. गीता अ० १८ भाष्ये शङ्कराचार्याः । २. तत्रैव रामानुजाचार्याः ।
३. लिङ्गपुराणम् ।
४. 'हितैषिणः पुनर्भूतानां परस्वादुपरतस्य···हितमायुरुच्यते' । ( च० सू० ३०।२४ )
५. त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ( गीता अ० १६।२१ )
६. गीता २।६३ । ७. च० नि० ७।४ ।

एवञ्चास्तेयाचरणे मनः प्रवरं भवति। न च भयोद्वेगचिन्तादयो मानसविकाराः पदमादधते।तथाहि--अस्तेयसन्तुष्टस्य जनस्य सर्वरत्नवतोऽपि पुंसः अधिकमात्रं सुखमिति। अतश्चास्तेये सत्त्वगुणोदयात् मुच्यते जन्तुर्विविधैर्मानसामयैः।

ब्रह्मचर्यम्--ब्रह्मणे ज्ञानाय यदाचर्य्यते, तद्ब्रह्मचर्यम्। ब्रह्मचर्यं हि तपः। ब्रह्मचर्यमेव श्रेयसः पन्थाः[1], यदाश्रित्य सत्या बुद्धिरुदेति। ब्रह्मचर्येण हि मृत्युरप्यपवार्यते। ब्रह्मचर्येण हि मनोविकाराः शान्तिं व्रजन्ति। अतश्चमनोविकारोपशमनार्थं ब्रह्मचर्यमाचरणीयम्[2]। ब्रह्मचर्यपरिचर्यायाश्च ईर्ष्याःमान-क्रोध-कामादीनामुपशमनार्थं दिवास्वापाभ्यङ्गालस्यनिद्रातन्द्रादिपरिहारविधय उपदिष्टाः। ब्रह्मचर्येण तपसा बुद्धिः प्रस्फुरति, स्मृतिर्वर्धते, धैर्यावष्टम्भश्च भवति। एवञ्च धी-धृति-स्मृतिसम्पत्तौ न मानसा आधयः पदमादधते। सत्त्वगुणोदयाच्च सत्त्वं प्रवरञ्जायते, न चाभिभूयते मानसदोषाभ्याम्। महाभारतस्य[3] शान्तिपर्वणि विस्तरेण ब्रह्मचर्यनियमा वर्णिताः।

अथ च ब्रह्मचर्यं गुप्तेन्द्रियोपस्थस्य संयमपूर्वकोऽष्टधा स्त्रीपरित्यागः। तथा चोक्तं दक्षसंहितायाम्--

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥

ब्रह्मचर्यस्य सिद्धौ सत्यां वीर्यस्य शक्तिविशेषस्य च लाभो भवति। ब्रह्मचारी पुरुषस्तु कर्मकालमायादीनपि स्ववशतां नयति। स्वयं ज्ञानी भूत्वा शिष्येषु ज्ञानाधानसमर्थश्च भवति।

भोगश्च मोक्षश्च पराक्रमश्च
शौर्यञ्च वीर्यञ्च धृतिः क्षमा च।
यत्किञ्चिदुत्कर्षविशेषशालि-
तद्ब्रह्मचर्याश्रयकं वदन्ति॥

अपरिग्रहः--परिग्रहस्तावन्ममत्त्वमुच्यते। परिग्रहस्तु खलु सर्वेषामेव शारीरमानसानामामयानां पृष्ठभूमिः। सत्ये युगे पुरुषाः किल व्यपगतभय-राग-द्वेष-मोह-लोभ-क्रोध-शोक-मान-निद्रा-तन्द्रा-श्रम-क्लमालस्य-परिग्रहा अभूवन्।

---

१. 'ब्रह्मचर्यमनामयमित्यायुर्वेदविदो मन्यन्ते' —च० सू० ३०।१५।

२. 'ब्रह्मचर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादिति' (च० सू० ८।२८)

३. 'शौचसंस्कारनियमव्रतविनियतात्मा उभे सन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय तन्द्रालस्ये, गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा, त्रिषवणमुपस्पृश्य, ब्रह्मचर्याग्निपरिचरण-गुरुशुश्रूषा-नित्यभिक्षाभैक्ष्यादिसर्वनिवेदितान्तरात्मा, गुरुवचननिर्देशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात्।'
(म० भा० शा० प० १९१।८)

समाप्तप्राये च सत्ययुगे केषाञ्चन प्राणिनामतितर्पणाद् गौरवमासीच्छरीराणाम्। गौरवाच्चायासः, आयासाच्चालस्यम्, आलस्याच्च ते सञ्चयं कर्तुमैच्छन्। सञ्चयाच्च तेषु ममत्वम् ( परिग्रहः ) अजायत। ततश्च लोभ उद्भूतस्तस्मिन् युगे। ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनाच्च कामक्रोधचिन्तोद्वेगादयः प्रवृत्ताः। ततश्च नानाविधाश्शारीर-मानसा व्याधयोऽभवन्।

एवञ्च भौतिकेषु वस्तुजातेषु परिग्रहवशादेव मानसविकारनिकरा अवर्धन्त। तथा च अपरिग्रहः भोगसाधनानामसंग्रह उच्यते। एवञ्च परिग्रहपरित्याग एव मनःशान्तिकरमयनम्। अपरिग्रहाच्च मनःसंयतंजायते। तथा च निवर्तन्ते मानसामया इति 'यमाः' व्याख्याताः।

नियमाः—'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।'

तत्र शौचं द्विविधम्—बाह्यमाभ्यन्तरं च।

बाह्यं यथा—मृदादिना शरीरावयवशुद्धिः, जलस्नानेन शरीरशुद्धिः, मार्जनादिभिः स्थलशुद्धिः, पञ्चभिर्वमनाद्यैः शरीरशुद्धिः।

आभ्यन्तरं यथा—मैत्र्यादिभिश्चित्तमलानां[1] प्रक्षालनम्। अविद्याऽस्मिता-राग-द्वेषाभिनिवेशानां, कामक्रोधमदमानमात्सर्याहंकारेर्ष्यासूयादीनां मानसमलानां प्रक्षालनम्। एवञ्च प्रज्ञापराधानां[2] त्यागः, इन्द्रियोपशमः, स्मृतिः, देशकालात्म-विज्ञानेनात्महिताचरणम्, सद्वृत्तस्य चाचरणं शौचमुच्यते। तथा च कायेन वाचा मनसा सर्वतोभावेन शौचाचरणं शौचमुच्यते। लोभ-शोक-भय-क्रोध-निर्लज्जताऽतिराग-सूचकानृत-परुषवचनत्यागपूर्वकं वाक्शौचद्वारा वाचो मलप्रक्षालनं विधीयते।

सन्तोषः—सन्तुष्टिः, यथा स्वापेक्षितेभ्यः स्वधर्माविरुद्धेभ्योऽत्यावश्यक-प्राणनिर्वाहकेभ्यः सन्निहितसाधनेभ्योऽतिरिक्तस्याधिकस्यानुपादानात्मिका वृत्तिः सन्तोषः।

सन्तोषस्य[3] सिद्धौ सत्यां तथाविधस्य सुखस्य लाभो भवति, यस्मादुत्तमं सुखं नास्ति। तृष्णा[4] किल सुखस्य दुःखस्य च कारणमुच्यते। सैव तृष्णा

---

१. मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यविषयाणां
भावनातश्चित्तप्रसादनम् ( यो० द० १। ३३ )

२. त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्॥
प्राज्ञः प्रागेव तत्कुर्याद्धितं विद्याद्य आत्मनः॥ ( च० सू० ७ )

३. सन्तोषादनुत्तमसुखलाभः ( यो० द० २। ४२ )

४. इच्छाद्वेषात्मिका तृष्णा सुखदुःखात्प्रवर्तते।
तृष्णा च सुखदुःखानां कारणं पुनरुच्यते।
उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान्॥ (च० शा० १। १३४–१३५)

कालबुद्धीन्द्रियार्थानां हीनमिथ्यातियोगेभ्यः कारणीभवति दुःखानाम्। तृष्णाक्षये सति सत्त्वगुणाधिक्यनिमित्तकसुखस्वभावता भवति। यथा चोक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥ (हितोपदेशः)

सति च सन्तोषे मनोविकारा निवर्तन्ते, काम-क्रोध-मोह-लोभनिवृत्तिपुरस्सरं रजस्तमसी च विलीयेते। तथा सति न च मानस आधिरुद्वेजयति।

तपः—तपः किल शरीरधातुवैषम्यानापादकं मानसदोषापहं चित्तप्रसादसम्पादकमाचरणम्।

देहेन्द्रियान्तःकरणदमनफलं हि तपोऽनेकविधं, यथा-सान्तपन-कृच्छ्र-चान्द्रायण-उपोषण-धारणा-पारणा-पवनाहारमात्रादिरूपाणि शरीरकृशकराणि, ग्रीष्मे पञ्चाग्नितपनं, वने निवासोऽनिकेतनः, एकपादावस्थानादिकम, इन्द्रियस्य मनसश्च प्रसादनम्। एवञ्च त्रिविधेषु सात्त्विकराजसतामसेषु तपःसु सात्त्विकं तप एव मनोदोषौषधम्। राजसतामसे तु तपसी योगप्रतिरोधके एव न तु योगसाधके। अतस्ते किल उपेक्ष्ये। सात्त्विकं तु तपः श्रद्धापूर्वकमनुष्ठेयम्[1]। तच्च राजस-तामसभोगाद्यनुकूलेच्छारहितैः युक्ताहारविहारैः[2] युक्तस्वप्नावबोधैरनुष्ठेयम्। तच्च सात्त्विकम्।

तपस्त्रिविधम्—कायिकं वाचिकं मानसञ्चेति।

तत्र कायिकम्[3]—'स्वेष्टदेवतानां, सात्त्विकानामाप्तानां धार्मिकाणां द्विजानां, ज्ञानविज्ञानधैर्यादिमतः गुरोः, विवेकशालिनः प्राज्ञस्य च पूजनम्। मृज्जलादिभिः शरीरशुद्धिः। शास्त्रविहितेषु कर्मसु प्रवृत्तिरविहितेषु च निवृत्तिः। उपस्थनिग्रहः, प्राणिनां कथमप्यपीडनम्, व्रत-प्रायोपवेशनाद्याचरणं हि शारीरं तपः। एतेन च शारीरतपसा मनोदोषौ प्रशान्तौ भवतस्तथा च मानसा विकाराः प्रशमं व्रजन्ति।

वाचिकम्[4]—प्राणिनां हितकरं श्रेयः सम्पादनपरं, प्रियं मनोहरं, यच्चात्यन्तिकं भूतमात्रहितं, तादृशं सत्यं, अनुद्वेजकं वचनं, मनःसमाधिसाधनानां

---

१. श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते॥ (गीता–१७।१७)

२. युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ (गीता–६।१७)

३. देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥ (गीता–१७।१४)

४. अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥ (गीता–१७।१५)

शास्त्राणां मुहुर्मुहुरभ्यसनमेतत्सर्वं वाङ्मयं तप उच्यते। वाङ्मयेन तपसा चित्तप्रसादनेन मनः शान्तिमाप्नोति। तथा सति द्वेषाभिद्रोहादयो निवर्तन्ते मानसविकारा इति।

**मानसिकं तपः**[1]—मनसः संकल्पप्रवणत्वं, विषयेभ्यो मनो व्यावर्तनं, रजस्तमोलेशराहित्येन सात्त्विकभावेनावस्थानम्, मनःसंयमपूर्वको वाक्संयमः, मनसा वाक्प्रवृत्तिनियमनम्, मनोवृत्तेः ध्येये स्वात्मरूपे स्थिरता, मनोभावानां सात्त्विकवृत्तित्वं सर्वमेतन्मानसं तप उच्यते। मानसञ्च तपः रजस्तमोवृत्तिनिरोधकत्वात् साक्षादेव मनोरोगौषधायते।

तदेतत्त्रिविधं सात्त्विकं तपो यौगिकीचिकित्सायां मनोविकारनिकराणां भेषजत्वेन व्याप्रियते।

**स्वाध्यायः**—अध्यात्मप्रतिपादनपरायणानां वेदब्राह्मणोपनिषत्पुराणायुर्वेदशास्त्रार्थानामनवरतं पुनः पुनः परिशीलनम्।

एषां शास्त्राणामभ्यासो मनःक्षोभकराणां भावानामनुदये हेतुर्भवति। धी·धृतिस्मृत्यादीनां यथास्थितौ सत्यां न हि प्रज्ञापराधा भवन्ति। तथा हि शास्त्रस्वाध्यायप्रबला मेधा चित्तशुद्धिपूर्वकं तत्त्वज्ञाने प्रभवति। एवञ्च मनो नानुरज्यते तादात्विकेषु परिणामदुःखेषु सुखेष्विति।

**ईश्वरप्रणिधानम्**—परमेश्वरे सर्वक्रियाणां समर्पणं हि प्रणिधानमुच्यते।

परमेश्वराश्रयणेन हि सर्वमेवाधिव्याधिभयं विनिवर्तते। गीतायां चैवं प्रतिपादितं, यत्—

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्[2]॥

कूर्मपुराणे च—

नाहं कर्ता सर्वमेतद् ब्रह्मैव कुरुते तथा।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥

तथाहि—योगयुक्तेन जितेन्द्रियेण विशुद्धात्मना जनेन किल मन्तव्यम्, यत् परमेश्वर एव निखिलकर्माणि विदधाति, नाहं करोमि। अथ च समेषामेव कर्मणां फलाशां त्यक्त्वा तानि कर्माणि परमेश्वरार्पणमेव कुर्यात्। उक्तञ्च—

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन्[3]॥
प्रलपन् विसृजन् गृह्णन् उन्मिषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥

---

१. मनः प्रसादः सौम्यत्वं स्थैर्यमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥ (गीता–१७।१६)

२. गीता–९।२७। ३. तत्रैव–५।८।

ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेभ्यः पद्मपत्रमिवाम्भसा[1] ॥

एवञ्च परमेश्वरशरणागतो हि जनः परमेश्वरेण समुद्धार्यते। अतश्च भगवन्तमाश्रित्य प्रणिधानात्मके भक्तियोगे विशेषतो यतनीयम्, यत्ने कृते सति परमकारुणिको परमेश्वरस्तमनुगृह्णाति । तदा हि आत्मनिवेदिनो भक्तजनस्य देहयात्राशेषभूतानि सर्वाणि जाग्रत्स्वप्नावस्थाकृतानि कर्माणि परमेश्वराराधन-तयैव सम्पाद्यानि भवन्ति । यानि च जाति-धर्म-वर्णाश्रमानुवृत्तानि कर्माणि, तान्यपि परमेश्वराज्ञापालनरूपाणि भगवदाराधनात्मकतयैव प्रसक्तानि भवन्तीति। शयनासनादिषु सर्वदैव परमेश्वरस्य सप्रेमस्मरणं कर्तव्यम्, तेन च मनो निर्मलं भवति । निर्मले च मनसि परमेश्वरानुचिन्तनमनुवर्तते सततम् । तथा च सर्वाणि ज्ञानकर्मेन्द्रियाणि परमेश्वरार्थमेव विनियोज्यानि भवन्ति। यथा मानसपूजा-स्तोत्रे पुष्पदन्ताचार्यः--

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो ! तवाराधनम् ॥

एवामेवात्महितं चिकीर्षता जनेन सकलदुरितक्षयसाधने परमकल्याणमये भगवति परमेश्वरे मनः प्रणिधातव्यम् । तदेवं यदा भक्तेन क्रियमाणाः सर्वाः क्रिया निस्त्रैगुण्ये परमेश्वरे सम्बद्धास्तदर्थमेवाचरितास्तदा मुच्यते कर्मफलबन्ध-नैर्न च युज्यते मानसैराधिभिरिति ।

आसनम्—आस्यते अनेनेत्यासनम्[2] ।

लक्षणम्—'स्थिरसुखमासनम्' सुखयतीति सुखम्, सुखं सत् यत् स्थिरं तदासनम् । तथा च—सुखप्रदत्वे सति शरीरवृत्तिस्थिरत्वमासनत्वम् । आसनानि च त्र्यधिकनवतिसंख्याकानि समुपलभ्यन्ते । तानि हि नेह स्वरूपतो निर्दिश्यन्ते विस्तरभयात् प्रपञ्चस्त्वेषामाकरग्रन्थेषु ( शिवसंहिता-घेरण्डसंहिताप्रभृतिषु ) द्रष्टव्यः ।

आसनस्य दार्ढ्यम्—यदा किल प्रयत्नस्य[3]=वहुविधव्यापारस्य प्रयासस्य शैथिल्यं भवति, यदा च अनन्ते पृथ्वीधारिणि स्थिरतरे शेषनागे समापत्तिः= चित्तस्य तदात्मतापन्नत्वं भवति, तदा शेषनारायणसमापन्नेन चित्तेन सताऽऽसनानि दृढीभवन्ति । तथा च आसनदृढतां प्रति प्रयत्नविरामस्य शेषनारायणे संयमस्य च प्रयोजकत्वम् ।

---

१. गीता–५ । ९–१० ।
२. 'स्थिरसुखमासनम्' (यो० द० २ । ४६)
३. 'प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्' (यो० द० २ । ४७)

**आसनानां फलम्**—आसनेभ्यश्च शारीरमानसदोषौ निवर्तेते। तथा सति शीतोष्णादिभिः कामक्रोधादिभिर्वा नाभिभूयते। आसनसिद्धौ च प्राणायामकरणसामर्थ्यमप्याविर्भवति। विनाऽऽसनसामर्थ्यं न प्राणायामादिः स्थितिपदं लभेत। तच्च गीतायां[1] षष्ठेऽध्याये साङ्गोपाङ्गं वर्णितमुपलभ्यते। एवञ्चासनजये वातपित्तश्लेष्मादिवैषम्यजनितज्वरादिभिः नाभिभूयते। इन्द्रियान्तःकरणवैकल्यजविभ्रमैरपि नाभिभूयते। प्रमादालस्यतन्द्रादयः प्रशमं व्रजन्ति। रजस्तमोवेगे निद्रादिवृत्तिविशेषैरपि नाभिभूयते। अपि तु, शरीरमिन्द्रियाणि मनश्च सुसंयतं प्रबलञ्च भवति। आसनजयाच्च सर्वाकारैश्च शारीरमनोविकारा दूरीभवन्ति।

**प्राणायामः**—आसनसिद्धौ सत्यां प्राणायामः सिद्ध्यति। श्वासप्रश्वासयो[2]र्गतिविच्छेदश्च 'प्राणायाम' उच्यते। बाह्यस्य वायोर्ग्रहणं श्वासः कोष्ठस्थस्य वायोर्निःसारणं प्रश्वासः, तयोश्च प्रचलनप्रतिबन्धः। स तु रेचकपूरककुम्भकभेदेन त्रिविधः[3]। तत्र रेचकः प्रश्वासपूर्वको गत्यभावः बाह्यवृत्तिः। पूरकः श्वासपूर्वको गत्यभावः आभ्यन्तरवृत्तिः। कुम्भकः स्तम्भवृत्तिः, यत्र श्वासप्रश्वासयोरभावो भवति। यथा-तप्ते लोष्ठे निहितं जलं परिशुष्यन् सर्वतः परिशुष्यते, तथा कुम्भके वायुः बलवद्विधारकप्रयत्ननिरुद्धक्रियः सन्नुदरेऽवतिष्ठते। कुम्भकाभ्यासाच्च सिद्धिर्भवति। तथा च—

विधिवत्प्राणयमनैर्नाडीचक्रे विशोधिते।
सुषुम्नावदनं भित्वा सुखाद् विशति मारुतः॥
मारुते मध्यसंचारे मनः स्थैर्यं प्रजायते।
यो मनः सुस्थिरीभावः सैवावस्था मनोन्मनी॥
तत्सिद्धये विधानज्ञाश्चित्रान् कुर्वन्ति कुम्भाकान्।
विचित्रकुम्भकाभ्यासाद् विचित्रां सिद्धिमाप्नुयुः॥

---

१. शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥
प्रशान्तात्मा विगतभी ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत् मत्परः॥
युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति॥ (गीता ६।११-१५)

२. 'तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणामामः' (पा० यो० सू०)

३. 'बाह्याभ्यन्तस्तरम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः' (यो० द० २।५०)

कुम्भकभेदाः—

सूर्यभेदन-मुञ्जायी-सीत्करी-शीतली तथा ।
भस्त्रिका-भ्रामरी-मूर्च्छा-प्लाविनीत्यष्टकुम्भकाः ॥

विस्तरभयादेतेषां विधिप्रपञ्चो न विधीयते ।

त्रिविधस्य प्राणायामस्य स्वरूपाणि—

निष्क्राम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानिलेन ।
निरुद्ध्य संतिष्ठति रुद्धवायुः स रेचको नाम महानिरोधः ॥
बाह्यस्थितं प्राणपुटेन वायुमाकृष्य तेनैव शनैः समन्तात् ।
न रेचको नैव च पूरकोऽत्र नासापुटे संस्थितमेव वायुम् ।
सुनिश्चलं धारयते क्रमेण कुम्भाख्यमेतत्प्रवदन्ति तज्ज्ञाः ॥

केवलकुम्भकः—यः किल बाह्यविषयकं, आभ्यन्तरविषयकं पूरकं, एतावुभावप्यतिक्रम्य—त्यक्त्वा स्वयमेव केवलो वर्तते, सः प्राणायामः केवलकुम्भकसंज्ञको[1] भवति ।

प्राणायामस्य फलम्—प्राणायामाद्[2] विवेकज्ञानावरणमधर्मादिकं नश्यति । तथा च मनुः—

दह्यन्ते ध्यायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

प्राणायामाभ्यासाच्च मनसो धारणासु योग्यता[3] भवति । प्राणायामस्थैर्ये सति 'ईश्वरी'त्यभिधां कुण्डलीमुन्निद्रां विधातुं महामुद्रादीनामभ्यासः कर्तव्यः । एकाश्च मुद्रा मनःशरीरशुद्धिप्रदा अनेकैश्वर्यप्रदाश्च वर्णिताः । ( मुद्राणां विस्तरस्तु योगतन्त्रग्रन्थेषु द्रष्टव्यः ) मुद्रा दश । यथा च—

तस्मात्सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम् ।
ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत् ॥
महामुद्रा महाबन्धो महावेधश्च खेचरी ।
उड्यानं मूलबन्धश्च बन्धो जालन्धराऽभिधः ॥
करणी विपरीताख्या वज्रोली शक्तिचालनम् ।
इदं हि मुद्रादशकं जरामरणनाशकम् ॥

तत्र महामुद्राभ्यासेन वातादयो दोषाः शाम्यन्ति, रजस्तमसी च विलीयेते । महाबन्धो हि सिद्धिप्रदो भवति । महावेधमुद्रा तु जरामृत्युहरा, वह्निवृद्धिकरा अणिमादिसिद्धिदात्री च कथिता । खेचरी मुद्रासिद्धौ व्याधिजरामृत्युरपयाति । तथा च—

---

१. 'बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः' ( यो० द० २ । ५१ )
२. ततः क्षीयते प्रकाशावरणम्' (यो० द० ५२)
३. 'धारणासु च योग्यता मनसः' (यो० द० २ । ५३)

न रोगी मरणं तन्द्रा न निद्रा न क्षुधा तृषा ।
न च मूर्च्छा भवेत् तस्य यो मुद्रां वेत्ति खेचरीम् ॥
एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी ।
एको देवो निरालम्बो ह्येकावस्था मनोन्मनी ॥

एवमेवापरा मुद्रा अपि शारीरमानसमलप्रक्षालनपरा आधिव्याधिप्रशमनपराश्च समाख्याताः ।

**प्रत्याहारः**--प्रत्याह्रियन्ते विषयेभ्य इन्द्रियाणि, यस्मिन् कर्मणि स प्रत्याहारः[1] । विषयेषु विचरतामिन्द्रियाणां विषयेभ्यस्तेषां बलादाहरणं[2] प्रत्याहारः ।

विषयानुषक्तानीन्द्रियाणि निगृह्य[3] चित्तेऽभिनिवेशयेत्, तथा सति इन्द्रियाणां चित्तस्वरूपाकारत्वं भवति, स चायं प्रत्याहारः । इन्द्रियाणां[4] विषयेषु चरतामनु यदा मनोऽनुधावति, तदा हि प्रज्ञाऽपराध्यति । प्रज्ञापराधाच्च मानसविकारोद्भवः । अतश्च मानसामयप्रतिषेधार्थं प्रत्याहारस्य विशिष्टं पदमामनन्ति सुधियः ।

**प्रत्याहारस्य फलम्**--प्रत्याहाराद्[5] इन्द्रियाणां परमो विजयो भवति । इन्द्रियाणि किल हठान्मनो विषयेषु हरन्ति । यदा च तानि संयम्य जितेन्द्रियत्वमुलभ्यते, तदैव प्रज्ञा[6] समुदेति । इन्द्रियजयिनो विवेकज्ञानं प्रतिष्ठितं भवति ।

**धारणा**—यत्र देशे ध्येयं चिन्तनीयं, तत्र ध्यानाधारविषये चित्तस्य यो बन्धः, स एव धारणा[7] इत्युच्यते । सा च धारणा क्व कीदृशी विधेयेति 'षट्चक्रनिरूपणे' वैशद्येन विर्णितम् । तथा च मूलाधारे गणेशे धारणा, स्वाधिष्ठाने ब्रह्मणि धारणा, मणिपूरे विष्णुधारणा, अनाहते रुद्रे धारणा, विशुद्धे सदाशिवस्वरूपे धारणा, आज्ञाचक्रे गुरौ धारणा विधेयेति ।

---

१. 'स्वविषयाऽसम्प्रयोगे चित्तास्वरूपाऽनुकार इवेन्द्रियाणां प्रत्याहारः (यो० द० २ । ५४)

२. इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
बलादाहरणं तेषां 'प्रत्याहारः' स उच्यते ॥ ( या० स्मृ० )

३. शब्दादिष्वनुषक्तानि निगृह्याक्षाणि योगवित् ।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ ( विष्णुपु० )

४. इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥

५. 'ततः परमावश्यतेन्द्रियाणाम्' (यो० द० २ । ५५)

६. यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥
तानि सर्वाणि संयम्य युक्त आसीत् मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ (गीता २ । ६०–६१)

७. 'देशबन्धश्चित्तस्य धारणा' (यो० द० ३।१)

प्रसङ्गात् संक्षेपतः नाडीचक्रस्थितिर्वर्ण्यते । तद्यथा—शरीरे पृष्टभागे मूलाधाराऽवधिको ग्रीवान्तः पृष्ठास्थिविशेषो मेरुरिति ख्यातिः, तस्य सव्यभागे—'इडा' नाडी, दक्षभागे च 'पिङ्गला' वर्त्तते। मेरोर्मध्ये तु सुषुम्ना नाम्नी नाडी वर्तते, सा च मूलाधाराद् ब्रह्मरन्ध्रगा। कन्दमूलादारभ्य शिरः स्थिताऽधोमुखसहस्रदलकर्णिकावर्तिद्वादशदलपङ्कजाधः पर्यन्तं स्थितेति यावत्। सहस्रदलकमलं सुषुम्नारहिते शून्यप्रदेशे ब्रह्मरन्ध्रसमवहितं विद्यते। सर्वचक्राणि संवेष्ट्य भ्रूमध्याद्वेणीबन्धरूपेण नासारन्ध्रमिलिते। तथा च—

गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः।
चतुरङ्गुलविस्तारं कन्दमूलं (मूलाधारं) खगाण्डवत् ॥
नाड्यस्तस्मात् समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥ इति।

मेरुमध्तवर्तिसुषुम्नाया अन्तःस्थिता 'वज्रा' नाम्नी नाडी विद्यते, सा च मेढ्रदेशात् शिरसि परिणताऽस्ति। वज्राया मध्ये 'चित्रिणी' नाम्नी नाडी विद्यते, सा च लूतातन्तूपमेया मूलाधारादीन् सुषुम्नावज्रासंलग्नान् चक्रविशेषान् भित्वा चक्राणां ग्रन्थनरचनया देदीप्यते। चित्रिण्या मध्यवर्तिनी 'ब्रह्मनाडी' वर्तते, सा च मूलाधाराऽऽज्ञाचक्रयोर्मध्यदेशे स्थिता विद्युत्प्रकाशाऽतिसूक्ष्मा। मूलाधारादारभ्य परमाशक्तिपर्यन्तं[1] सर्वं मूलाधारचक्रसत्ताकमस्ति। तत्सर्वं ध्यात्वा योगी वाचामधीशो, सर्वविद्याविनोदी, नित्यानन्दमयः, विशिष्टात्मा च भवति। एवञ्च धारणया मनोविकाराः प्रशाम्यन्तीति।

## स्वाधिष्ठानचक्रध्यानफलम्

स्वाधिष्डानाख्यमेतत् सरसिजममलं चिन्तयेद्यो मनुष्य—
स्तस्याहंङ्कारदोषादिसकलरिपुः क्षीयते तत्क्षणेन।
योगीशः सोऽपि मोहादद्भुततिमिरचये भानुतुल्यप्रकाशो
गद्यैः पद्यैः प्रबन्धैर्विरचयति सुधावाक्यसन्दोहलक्ष्मीः[2] ॥

'अनाहतचक्रं' ध्यात्वा योगीशो, ज्ञानीशो, जितेन्द्रियः काव्याम्बुवारिधरश्च भवति।

'विशुद्धचक्रे' चित्तधारणात् त्रिकालदर्शी चिरञ्जीवी च भवति।

आज्ञाचक्रे चित्ते लीने सति अष्टसिद्धीरवाप्नोति।

एवञ्चाभ्यन्तरे तत्तत्स्थानस्थचक्रेषु धारणां विदध्यात्।

ध्यानम्—यत्र धारणा भवेत्, तत्र विषये चित्तवृत्तेः एकाग्रता ध्यानम्[3]।

---

१. सुषुम्नामुखाद् द्व्यङ्गुलोर्ध्वं 'वज्रा' नाडी वर्तते' तत्र 'त्रिकोणं' मदनस्याधिष्ठानमास्ते। तत्त्रिकोणमध्ये 'स्वयम्भूशिवलिङ्गं' तदूर्ध्वं सूक्ष्मा जगन्मोहिनी 'कुण्डलिनी' वर्तते। ऊर्ध्वं 'परमा' शक्तिरास्ते। पर आत्मा मीयतेऽनया इति परमा, सा च नित्यज्ञानप्रदा, तस्या भासा सकलं भासते।

२. ष० च नि०।

३. 'तत्र प्रत्ययैकतानता ध्यानम्' (यो० द० ३।२)

स्थूलसूक्ष्मादि यत् किमपि वस्तु यत्र चित्तवृत्तौ तद् ध्यानम्। यत्र प्रदेशे चित्तं धृतं तत्र ज्ञानस्य या एकतानता विसदृशपरिणामपरिहारद्वारेण यदेव धारणायालम्बीनीकृतं तदालम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानम्।

**समाधिः**—सम्यग् आधीयते ध्येयं यत्र वृत्तिविषये, सः समाधिः[1]। यदा च मनः एकाग्रीक्रियते, यदा च पूर्वोक्तलक्षणं ध्यानं ध्येयविषयाकारेणैव साक्षिणि निर्भासते, न च ज्ञानस्योदयो भवति, ( वृत्त्यन्तररहितम् ) अतश्व स्वस्य स्वरूपशून्यमिव भवति, ध्येयस्वरूपाकारमात्रं भवतीति, तदा ध्यानमेवेदृश्यवस्थायां समाधिरित्युच्यते।

एवञ्च योगेन मनः स्थिरं भवति। इच्छानुसारञ्च समीहितेऽर्थे मनः समाधीयते। योगाभ्यासान्मनसो निर्दोषतया न मानसामया आक्रामन्ति। अतिप्राक्तनकालादेव पूर्वोक्तप्रकारेण मनःसंयमोपायाः शास्त्रेषु निर्दिष्टाः सन्ति, यद्बलेन प्रबद्धसत्त्वा महर्षयो परां सिद्धि जग्मुः।

अधुनातने वैज्ञानिके काले विविधैः रासायनप्रयोगैः विद्युदुद्दीपनैश्च मानवमस्तिष्कस्य विभिन्नान् केन्द्रान् दमयन्ति समुत्तेजयन्ति वा तज्ज्ञाः। मस्तिष्कञ्च मानवचेष्टायां नियामकं यन्त्रम्। अत्र स्थितं मनः जन्मजन्मार्जितभावनाप्रवणं समस्तानाञ्च क्रियाणां प्रवर्तकम्। अहर्निशमनवरतं मस्तिष्कस्थाः शतखर्वसंख्याकाः तन्त्रिकाः सक्रियाः सन्ति। प्रत्येकस्मिंश्च शरीरभागे तन्त्रिकाः प्रसृताः सन्ति। तासाञ्च केन्द्रं मस्तिष्कम्। यथा च—समस्तनगरप्रसृततन्तु ( तार ) नियन्त्रकमेकं 'टेलीफोन-एक्सचेञ्ज' संस्थानं भवति, यच्चाखिलस्य नगरस्य संवादसम्प्रेषणव्यवस्थामभिनिर्वर्तयति, तथैवाखिलशरीरविसृतास्तन्त्रिकाः शरीरभागेभ्यः मस्तिष्काभिमुखमानयन्ति सन्देशराशिम्, ताश्चाभिवाहिन्यः उपवाहिन्यश्च—मस्तिष्कात् शरीरभागेषु सन्देशं वहन्ति। तन्त्रिकातन्तुमिलनकेन्द्रस्थमन्तर्ग्रथनं सन्देशानां समन्वयं विधते।

विविधैर्विषमैरुन्नतैरवनतैर्निर्मितं किलास्ति मस्तिष्कम्। अत्र च विविधानि संवेदनाकेन्द्राणि सन्ति। वेदनावेदकं चेतककेन्द्रं सुखानुभूतिकरमधश्चेतकं क्रोधभयमूलककेन्द्रप्रभृतीनि। मस्तिष्कं मेरुरज्जुश्च मानवानां तन्त्रिका-तन्त्र निर्माणे प्रभवतः।

मस्तिष्कयन्त्रं हि विद्युदूर्जयैव तासु तासु जाग्रत्स्वप्नाद्यवस्थासु सक्रियं भवति। विद्युत्स्रोतांसि च तन्त्रिका कोशिका एव। ताश्च सूक्ष्म डाइनमो

---

१. 'तदेवार्थमात्रनिर्भासकं स्वरूपशून्यमिव समाधिः' (यो० द० ३।३)
तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ॥ ( विष्णुपु० )

सदृशं कार्याणि कुर्वन्ति। शरीरगतशर्कराभागेन प्राणवायुभागेन चेन्धनेन ता विद्युत्प्रवाहमाविष्कुर्वन्ति। विद्युदावेशश्च तन्त्रिकास्पन्दनहेतुः। तन्त्रिकास्पन्दनञ्च अन्तर्ग्रथनं गच्छति, ततश्च स्वेष्टदेशे प्रेष्यते, तत्र च गत्वा तादृशमुद्दीपनं विदधाति, येन च सुखं, दुःखं क्रोधं दयां वा प्रतीमः।

कस्यचन वस्तुनः परिचये च मस्तिष्कं श्रमं विधत्ते। स्मृतिकेन्द्रं तन्त्रिकाभिः वस्तुवर्णगन्धरसस्पर्शादिकविषये सूचनामवाप्य तद्वस्तु परिचेतुं क्षमं भवति, ततश्च तदभिव्यक्ततां याति। संज्ञास्वरूपादिकपरिचयपूर्वकं तज्ज्ञानं संजायते।

शारीरविदः, शरीरक्रियाविदश्च जीवात्मविषये, मनोविषये, मस्तिष्कविषये चाधिकाधिकं ज्ञानमर्जयितुं कृतश्रमाः परिलक्ष्यन्ते सम्प्रति। मस्तिष्कतलस्यागाधे रहस्यमये खाते यत्किमपि ज्ञानमौक्तिकमन्तर्हितमास्ते, तदन्वेषणलालसमानसा वैज्ञानिका प्रयतमाना दृश्यन्ते।

प्राक्तने काले रसायनौषधैः मस्तिष्कस्योद्बोधनार्थं प्रयोगाः कृता आसन्। यथा सोमरसपानम्। आयुर्वेदीयासु संहितासु च विधिना मद्यपानस्य गुणा वैशद्येन वर्णिताः। गंजा-भङ्गा-धुस्तूर-अहिफेनादिमादकद्रव्याणि मस्तिष्कमुत्तेजयन्ति, जनाश्च विषादशोकाद्यपनयनार्थमासेवन्ते तानि किल। कृत्रिमरूपेण च तादृशानि भेषजानि निर्मीयन्तेऽधुनातनैराचार्यैः, यानि मस्तिष्कशान्तिं विदधति। रसायनौषधिप्रभावाद् मस्तिष्कनियामिका विद्युदुत्पद्यते। याश्च भावनाः, यश्च विचारः, या चानुभूतिः संजायते, तत्र सर्वत्र रासायनिकी कापि क्रिया भवति, यत्र च तन्त्रिकाणां स्पन्दनं कारणीभूतमवतिष्ठते। तादृशाश्च यान्त्रिका विद्युत्प्रयोगा विधीयन्ते, यैश्च मस्तिष्कमुद्दीप्तं भवति। कश्चन शान्तस्वभावोऽपि प्राणी विद्युत्प्रवाहप्रयोगकाले क्रोधपरवशो भवति, अपसारिते च विद्युद्वेगे पुनरपि शान्तो भवति। अथ च मस्तिष्कस्य प्रदेशविशेषे विद्युत् प्रयोगेण तस्मिन् जन्तौ प्रेमोद्रेको भवति, वात्सल्यं वा जागर्ति, येन स खलु प्रेमपरवशः पार्श्ववर्तिजन्तुना सह क्रीडति, आमोदमातनोति परस्परम्, जिह्वया लेढि वा। तथा हि प्रेमोत्पादकं घृणोत्पादकं, क्रोधोत्पादकं यद्वा तेषां संवेगानामुत्पादकं केन्द्रं वरीवर्ति, यत्र विद्युदावेशेन ते ते भावाः समुद्भवन्ति।

एवञ्च सुखस्य वेदनायाश्च मुख्यं केन्द्रमधश्चेतकमुच्यते। क्षुधा, पिपासा, निद्रा, कामपिपासादिकञ्चाधश्चेतकाधीनमेव। प्रयोगाश्च दृष्टचरास्तादृशाः, यैश्च कस्यचन जन्तोः क्षुधा तीव्रतरा सम्पन्ना यद्वा क्षुधा मन्दाग्नित्वमधिगता।

सन्ति हि विद्युत्प्रयोगा इव रसायनप्रयोगा अपि यत्प्रयोगेण मूकोऽपि वाचालतां याति। आशाहीनेऽपि जने तीव्राऽऽशा जागर्ति। एतद्वैपरीत्येन आशावन्तोऽपि नैराश्यपरवशाः म्रियन्ते। संसारे विभिन्नेषु देशेषु वैज्ञानिकाः

प्रयतमानाः सन्ति तादृगौषधान्वेषणाय, यत्प्रयोगेण यथेष्टं शत्रुपक्षपक्षतिशातनं विधातुमुत्सहेरन्। 'शत्रूणां बुद्धिनाशोस्तु' यथा, तथाविधाः प्रयोगा अन्विष्यन्ते गवेषकैः।

भारतवर्षे चासन् तादृशाः कलाविदो विद्वांसः, ये किल संमोहन-वशीकरण-उच्चाटनादिप्रयोगदक्षाः। एतत्प्रयोगैश्च यथेप्सितमनुजग्मुः। कविकुलगुरुणा कालिदासेन च रघुवंशे लिखितं यत् 'संमोहनं नाम सखे ममास्त्रम्'[१]। इति, अग्रे च'--'न चारिहिंसा विजयश्च हस्ते' इत्यादि लेखतः प्रतीयते, यदासीत् कोऽपि प्रयोगः, यत्प्रयोगेण शत्रूणां मतिभ्रमोऽभवत्, बुद्धौ च जाड्यमभवत्।

मस्तिष्कस्यानुभूतिमूलककेन्द्रे च यदैव व्यत्यासो भवति, तदैव विभिन्ना उन्मादा जायन्ते। समुद्दीप्तव्यत्याससन्दमनेन च बहुविधा उन्मादाः शाम्यन्ति। यथा--मदिरोन्मादः, हत्योन्मादः, चौर्योन्मादः कामोन्मादश्चेति। किन्तु एवं विधेष्वामयेषु विद्युत्प्रवाहद्वारा या चिकित्सा विधीयते, सा तु तावदेव लाभकरी भवति, यावच्च तत्प्रभावस्तिष्ठति, गते च प्रभावप्रवाहे पूर्वावस्था पुनरप्यापद्यते। अद्यप्रभृति याश्चौषधय दृष्टिपथमानीतास्ता सर्वा अपि तावदेव सफलाः, यावत्कालं तत्प्रभावमदोऽवतिष्ठते, शान्ते च मदे महच्छैथिल्यमनुभूयतेऽङ्गेषु। बह्वयश्चौषधयो विषायन्ते प्राणहरणे।

तथाहि मनोरोगविषये यदपि शान्तिप्रदमौषधमुपलभ्यते, तदखिलमेव नैकान्तेन हितकरमपि तु स्वल्पेनापि प्रमादेन प्राणहरं भवति। अन्यतश्च 'योग' शास्त्रनिर्दिष्टपथाऽभ्यासदार्ढ्येन मानसरोगा विजिता भवन्ति, न च पुनराक्रमण-भयमुपद्रवभयं वा भवति। दृष्टचरमेतद् यद्योगिनः कतिपयमासमनाहाराः सन्तोऽपि स्वस्था दृश्यन्ते। ते हि योगाभ्यासबलात् क्षुधाकेन्द्रं (मस्तिष्कगतं) दमयन्ति। योगबलेन चाष्टसिद्धिरवाप्यते। यत्सिद्धौ च--

आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रियाः।<br>
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम्॥<br>
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम्।<br>
शुद्धसत्त्वसमाधानात् तत्सर्वमुपजायते॥

तत्सर्वमुपलभ्यते। तथा च—पूर्वोक्तैरष्टाङ्गयोगैश्चित्तममलं विधीयते, द्विसप्ततिसहस्रसंख्याकाश्च नाड्यो निर्मलाः सत्यः स्वस्वव्यापारेषु यथावद् व्यापृता भवन्ति।

एवं हि मानसामया विलीयन्ते, प्रज्ञायाश्चोदयात् न चाभिभूयते रजस्तमोभ्यामिति। तथा हि विनिवर्तन्ते भूतविद्यासम्बन्धिव्याधयः। अत एवामनन्ति सुधियो यत् 'नास्ति योगसमं बलमिति'। एवञ्च यौगिकी चिकित्सा व्याख्याता भवति।

---

१. सर्गः—५।

## उपायाभिप्लुता[1] चिकित्सा

अतिप्राक्तनकालादेव चरकादयो महर्षय मानसिकव्याधिचिकित्साविधौ साफल्यभाजोऽभवन् । तत्र च काले सेयं किकित्साविधिः नितरां प्रायोगिकीं दशामापन्ना सती प्रयुज्यते स्म । तथा च 'उन्मादचिकित्सायां' भयोत्पादनेन चिकित्साविधानमुक्तम्–'अपेतलौहकाष्ठादित्रातकोपकरणे[2] निर्जने तमोमये वेश्मनि रोगिणं प्रतिरुन्ध्यात् । एतेन च क्षुब्धं विभ्रान्तं मनः शान्तिमाप्नोति हठाच्चैकाग्रतां व्रजति ।'

'अन्यैश्चोपायैः[3] त्रासयेच्च—निर्विषैः सर्पैः, शिक्षितैः सिंहैः हस्तिभिश्च, शस्त्रधारिभिस्तस्करैः, कृपाणकरैर्भयङ्करैः कृत्रिमशत्रुभिर्वा ।'

'राजपुरुषाः[4] व्याधितं रज्ज्वा निगडीकृत्य ग्रामाद्बहिर्नीत्वा वधादिव्यपदेशेन राजाज्ञां श्रावयित्वा भृशं त्रासयेयुः ।'

एवञ्च शारीरयन्त्रणापेक्षया[5] प्राणभयं भवति, अतश्च पूर्वोक्तयन्त्रणाविधानेन विभ्रान्तंचेतः सहसा प्रशममेति, तथाहि सोऽयमुन्मादो निवर्तते ।'

'काम[6]-शोक-भय-क्रोधेर्ष्या-लोभसम्भवांश्च विकारान् एतत्प्रतिद्वन्द्वैरेव शान्तिं नयन्ति भिषजः ।' 'यदि[7] चेत् प्रियवस्तुविप्रयोगाद् विनाशाद्वा कस्यचन मन उपहतं भवति, तदा तत्सदृशवस्तुप्रापणेन, सान्त्वनेन, आश्वासनेन, सन्तोषदानेन च चलितं मनः शमं नयेत्' अत्युद्धतं चोन्मादिनं भयादिभिरेव चिकित्सेत् । तथा च--

---

१. 'उपायो नाम—भयदर्शन-विस्मापन-विस्मारण-क्षोभण-हर्षण-भर्त्सन-वध-बन्ध-स्वप्न-संवाहनादिरमूर्तो भावविशेषः, यथोक्ताः सिद्ध्युपायश्चोपायाभिप्लुताः ।' (च० वि० ८)

२. कशाभिस्ताडयित्वा वा सुबद्धं विजने गृहे ।
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य तथा शमम् ॥ (च० चि० ९।८८)

३. सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैः गजैश्च तम् ।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥ (च० चि० ९।८९)

४. अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ (च० चि० ९।९०)

५. देहदुःखभयेभ्यो हि परं प्राणभयं स्मृतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ (च० चि० ९।९१)

६. काम-शोक-भय-क्रोध-हर्षेर्ष्या-लोभसंभवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ (च० चि० ९।९१)

७. इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तिसान्त्वाश्वासैः शमं नयेत् ॥ (च० चि० ९।९२)

तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः[1] ॥

अथ च—

आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥
काम्यैरर्थैः मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैः शाम्यति ह्याशु ज्वरः क्रोधसमुत्थितः[2] ॥

एवमेव मन्त्रचिकित्सा च साफल्येन सर्पदष्टेषु जनेषु सम्प्रत्यपि प्रयुज्यते । विविधाश्च मन्त्रास्तादृशा अपि निर्दिष्टाः, ये किल विप्लुतं मनः एकाग्रतां नयन्ति । यथा वा 'मदात्यये'[3] विहाराः समुद्दिष्टाः, येषां प्रयोगेण विकृतं मनः प्रकृतिमायाति । विशेषतश्च योषापस्मारेऽतत्त्वाभिनिवेशे, गदोद्वेगेऽपस्मारे, देवाद्युन्मादे च उपायाभिप्लुतां चिकित्सां विना नैकान्ततो विकारोपशमनं जायते ।

अत एव यस्य कस्यापि मानसविकारस्योपशमने पदे पदे प्रकारान्तरेण उपायविधयो निर्दशिताः ।

पादचतुष्टयस्य उपायाभिप्लुतत्वम्[4]—चिकित्सायाश्च प्रयोगपथमानीयमानस्य कस्याप्युपायस्य साफल्यं गुणवत्पादचतुष्टयाधीनमेव । न हि विगुणे पादचतुष्टये कोऽप्युपायः सिद्ध्यति ।

तत्र पादचतुष्टयम्[5]—भिषग् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।
गुणवत्कारणं ज्ञेयं विकारव्युपशान्तये ॥

भिषक्—श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥

द्रव्यम्—बहुता तत्र योग्यत्वमनेकविधकल्पना ।
सम्पच्चेति चतुष्कोऽयं द्रव्याणां गुण उच्यते ॥

परिचारकः—उपचारज्ञता दाक्ष्यमनुरागश्च भर्तरि ।
शौचं चेति चतुष्कोऽयं गुणः परिचरे जने ॥

आतुर— स्मृतिर्निर्देशकारित्वमभीरुत्वमथापि च ।
ज्ञापकत्वं च रोगाणामातुरस्य गुणाः स्मृताः[6] ॥

---

१. भै० र० उ० चि० १८ । २. चि० चि० ३।३१९-२० ।
३. सु० सं० उ० त० ४७ ।
४. 'यथोक्ताः सिद्ध्युपायाश्च परिचारकादयोऽत्र दशविधपरीक्ष्ये साक्षादनुक्तास्तेऽपि उपायाभिप्लुता एवेत्यर्थः' (च० वि० ८।८७ चक्रपाणिः)
५. च० सू० ९।३, ६, २१, ७ ।
६. च० सू० ९।८। ९ ।

यद्यपि चिकित्सायाः साफल्ये चतुष्टयस्यापि कारणत्वं तथापि तेषु वैद्यस्य प्राधान्यसम्,[1] यतो हि वैद्यपराधीनं पादत्रयं, न हि वैद्यादृते ते क्रियासाफल्यमावहन्ति ।

तथाहि स्मृतिमान् युक्तिज्ञः सत्त्ववान् प्रतिपत्तिज्ञो भिषगुपायैः रोगपङ्कार्णवे मग्नं जनमुद्धर्तुं प्रभवति स्वबुद्धिबलेन ।

## मान्त्रिकी चिकित्सा

**मन्त्राणामुत्पत्तिस्तेषां कार्यकारित्वे हेतुश्च** —यदा च पिण्डितशरीरो मर्त्यो जायते, तदैव तस्मिन् सर्वदेहानुगा पराशक्तिरधितिष्ठति । सा च सर्वदेवमयी सर्वमन्त्रमयी सर्वसूक्ष्मतरा शब्दब्रह्मस्वरूपिणी देवी प्रबुद्धा सती मन्त्रमयं जगत् सूते । एवञ्च शब्दार्थात्मिका सा शक्तिः समस्तानामर्थानां सिद्धयेऽनेकधा मन्त्रान् सृजति । येषां विस्तरेण वर्णनमुपलभ्यते, तन्त्रग्रन्थेषु[2] । स्वरैर्विना वर्णाः नाभिव्यक्ततां यान्ति । अतश्च स्वराः शिवशक्तिस्वरूपाः सम्मताः, स्वरयुक्ताश्च वर्णाः शिवशक्तिमयाः समाख्याताः । एवं हि वर्णानामुत्पत्तिर्भेदाश्च वर्णितास्तत्र च अष्टात्रिंशत्कला व्यवस्थिताः सन्ति--अमृता, मानदा, तुष्टिः पुष्टिः, शशिनी प्रभृतयः । प्रत्येकेषां ककारादिवर्णानां कलानां निर्देशः फलश्रुतिश्च वर्णिता । कलानां नामानि स्वराणां च शक्तयो विशदं वर्णिताः 'शारदातिलके'[3] । मन्त्रसिद्ध्यर्थं च दीक्षाप्रकारो वर्णितः । तस्मिंश्च प्रसंगे तत्र तत्र कोष्ठे तत्तद्देवानां पूजनं विहितम् । प्रपञ्चयागवर्णने तत्फलश्रुतिरेवं प्रतिपादिता—

जपेन्मन्त्रान् भजेद्देवान् यजेदग्निमनन्यधीः ।
द्रव्यैश्च जुहुयादग्नौ मन्त्रवित्तन्त्रचोदितैः ॥
अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः ।
सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः ॥
अमीभिर्जुहुयाल्लक्षं तदर्धं वा समाहितः ।
सर्वान् कामानवाप्नोति परां सिद्धिं च विन्दति ॥
एभिरर्कसहस्राणि हुत्वा मन्त्री विनाशयेत् ।
रिपून् क्षुद्रग्रहान् भूतान् ज्वराञ्छापांश्च पन्नगान्[4] ॥

**तत्र सर्वकर्मसिद्धिमन्त्रः—**

बलिशान्तीष्टकर्माणि कार्याणि ग्रहशान्तये ।
मन्त्रश्चायं प्रयोक्तव्यस्तत्रासौ सर्वकामिकः[5] ॥

---

१. तत्रैव ९।१०।२५ ।
२. शारदातिलकं प्रथमपटलं द्रष्टव्यम् ।
३. शा० ति० पटलम् २ ।
४. शा० ति० पटलम्—६।७०।७३ ।
५. च० द० बालचि० ७३ ।

'ओं नमो भगवते गरुडाय त्र्यम्बकाय सदस्तव स्तुतः स्वाहा ।
ओं कं पं टं शं वैनतेयाय नमः । ओं ह्रीं ह्रूं क्षः ॥'

**बालकरक्षामन्त्रः—**

'ओंकारी सुवर्णपक्षी बालकं रक्ष रक्ष स्वाहा'

तत्र च–प्रथम–द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्तम-अष्टम-नवम-दशम-एकादश-द्वादशदिवसमासवर्षेषु बालकस्य नाम मन्त्रेषु (यथोक्तेषु) संयोज्य प्रार्थनां कुर्याद् बलिं चोपहरेत् । तेन साधु भवति[1] ।

**नागग्रहजे विषे मन्त्रप्रयोगः—**

'अरिष्टाबन्धनं मन्त्रप्रयोगश्च विषापहः[2]' ।

अथ च मृत्कुम्भादापो[3] हस्ते गृहीत्वा मन्त्रोच्चारपूर्वकं रोगिणं प्रोक्षयन् रक्षाकर्म कुर्यात् । राक्षसादिप्रयुक्तकृत्याभयत्राणार्थं रक्षोभयनाशार्थञ्च रक्षाकर्म क्रियते, 'ब्रह्मा च तद्रक्षाकर्म अनुमन्यताम्' इति स्तूयते । तथा च मन्त्रः[4]—

नागा पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः ।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥

अमीमिश्चतुर्दशभिर्मन्त्रैः रक्षाविधानं वर्णितं सुश्रुताचार्येण ।

एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः ।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥

मन्त्राभिमन्त्रितमेवौषधं सफलं भवति । अतश्चौषधानां मन्त्रेणाभिमन्त्रणमादिष्टम्—

ॐ ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु[5] ते ॥

इत्येवमभिमन्त्र्योदङ्मुखं प्राङ्मुखं वाऽऽतुरं पाययेत् ।

मन्त्राश्च सत्यवादिभिर्तपस्विभिर्विद्वद्भिरगदङ्कारैश्चेत्प्रयुक्ताः स्युस्तदा नैव वितथा भवेयुः । तेजोयुक्तैराप्तैर्ब्रह्मर्षिभिर्मन्त्रप्रयोगेण यथा द्रुतमेव विषप्रभावो निवार्यते, न तथाऽगदैरोषधैरपि कर्तुं पार्यते । मन्त्राश्च शुभे पर्वणि ग्रहीतव्या भवन्ति । मन्त्रग्राहिभिश्च स्त्री-मांस-मद्याशुचिवस्तुपरित्यागो विधेयः । मिताहारैः, कायवाङ्मनोविकाररहितैः, कुशास्तरणशायिभिः, देवपूजकैः बलिगन्धमालोपहारप्रदातृभिरेव साधकैः मन्त्रसिद्धिरवाप्यते । मनोविकारान् काम-क्रोध-लोभ-मोह-मदादीन् परित्यज्य मन इन्द्रियाणि च संयम्य परया श्रद्धया देवार्चनेन पूर्णेन च विश्वासेन मन्त्रसिद्धिरधिगम्यते । सर्वग्रहबाधापनयनार्थं जपः—

---

१. च० द० रावण० बालतन्त्रम् ।
२. च० द० विषचि० ।
३. सु० सं० सू० ५।२०।३३ ।
४. सु० सं० सू० ५।२०।३३ ।
५. च० क० १।१४ ।

ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् ।
सर्वव्याधि चिकित्सन्तं जपन् सर्वग्रहान् जयेत् ।।
तथोन्मादानपस्मारानन्यं वा चित्तविप्लवम् ।
महाविद्याञ्च मायूरीं शुचिं तं श्रावयेत् सदा ।।
भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।
जपन् सिद्धांश्च मन्त्रांश्च ग्रहान् सर्वानपोहति[1] ।।

**नागदंशचिकित्सामन्त्रः[2]--**

'ऊं नमो भगवते नीलकण्ठाय' एतन्मन्त्रजपेन दंष्ट्राविषं विनश्यति । विषघ्नमन्त्रौषधाध्याये—विषनाशनार्थं मन्त्रप्रयोग आख्यातः[3] । मन्त्रः—'ह्रीं ह्रीं अमलपक्षि' स्वाहा ।

**मण्डलिविषनाशनमन्त्रः--**

'ऊं नमो भगवते नीलकण्ठाय हूं फट्' ।

**देवादिग्रहोपद्रवनाशनमन्त्राः[4]**--महासुदर्शन-व्योमव्यापी-विटपनासिक-नारसिंह पाताल-चण्डीप्रभृतिमन्त्राणां प्रयोगेण देवादिग्रहोपद्रवाः शाम्यन्ति ।

**बालग्रहबाधायाम्[5]**--'ऊं नमो सर्वमातृभ्यो--रुद्रो ज्ञापयति' इति मन्त्रप्रयोगो निर्दिष्ट आस्ते । अथ च 'ऊं नमो भगवति वस वस' तथा 'ब्रह्माकुमारम्' प्रभृतिमन्त्राणां वैशद्येन वर्णनमुपलभ्यते ।

भूतप्रतीकारार्थं चतुर्दशविद्याः परिगणिताः । ताश्च तपोबलेनैव साध्याः, यन्त्रम्, तन्त्रम्, मन्त्रादिकञ्च प्रायोगिकं शास्त्रोदितञ्च तपसैव सिद्ध्यति । यक्षिणी, भैरवी, कर्णपिशाचिनी, प्रभृतीनाञ्च सिद्धिरवाप्यते तज्ज्ञैरिति ।

पूजाविधाने, बलिप्रदाने-यज्ञेन, होमेन, दानादिभिश्च भूतग्रहनिवृत्तिर्जायते । आभिश्च क्रियाभिस्तुष्टा देवादयो नैरुज्यमावहन्ति । तथा च पाठ्यरूपेण कवचं, स्तोत्रं, सूक्तं, विष्णुसहस्रनामप्रभृतिस्तुतिग्रन्थाः, घण्टाकर्णस्तोत्रादिकञ्च मार्काण्डेयपुराणान्तर्गतञ्च कवचमहरह उपास्यते, श्रद्धालुभिर्लभ्यते च काम्यमिष्टमारोग्यञ्च । तथाहि--

अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ।
भूचरा खेचराश्चैव जलजाश्चोपदेशिकाः ।।
सहजाः कुजला माला डाकिनी शाकिनी तथा ।
अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ।।
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ।
ब्रह्मराक्षसवेताला कूष्माण्डा भैरवादयः ।।

---

१. अ० हृ० उ० ४।५०।५२ । २. अ० पु० अ० २९५ सम्पूर्णं द्रष्टव्यम् ।
३. अ० पु० अ० २९७ । ४. अ० पु० अ० ३०० ।
५. अ० पु० अ० २९९ सम्पूर्णं द्रष्टव्यम् ।

नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते[1] ।।

**सर्वारिष्टनिवृत्तये श्रीमहामृत्युञ्जयमन्त्रजपः**— तत्र मन्त्रः—'ऊं ह्रौं जूं सः भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृताद् भूर्भुवः स्वरों जूं सः-ह्रौं ऊं ।।'

**मतङ्गविद्या**—'सत्थव हिलि मिलि महामिलि कुरुट्टा अट्टे ममटे तुम्बिपसे करटे गन्धारि केयूरि भुजङ्गमि ओजहारि सर्षपच्छेदनि अलगणि लगणि पंसुमसि ककिकाकण्डि हिलि हिलि विडि विडि अट्टे मट्टे अजि हट्टे कुक्कुकुक्कुमति स्वाहा ।' इत्येतया मतङ्गविद्यया शमीमयीनां समिधानां ···· अष्टशतं····· समघ्वाज्यमैक-ध्यमालोडच हुत्वा·····अनन्तरं प्रतिसरं·····रुद्रमातङ्ग्या विद्ययाऽभिमन्त्र्य कण्ठे विसर्जयेत् ।

**रुद्रमातङ्गीविद्या**[2]—'नमो भगवतो रुद्रस्य मातङ्गि कपिले जटिले रुद्रशामे रक्ष रक्षेमं रिरक्षुमाज्ञापयेति स्वाहा इत्येतया रुद्रमातङ्ग्या प्रतिसरं बध्नीयात् । नास्याः सर्वभूतेभ्यो भयं भवति, आशा समृद्धचते, जीवत्पुत्रा सुभगा चाविधवा च भवति ।

**हारीतसंहितायाञ्च**—ग्रहगृहीतानां लक्षणानि चिकित्सा च विस्तरेण वर्णिता । तेषां चिकित्साविधिः, स्नानं, बलिप्रदानं, नस्यं, धूपनादिकञ्च वर्णितम् । मन्त्रप्रयो-गेण च रोगिणः तर्जनं निर्दिष्टम् । तत्र मन्त्रः 'ॐ नमो भगवते भूतेश्वराय कलि कलि नखाय रौद्रदंष्ट्राकरालवक्त्राय त्रिनयनधगधगितपिशङ्गललाटनेत्राय तीव्रकोपानलामिततेजसे पाशशूलखट्वाङ्गडमरुकधनुर्बाणमुद्गराभयदण्डत्रासमुद्रा-व्यपदसंयदाद्रदण्डमण्डिताय कपिशजटाजूटार्धचन्द्रधारिणे भस्मरागरञ्जितविग्रहाय उग्रफणिकालकूटाटोपमण्डितकण्ठदेशाय जयभूतनाथामरात्मने रूपं दर्शय दर्शय नृत्य नृत्य चल चल पाशेन बन्ध बन्ध हूङ्कारेण त्रासय त्रासय वज्रदण्डेन हन हन निशितखड्गेन छिन्धि छिन्धि शूलाग्रेण भिन्धि भिन्धि मुद्गरेण चूर्णय चूर्णय सर्वग्रहानावेशयावेशय स्वाहा ।'

भूतजे[3] ज्वरे 'भूतविद्या' चिकित्साविधिः प्रयोज्यः । अभिशापजे ज्वरे च शान्तिकर्म विधेयम् ।

**वैष्णवकवचः**—सर्वविधस्यापि[4] शत्रुरूपिणो रोगस्य, दैत्यासुरादेश्च सर्वतो-भावेन रक्षणार्थं 'वैष्णवकवचजपः' । तथा च—

> राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ।
> विवादे राजमार्गे च द्यूते कलहेषु च ।।
> अग्निचौरनिपातेषु सर्वग्रहनिवारणे ।
> विद्युत्सर्पविषोद्वेगे रोगे च विघ्नसंकटे ।।

---

१. मा० पु०—दु० स० श० कवचम् । २. का० सं०—रे० क० ८० ।
३. हा० सं० स्थानम् ३ अ० २, १९६ । ४. ग० पु० अ० १९४ ।

जप्यमेतज्जपेन्नित्यं शरीरे भयमागते।
अयं भगवतो मन्त्राणां कथितः परमो महान् ॥

अथ मन्त्रः–'ॐ अनाघनन्त ! जगद्बीज ! पद्मनाभ ! नमोऽस्तु ते !

ओं कालाय स्वाहा। ओं कालपुरुषाय स्वाहा। ओं चण्डाय स्वाहा। ओं चण्डरूपाय स्वाहा। ओं प्रचण्डाय स्वाहा। ओं प्रचण्डरूपाय स्वाहा। ओं सर्वाय स्वाहा। ओं सर्वरूपाय स्वाहा। ओं नमो भुवनेशाय त्रिलोकधात्रे इह विटि सिविटि सिविटि स्वाहा। ओं नमः अयो खेतये ये ये संज्ञायात्र दैत्यदानवयक्षराक्ष-सभूतपिशाचकूष्माण्डान्तापस्मारकच्छर्दनदुर्धराणामेकाहिक-द्वितीय-तृतीय-चातुर्थक-मौहूर्तिक-दिनज्वर-रात्रिज्वरसन्ध्याज्वर-सर्वज्वरादीनां इदं शरीरं मम पथ्यं तुम्बुरु स्फुट स्फुट प्रकोट लफट विकट दंष्ट्र पूर्वतो रक्षतु। ओं हैं हैं हैं हैं दिनकर सहस्रकालसमाहतो जय पश्चिमतो रक्ष। ओं निवि निवि प्रदीप्तज्वलनज्वालाकार महाकपिल उत्तरतो रक्ष। ओं बिलि बिलि मिलि मिलि गरुडि गरुडि गौरी गान्धारी विषमोहविषमविषमां मोहयतु स्वाहा। दक्षिणतो रक्ष रक्ष जय जय विजय तेन हीयते रिपुत्रासाहं कृतवाद्यतो भयरुदयवो भयो अभयं दिशतु च्युतः तदुदरमखिलं विशन्तु युगपरिवर्तनसहस्रसंख्येयोऽस्तमलमिव प्रविशन्ति रश्मयः।'

अपराजितामन्त्रः—'ॐ नमो भगवति वज्रशृंखले हन हन, ॐ भक्ष भक्ष, ॐ खाद, ॐ अरे रक्तं पिब कपालेन रक्ताक्षिभस्माङ्गि भस्मलिप्तशरीरे वज्रायुधे वज्रप्राकारनिचिते पूर्वां दिशं बन्ध बन्ध, ॐ दक्षिणां दिशं बन्ध बन्ध, ॐ पश्चिमां दिशं बन्ध बन्ध, ॐ उत्तरां दिशं बन्ध बन्ध, नागान् बन्ध-बन्ध, नागपत्नीर्बन्ध बन्ध, ॐ असुरान् बन्ध बन्ध, ॐ यक्षराक्षसपिशाचान् बन्ध बन्ध ॐ प्रेतभूतगन्धर्वादयो ये केचिदुपद्रवास्तेभ्यो रक्ष रक्ष, ॐ ऊर्ध्वं रक्ष रक्ष, ॐ अधो रक्ष रक्ष, ॐ क्षुरिकं बन्ध, ॐ ज्वल महाबले। घटि घटि ॐ मोटि मोटि सटावलिबज्राग्नि वज्रप्राकारे हुं फट्, ह्रीं ह्रं श्रीं फट् ह्रीं ह्रः फें फः सर्वग्रहेभ्यः सर्वव्याधिम्यः सर्वदुष्टोपद्रवेभ्यो ह्रीं अशेषेभ्यो रक्ष रक्ष।'

द्वितीयोऽपराजिता मन्त्रः—'ॐ नमो भगवति वज्रशृङ्खले। हन्तु भक्षयतु खादतु रक्तं पिब कपालेन रक्ताक्षि! रक्तपटे! भस्माक्षि। भस्मलिप्तशरीरे! वज्रायुधप्रकारनिचिते! पूर्वां दिशं बन्धतु, दक्षिणां दिशं बन्धतु, नागपतिं बन्धतु, भूतप्रेतगन्धर्वादयो ये ये केचित् पुत्रकास्तेभ्यो रक्षतु, ऊर्ध्वं रक्षतु, अधो रक्षतु, ज्वल महाबले! ह्येहि कोटिलोष्ट्रिशतावलि वज्राग्निवज्रप्रकरे! हुं फट् ह्रीं ह्रीं श्रीं फट् हुं हुं क्रूं फं फं सर्वग्रहेभ्यः सर्वदुष्टोपद्रवेभ्यो ह्रीं अशेषेभ्यो मां रक्षतु।'

इतीदं कवचं देवि सुरासुरसुदुर्लभम्।
ग्रहज्वरादिभूतेषु सर्वकर्मसु योजयेत्[1] ॥

महानिर्वाणतन्त्रम्—सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते।
विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥

---

१. योगिनीतन्त्रम्—तृतीयपटलम्।

कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः ।
शस्ताः कर्मसु सर्वेषु जपयज्ञक्रियादिषु[1] ॥

**सर्पविषनाशनमन्त्रः**—'ऊँ हृं सं । ऊँ नीलकान्ति दंष्ट्रिणि भीमलोचने उग्ररूपे उग्रतारिणि किलि किलि रक्तलोचने किलि किलि घोरनिःस्वने कुलु कुलु । ऊँ तडिज्जिह्वे निर्मांसे जटामुण्डे कट कट हन हन महोज्ज्वले चिलि चिलि मुण्डमालाधारिणि स्फोटय स्फोटय मारय मारय स्थावरं विषं जंगमं विषं नाशय नाशय । ऊँ महारौद्रि पाषाणमयि विषनाशिनि वनवासिनि पर्वतविचारिणि कह कह । ऊँ हस हस नम नम दह दह क्रुध क्रुध । ऊँ नीलजीमूतवर्णे विस्फुर विस्फुर । ऊँ घण्टानादिनि ललज्जिह्वे महाकाये क्षं हुं आकर्षविषं धन धन हेहर यं ज्वालामुखि वज्रिणि महाकाये अमुकस्य स्थावरं जंगमं विषं छिन्धि छिन्धि किटि सर्वविषनिवारिणि हुं फट् ।'

**तत्र मन्त्रप्रयोगविधिः**—नीलवर्णमेकं प्रस्तरखण्डं हस्ते गृहीत्वा मन्त्रेणानेनाभिमन्त्रयेत् । यत्र च सर्पादिदंशनं तत्र प्रस्तरं संयोजयेत्, तेन शनैः शनैर्विषं व्येति । यदा च विषमपगतं भवति, तदा तत्प्रस्तरखण्डं स्वयमेव पतति दंशस्थानात् ।

**सर्वाभीष्टसिद्धिमन्त्रः**—ऊँ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते ॥
( दुर्गासप्तशती )

अस्य मन्त्रस्य सपादं लक्षं जपेत् ।

**भयनिवृत्तिमन्त्रः**—(क) सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

(ख) दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ॥

एवञ्च यथा भूतविद्यायां मान्त्रिकी चिकित्सा च श्रद्दधते, विश्वस्ताय जनाय सफला भवति, तत्सर्वंयाख्यातं भवति ।

## तान्त्रिकी चिकित्सा

जगदिदं त्रिगुणात्मकम् । मानवश्च सात्त्विक-राजस-तामसभेदात् त्रिविधो भवति । ये च सात्त्विकास्तेनाऽभिभूयन्ते सांसारिकैः क्लेशैर्मानसैर्वाऽऽधिभिः । ये च राजसास्तामसा वा ते हि विविधैर्मनोविकारैः ग्रस्यन्ते । अतश्च तन्निवृत्तये सत्त्वगुणोदयाय चाध्यात्मिकशक्त्युत्कर्षाय च तन्त्रशास्त्रमादिशति विविधान्

---

१. म० नि० त०-उल्लासः २।१४ ।

प्रयोगान् । तन्त्रशास्त्रस्य च मुख्यमुद्देश्यम्--शक्तिसञ्चयनम् । शक्तिश्च स्वेष्टदेवाद्यर्चनादिभिरुपलभ्यते । तथाहि-ज्ञान-विज्ञान-धैर्य-स्मृति-समाधीनामाश्रयमवलम्ब्य तान्त्रिकी चिकित्सा तादृशं मानसबलमादधाति, यद् बलेन मनः प्रवरसत्त्वं जायते । तथा सति रजस्तमसी परावृत्ते भवतः । एवञ्च तान्त्रिकी चिकित्सा मानसामयान् प्रमार्ष्टि । देवादीनामुपासनेन इच्छाशक्तिर्दृढा भवति कुप्रवृत्तयश्च नश्यन्ति । देव्युपासनायाञ्च बलेर्महत्त्वमाख्यातमास्ते । तत्र हि कुप्रवृत्तीनां त्याग एव बलिः । पशुबलिश्च देव्युपासनाङ्गभूतं मन्यते, तत्रापि पशुशब्दः प्रतीकात्मक एव प्रतिभाति । उपनिषदि च–

'कामक्रोधलोभादयः पशवः समाख्याताः । अथ च–

कामक्रोधसुलोभमोहपशुकान् छित्वा विवेकासिना ।
मांसं निर्विषयं परात्मसुखदं भुञ्जीत तेषां बुधाः[1] ॥
कामक्रोधौ द्वौ पशू मनसा बलिमर्पयेत् ।
कामक्रोधौ विघ्नकृतौ बलिं दत्वा जपं चरेत्[2] ॥

एवञ्च तान्त्रिकीचिकित्सायाः प्रयोजनं कामक्रोधमोहलोभशोकाद्युन्मूलनपूर्वकं सात्त्विकगुणोत्कर्षसंस्थापनमेव गण्यते बुधैः । तन्त्रशास्त्रे दुर्गादेव्याश्चरित्रं जेगीयते, तस्यापीदमेव तात्पर्यमास्ते, यद्देव्या ऐश्वर्यं हि सर्वाबाधाप्रशमनं भवति । यथा च—

ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ।
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ॥
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥[3]

दुर्गासप्तशत्याञ्च ये केचन असुरास्ते प्रतीकभूता मनोविकारा एव । तथा च मधुकैटभौ–रागद्वेषौ, महिषासुरोऽहंकारः, शुम्भ-निशुम्भौ चाहंकारौ, धूम्रलोचनो लोभः, रक्तबीजो हि विषयाभिलाषः, चण्डमुण्डौ च कामक्रोधौ स्तः ।

सुरथशब्दश्चाध्यात्मिकः—

'रमन्तेऽस्मिन्निति रथः, शोभनो रथो यस्य स सुरथः ।' समाधिश्च निवृत्तिमार्गपथिकः ।

'समाधीयते सर्वमस्मिन्निति समाधिः'

अर्थात् यः किल सर्वोपभोगेभ्यो विरतः स समाधिः । अत एव देव्या समुपदिष्टं यत्—

परमैश्वर्यमतुलं प्राप्यसे मत्परिग्रहात् ।
एतद्बुद्धया समालोच्य मत्परिग्रहतां व्रज[4] ॥
'एकैवाहं जगत्यत्र द्वितीया का ममापरा'[5]

---

१. भैरवामलतन्त्रम् ।
२. महानिर्वाणतन्त्रम् ।
३. दु० स० श० क्वचम् ।
४. दु० स० श० ५।१४ ।
५. दु० स० श० १०।५ ।

अहं विभूत्या बहुभिरिहरूपैर्यदा स्थिता ।
तत्संहृतं मयैकेन तिष्ठाम्याजौ स्थिरो भव[1] ।।

तथाहि तान्त्रिकी चिकित्सा यथा कथञ्चन स्वात्मनि दृढश्चेतः समाधत्ते, येनाखिलं भयो नश्यति समुदेति च सात्त्विकप्रकाशराशिः, तथा सति मानसाधयो निवर्तन्ते ।

**तन्त्रोक्तविषयः—**

**नवरत्नमुद्राधारणफलम्—**

यो मुद्रां[2] धारयेदेनां तस्य स्युर्वशगा ग्रहाः ।
वर्धते तस्य सौभाग्यं लक्ष्मीरव्याहता भवेत् ।।
कृत्याद्रोहा विनश्यन्ति नश्यन्ति सकलापदः ।
रक्षोभूतपिशाचाद्या नेक्षन्ते तं भयाकुलाः[3] ।।

**षोडशार्णयन्त्रफलश्रुतिः—**

भित्तौ विलिख्य तद्यन्त्रं पूजयेन्नित्यमादरात् ।
भूतप्रेतपिशाचास्तं न वीक्षितुमपि क्षमाः[4] ।।

**त्वरितायन्त्रम्—**

कृत्याद्रोहादिशमनं व्यालचौरभयापहम् ।
विधृतं त्वरितायन्त्रं विशेषाद्विजयप्रदम्[5] ।।

**अपामार्गहोमः—**

अपामार्गस्य समिधो जुहुयादयुतावधि ।
रक्षो भूतपिशाचारिपीडा तस्य न जायते ।।
निर्गुण्डीसर्जकनकश्वेतकिंशुकसम्भवैः ।
समिद्वरैः कृतो होमः क्षुद्ररोगग्रहापहः ।।

**सप्तकोष्ठयन्त्रम्—**

धारितं सप्तकोष्ठं तत् त्रायते महतो भयात् ।
दुःस्वप्नदुर्निमित्तादिशमनं कीर्तितं बुधैः[6] ।।

**सार्णयन्त्रम्—**

भूतव्याधिमहाज्वरप्रशमनं कृत्यापहं श्रीप्रदम्[7] ।।

दत्तात्रेयतन्त्रे च विविधानामोषधीनां तत्तन्नक्षत्रे ग्रहणं गौछागादिदुग्धैः सह विविधेषु कर्मसु साफल्यार्थं प्रयोगो निर्दिष्टः । एवञ्च तुलसीबीजचूर्णं, सहदेवीरसं, हरितालमश्वगन्धां च पेषयेत्, कदलीरसे गोरोचनासमायुक्तं तिलकं लोकमोहनम् इत्याद्युक्तम् ।

---

१. दु० स० श० १०।८ ।
२. शा० ति० ६।११५-१६ ।
३. शा० ति० ९।१०७-८ ।
४. शा० ति० १०।३५ ।
५. शा० ति० १५।९२-९४ ।
६. शा० ति० १६।१४५ ।
७. शा० ति० २४।७५ ।

मानवान् ग्रसति । तेन च वर्णनेन मानवजीवनस्योदात्तपक्षस्य नितरां समर्थनमुपस्थापितमत्र, तथा हि मनोविकाराः शाम्यन्ति ।

## सर्वग्रहाणां सामान्या[1] चिकित्सा

तत्र बालग्रहाः—शुचिरुपस्थाता पुराणसर्पिषा शुचौ देशे ग्रहार्तं बालमभ्यज्य परितः सर्षपान् विकिरेत्, सर्षपतैलैः दीपं प्रज्वालयेत् । गन्धमाल्यैश्चाग्निं समभ्यर्च्य 'अग्नये, कृत्तिकाभ्यश्च स्वाहा' इति वारंवारं समुच्चार्य वह्नौ सर्वौषधीबीजैर्जुहुयात् । अथ च—

> नमः स्कन्दाय देवाय ग्रहाधिपतये नमः ।
> शिरसा त्वाऽभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ।।
> नीरुजो निर्विकारश्च शिशुर्मे जायतां द्रुतम् ।।

इति मन्त्रेण स्कन्दाय बलिमुपाहरेत् । एवं[2] अग्निमन्थ-कुरवक-वरुण-पर्वत-निम्ब-हरिद्रा-चित्रक-करंजकतृणानां क्वाथैर्बलिमभिषिञ्चेत्, ततश्च प्रियंङ्गु-कम्पिल्ल-शतपुष्पातगर-तालीसपत्र- जटामांसी-रक्तचन्दन-सारिवा-मधूक-अङ्कोठ- मञ्जिष्ठा-बृहदेला-भूनिम्बसिद्धतैले काञ्जिकं सम्मेल्य बालमञ्ज्यात् । अनन्तरं बिम्बी-गम्भारी-मधुक-कुलत्थ-बदर-जव-लघुपञ्चमूलानां क्वाथं पाययेत् । खर्जूर-मुस्त-नारिकेलफल-मृद्वीका-मधूक-मधुकानां चूर्णं दद्यात् । तेन च सर्वे ग्रहामयाः शान्तिं व्रजन्ति ।

अन्यत्र च-बालं[3] निर्विघ्ने शुचौ प्रदेशे स्थापयेत् । त्रिदिनं पुराणसर्पिषाऽभ्यङ्गमाचरेत् । सदा च समीपेऽग्निं प्रज्वालयेत् । अभितश्च रक्षोघ्नौषधि-बीजसर्षपादींश्चावकिरेत् । परिचारकश्च त्यक्तव्यवायमांसमद्यो भवेत् । सुखाम्बुना परिषिञ्चेत् । स्नानानन्तरं बला-निम्ब-राजद्रुम-पारिभद्र-शोभाञ्जन-करञ्जादिभिर्धूपयेत् ।

बचा-हिङ्गु-विडङ्ग-सैन्धव-गजपिप्पली-पाठातिविषा-त्रिकटुभिः ( दशाङ्गधूपैः ) धूपयेत् । रास्नाघृतं, सारिवाद्यं घृतं च पानेऽभ्यञ्जने च प्रयोज्यम् । कल्याणघृतं, महापैशाचघृतं ब्राह्मीघृतञ्च प्रयुञ्जीत । बालामय-चिकित्सोक्तैश्च भेषजैः समुपाचरेत् । भूतविद्योदितं बलिं समर्पयेत् । होमं मन्त्रजपादिकञ्चाचरेत् ।

स्कन्दग्रहचिकित्सा—स्कन्दगृहीतानां[4] बालानां देहे वायुः कुप्यतीति कृत्वा वातहरद्रव्याणां क्वाथैर्बालमभिषिञ्चेत्, स्नपयेद्वा । दशमूलद्रव्यक्वाथेन सर्वगन्धैलामहानिम्बकल्केन च सिद्धं तैलमभ्यञ्जने प्रयोज्यम् ।

---

१. सु० सं० उ० त० २७ ।
२. का० सं०—बालग्रहचिकित्सिताध्यायः ।
३. अ० हृ० उ० त० अ० ३ ।
४. सु० सं० उ० त० अ० २८ ।

देवदारु-रास्ना-मधुरकगणौषधिभिः क्षीरेण च सिद्धं सर्पिः पानार्थं प्रयुञ्जीत।

सर्षप-सर्पनिर्मोक-वच-काकजंघाः, उष्ट्राजाविगवां च रोमाणि धूपनार्थे दद्यात्।

गुडूची-गण्डदूर्वा-शमीकण्टक-बिल्वकण्टक-इन्द्रवारुणी-मूलानि च माला-रूपेण धारयेत्।......रक्तमाल्यं-रक्तपताका-विविधाश्च भक्ष्याः, घण्टा, कुक्कुटश्च बलिरूपेण बालानां हिताय शुचिना वैद्येन शस्त्रहस्तेन च चतुष्पथे देयाः। तत्र कुमारं गायत्रीमन्त्राभिमन्त्रितेन जलेन निशि चत्वरेषु त्रिरात्रं स्नपयेत्। नवैः शालि-यवैर्विरचितमण्डलाभ्यन्तरे तिसृभिः सप्तभिर्दशभिर्वा व्याहृतिभिः वह्नेः प्रज्वा-लनं होमकर्म च विधेयम्। बालानां रक्षार्थं मन्त्रश्च पठनीयः —

तपसां तेजसां चैव यशसां वपुषां तथा।
निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु॥

**स्कन्दापस्मारचिकित्सा —**

स्नानम्—बिल्वदूर्वाशिरीषैः सुरसादिगणौषधिभिश्च सिद्धं जलं स्नानार्थं प्रयुञ्जीत्।

अभ्यङ्गः—सर्वगन्धौषधिसिद्धं तैलमभ्यञ्जने हितम्।

घृतपानम्—चतुर्गुणे क्षीरवृक्षकषाये काकोल्यादिगणकल्के च स्नेहचतुर्थांशे, चतुर्गुणेन च पयसा, सिद्धं घृतं पातव्यम्।

उद्वर्तनम्—वचाहिङ्गुयुतं सर्षपाद्युद्वर्तनं हितम्।

उद्धूपनम्—गृध्रोलूकपुरीषाणि, केशाः, हस्तिनखाः, वृषभस्य रोमाणि घृतश्चोद्धूपने योज्यानि।

धारणम्—सारिवां, बिम्बीफलं, कपिकच्छूं च धारयेत्।

बलिदानम्—पक्वाममांसानि, प्रसन्ना सुरा, रक्तं, दुग्धं, उत्स्विन्नमाषादि-कृतश्चौदनो भूमौ गर्ते वा स्कन्दापस्मारिणे बलिर्देयः।

रक्षामन्त्रम्—स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा।
विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः॥

**शकुनीचिकित्सा—**

परिषेचनम्—वेतसाम्रकपित्थक्वाथेन परिषेचनं विधेयम्।

अभ्यञ्जनम्—वटादीनां कषाये काकोल्यादिमधुरौषधकल्केन सिद्धं तैल-मभ्यञ्जनीयम्।

प्रदेहः—यष्टीमधु-ह्रीबेर-सारिवा-नीलोत्पल-रोध्र-प्रियङ्गु-क्षीरमञ्जिष्ठा-गैरिकैर्बालं प्रदिहेत्।

धूपनम्—स्कंदग्रहोक्तधूमं प्रयोज्यम्।

धारणम्—शतावरी-दन्ती-निदग्धिका-सहदेवी-बृहतीन्द्रवारुणीनां धारणं प्रशस्तम्।

बलिः—तिलतण्डुलं, माल्यं, हरितालं, मनःशिलां च करञ्जपत्रे बलिं दद्यात् ।

स्नानम्—गृहोपवने स्कन्दग्रहोक्तविधिना गायत्र्यभिमन्त्रितेन जलेन स्नानमाचरेत् ।

घृतपानम्—पूर्वोक्तं स्कन्दापस्मारहरं घृतं पातव्यम् । जातीपुष्पनीलोत्पलादिभिश्च सुमनैः शकुन्याः पूजां विदध्यात् ।

रक्षामन्त्रः—अन्तरीक्षचरा देवी सर्वालङ्कारभूषिता ।
अयोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥

रेवतीग्रहचिकित्सा—परिषेचनम्—अश्वगन्धा-कर्कटश्रृङ्गी-मुद्गपर्णी-माषपर्णी-सारिवा-पुनर्नवा-विदारीकन्दानां कषायाः सेचने हिताः । अभ्यञ्जनम्-कुष्ठ-सर्जरस-गुग्गुलु-महानिम्ब-जटामांसी-कल्कसिद्धं तैलमभ्यञ्जने प्रयोज्यम् । घृतम् धवाश्वकर्णार्जुनधातकीतिन्दुककषाये काकोल्यादिगणकल्कसिद्धं घृतं पातव्यम् । प्रदेहः—कुलत्थ-चूर्णं-शंखभस्ममिश्रितं सर्वगन्धयुतं प्रदेह्यम् । धूपनम्—उभयोः सन्ध्ययोः गृध्रोलूकपुरीषयवानां घृतमिश्रितानामूद्धूपनं प्रशस्तम् । बलिः-शुक्ल-सुमनसः, लाजाः, पयः, शाल्यौदनं च सलिलगोसमीपे बलिर्देयः । धारणम्-वरुण-काष्ठमयं, सिन्दुवारकाष्ठमयं वा ग्रीवाभरणं यद्वा पुत्रजीवककाष्ठमयं रुचकं धारणीयम् । स्नानम्-नदीद्वयसंगमस्थले च धात्रीकुमारयोः स्नानं कारयेत् । तत्र रक्षामन्त्रः—

नानावस्त्रधरादेवी चित्रमाल्यानुलेपना ।
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥

पूतनाग्रहचिकित्सा—परिषेचनम्—ब्रह्मसुवर्चला ( हुरहुर ) वरुण-पारिभद्र-सारिवानां क्वाथेन बालं परिषिञ्चेत् । अभ्यङ्गः—ब्राह्मी-वचा-दूर्वा-हरिताल-मनःशिलाकुष्ठसर्जरससिद्धं तैलमभ्यङ्गे प्रयोज्यम् । घृतम्-तुगाक्षीरी-काकोल्यादिगण-कुष्ठतालीस-खदिर-चन्दन - तिनिशकल्ककषायाभ्यां सिद्धं घृतं पातव्यम् । उद्धूपनम्-देवदारु-वचा-हिंगु-महाकदम्बैला-रेणुकानामुद्धूपनं कार्यम् । धारणम्—काकादनी-इन्द्रवारुणी-बिम्बी-गुञ्जा च धारणीया । बलिः—एकान्ते शून्यगृहे मत्स्यौदनकृशरापललबलिं शरावसंपुटे दद्यात् । पूजा-उपहारद्रव्यैः बलिभिश्च पूतनादेवी पूज्या । तत्र रक्षामन्त्रः—

मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा ।
शून्यागाराश्रिता देवी दारकं पातु पूतना ॥

अन्धपूतनाचिकित्सा—अवसेचनम्-निम्बकुटजादितिक्तद्रुमपत्रक्वाथेन परिषेको विधेयः । तैलाभ्यङ्गः-तैलात् चतुर्गुणे सुरासौवीरके, कुष्ठहरिताल-मनःशिला-सर्जरसेभ्यः चतुर्थांशं कल्कं दत्वा तैलं साधयेत् । अभ्यङ्गार्थमुपयुञ्ज्यात् । घृतम्—पिप्पली-पिप्पलीमूलकाकोल्यादिकल्कक्वाथाभ्यां घृतं विपाच्य पानाय प्रयोज्यम् । प्रदेहः-सर्वगन्धद्रव्यैः प्रदेहो विधेयः । धूपनम्कौक्कुटपुरीष-केशचर्माणि, सर्पत्वचं,

जीर्णां भिक्षुकन्थां च धूपनाय प्रयोजयेत् । धारणम्--कुक्कुटी ( कुसुमचित्रालता ) शूकशिम्बी सारिवा च धारणीया । बलिः—पक्वमामं च मांसं, शोणितं च चतुष्पथे गृहाभ्यन्तरे च बलिं दद्यात् । स्नानम्—सर्वगन्धौषधिभिः धात्र्याः शिशोश्च स्नानं विधेयम् । तत्र रक्षामन्त्रम्--

करालां पिङ्गला मुण्डा कषायाम्बरवासिनी ।
देवी बालमिमं प्रीता संरक्षत्वन्धपूतना ।।

**शीतपूतनाचिकित्सा**—परिषेकः—कपित्थबिम्बीकाकजङ्घाजलपिप्पलीनां क्वाथेनावसिञ्चेत् । तैलम्-तैलचतुर्गुणे वस्तमूत्रे गोमूत्रे च मुस्त-देवदारु-कुष्ठ-सर्वगन्धौषधीनां चतुर्थांशं कल्कं प्रदाय तैलं विपाच्यमभ्यङ्गार्थम् । घृतम्-कटफल-सर्ज- खदिर-पलाशार्जुन-त्वक्-निम्बपत्राणां घृतात्त्रिगुणे क्वाथे क्षीरैकभागे च घृतं पचेत् । तत्पानाय प्रयोज्यम् । धूपनम्—गृध्रोलूकपुरीषाणि, सर्पनिर्मोकं निम्बपत्राणि मधुकं च धूपनार्थं प्रयोजयेत् । धारणम्—तिक्तालाबू-गुञ्जा-काकादनी च धारणीया । तर्पणम्—मुद्गौदनेन च नद्यां शीतपूतनां तर्पयेत् । बलिः—वारुणीं रुधिरं च देव्यै उपहरेत् । स्नानम्—नद्यास्तटे बालस्य स्नपनमिष्यते । तत्र रक्षामन्त्रः—

मुद्गौदनाशना देवी सुराशोणितपायिनी ।
जलाशयालया देवी पातु त्वां शीतपूतना ।।

**मुखमण्डिकाचिकित्सा**--परिषेचनम्--कपित्थबिल्वारणितुगाक्षीरीक्वाथेन बालं परिषिञ्चेत् । तैलम्-भृङ्गराजरसेनाश्वगन्धायवानीकल्कं प्रदाय तैलं वसां च संयोज्य यमकं पचेत्, तदभ्यञ्ज्यात् । घृतम्—यष्टीमधु-तुगाक्षीरी-काकोल्यादि-लघुपंचमूलानां कल्कक्वाथाभ्यां घृतं पचेत्, पातव्यं च । धूपनम्—बचासर्जरसकुष्ठाः सघृता धूपने प्रयोज्याः । बलिः—गोष्ठमध्ये कम्पिल्लक-माल्याञ्जन-पारदमनः-शिलानां बलिमुपहरेत् । पायसं पुरोडाशं च बल्यर्थमुपहरेत् । स्नानम्—मन्त्रपूत-जलेन स्नानं विधेयम् । तत्र रक्षामन्त्रः—

अलङ्कृता रूपवती सुभगा कामरूपिणी ।
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ।।

**नैगमेषग्रहचिकित्सा**--परिषेचनम्बिल्वाग्निमन्थकरञ्जक्वाथेन परिषिञ्चेत् । सुरया काञ्जिकेन च परिषेचनं प्रशस्यते । तैलम्-प्रियङ्गु सरलकाष्ठसारिवाशतपुष्पातगरकल्केन गोमूत्रदधिमस्त्वम्लकाञ्जिकैश्च तैलं पचेत् तत्तैलमभ्यङ्गार्थ प्रयुञ्जीत् घृतम्-दशमूलक्वाथे त्रिगुणे दुग्धं घृतसमे काकोल्यादि-कल्कं प्रदाय खर्जूरमस्तकरसं च क्षिप्त्वा घृतं पचेत्, । पानार्थंश्चोपयुञ्जीत । धारणम्—वचा-गुडुची-ब्राह्मी-जटामांसी च धारणीया । उत्सादनम्—वचा-हिङ्गुयुतं सर्षपमुत्सादने प्रयोज्यम् । उद्धूपनम्—सिद्धार्थकबचाहिङ्गुकुष्ठयवाजमोदाभल्लातकानामूद्धपनं कर्तव्यम् । धूपः—मर्कटोलूकगृध्राणां पुरीषाणि धूपयेत् । बलिः—तिलान् अक्षतान् विविधान् मोदकादीन् भक्ष्यान् क्षीरवृक्षमूले नैगमेषाय निवेदयेत् ।

षष्ठ्यां तिथौ न्यग्रोधवृक्षमूले बलिं दद्यात् । स्नानम्-वटवृक्षस्याधस्तले स्नानं कार्यम् । तत्र रक्षामन्त्रः—

अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः ।
बालं बालपिता देवो नैगमेषोऽभिरक्षतु[1] ।।

एवञ्च रावणकृते बालतन्त्रे प्रथमतो द्वादशपर्यन्तं दिवस-मास-वर्षेषु विभिन्नग्रहा बालान् गृह्णन्तीत्युक्तम् । तेषां लक्षणानि चिकित्सितञ्च वैशद्येन पृथक् पृथगाख्यातम् । तत्र च दैवव्यपाश्रयमेव भेषजं विधीयते प्राधान्येन । तत्सर्वं विस्तरभयान्नेह वितन्यते, तत्तु तत्रैव द्रष्टव्यम् ।

## औषधिचिकित्सा

**मदमूर्च्छासन्न्यासचिकित्सा**--मूर्च्छा च पित्तजन्या प्रायेण जायते, अतश्चात्र शीतोपचारो हितावहो भवति । शिरसि[2] हिमजलावसेचनं वारिधारापातो वा, शीतजलद्रोण्यामवगाहनम्, जले मज्जनम्, मुक्ता-प्रवाल-स्फटिकप्रभृतिमणीनां धारणम्, चन्दनानुलेपः, नलिनीदलतालपत्रम्, सुगन्धवन्ति पानानि च प्रशस्तानि ।

नारिकेल-द्राक्षा-सिता-दाडिम-लज्जालु-नीलकमलप्रभृतीनां पानकानि सर्वासु मूर्च्छास्वनिवारितानि ।

रक्तजायां[3] मूर्च्छायाम्--सर्वः शीतोपचारः प्रयोज्यो भवति ।

मद्यजायाम्--मृदुमद्यपानं स्वपनञ्च हितावहम् ।

विषजायाम्--शीतोपचारेण सह विषघ्नानि भेषजानि प्रयोजयेत् ।

मूर्च्छायां हि द्विविध उपचारो विधेयो भवति-(१) मूर्च्छितावस्थायां मूर्च्छा विनिवारणम्, (२) मूर्च्छापगमनानन्तरं पुनराक्रमणनिरोधनं ( स्थायिचिकित्सा ) चेति । अञ्जनम्—तत्र प्रबोधार्थम्—शुण्ठी-मरिच-पिप्पली-चूर्णाञ्जनम्, चन्द्रोदयावर्तिः, तुत्थकादिवर्तिश्चेति प्रयोज्याः । अवपीडनम्—नासाद्वारेण कट्फलचूर्णस्य, मरिचचूर्णस्य देवदालीचूर्णस्य वा प्रयोगो प्रबोधकरो भवति । धूमः—मरि-

---

१. रावणकृतं कुमारतन्त्रं द्रष्टव्यम् ।

२. सेकावगाहौ मणयः सहाराः शीताः प्रदेहाः व्यजनानिलाश्च ।
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ।।
सिताप्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वरसान्वितानि ।
खर्जूरकाश्मर्यरसैः श्रृतानि पानानि सर्पींषि च जीवनानि ।।
(सु० सं० उ० त० ४६।१४-१५ )

३. रक्तजायां तु मूर्च्छायां हितः शीतक्रियाविधिः ।
मद्यजायां पिबेन्मद्यं निद्रां सेवेद्यथासुखम् ।। (भै० र० मूर्च्छा)

चधूमः, अन्यो वा तीक्ष्णधूमः संज्ञाकरः। सूचीवेधः-सूचीद्वारा शरीराङ्गेषु तोदनं संज्ञाप्रबोधनम्। केशलुञ्चनम्, कपिकच्छ्वघर्षणमपि[1] मूर्च्छामपहन्ति।

**प्रबोधानन्तरञ्च**--स्रंसनम्[2], वमनम्, कवलग्रहम्, व्यायामः, उद्धर्षणम्, रक्तावसेचनम्, स्नेहनं, स्वेदनं विधाय दोषप्रकृतिवयोबलादीन् वीक्ष्य यथास्वं पञ्चकर्माणि कुर्वीत। अन्यान्यपि पथ्यानि प्रयुञ्जीत। तथा च-

सिद्धानि वर्गे मधुरे सदाडिमा जाङ्गलजा रसाश्च।
तथा यवा लोहितशालयश्च मूर्च्छासु पथ्याश्च सतीनमुद्गाः[3]॥

**भेषजप्रयोगः**--प्रत्यहं रात्रौ मधुना त्रिफलाचूर्णम् ६ माषकम्, प्रातश्च १ तोलकमार्द्रकं द्वितोलकगुडेन सह सेव्यम्[4]। कोलमज्जादिचूर्णम्[5]—३ माषकमितम् प्रातः सायं मधुना। पिप्पलीचूर्णम् १ माषकम् मधुना प्रातः सायम्। श्रमे-सघृतं दुरालभाक्वाथं पिबेत्। रसायनाधिकारोक्तानां रसायनानाञ्च प्रयोगो हितावहः। घृतम्-कौम्भसर्पिः, ३ माषकमितं क्षीरेण सह पातव्यम्। क्षीरप्रयोगः--शतावरी-बलामूल द्राक्षासिद्धं पयः सितया सह प्रयोज्यम्। मूर्च्छान्तकरसः[6]—प्रातःसायं १-२ वटी मधुना। अश्वगन्धारिष्टम्[7]-भोजनोत्तरं २ तोलकमितं समानेन जलेन प्रयोज्यम् तद्वत् सारस्वतारिष्टञ्च। मदचिकित्सा च मूर्च्छावत् कार्या।

## संन्यासचिकित्सा

अस्य चाधमस्यामयस्य द्रुतमेव प्रतीकाराय शास्त्रकृद्भिर्महत्त्वपूर्णंदृष्टान्तमुपस्थापितम्, यथाह चरकः —

दुर्गेऽम्भसि यथा मज्जद्भाजनं बुधः।
गृह्णीयात्तलमप्राप्तं तथा संन्यासपीडितम्[8]॥

---

१. अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च।
सूचीभिस्तोदनं शस्त्रं दाहः पीडा नखान्तरे॥
लुञ्चनं केशलोम्नाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने॥ (च० सू० २४।४६-४७)

२. च० सू० २४।५१-५४।

३. सु० सं० उ० त० ४६।१६।

४. मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रकं प्रातः।
सप्ताहात्पथ्यभुजो मदमूर्च्छाकामलोन्मादान्॥ (च० द०)

५. च० द० मूर्च्छा।

६. भै० र० मूर्च्छा।

७. भै० र०।

८. च० सू० २४।४५।

सुश्रुतश्च—

यथामलोष्टं सलिले निषिक्तं
समुद्धरेदाश्वविलीनमेव ।
तद्वच्चिकित्सेत्त्वरयाभिशक्त-
मस्वेदनं मृत्युवशं प्रयातम्[1] ॥

अतश्च संन्यस्तस्य प्रबोधनार्थं तीक्ष्णमञ्जनम्, तीक्ष्णमभ्यञ्जनम्, तीक्ष्णधूमः, नखान्तरे तोत्रेण (सूचीभेदेन) तोदनम्, विविधैश्चालनपीडनादिभिः, कपिकच्छूफलावघर्षणैश्चोपाचरेत्, येन द्रुतमेव प्रबोधो जायेत । प्रबुद्धसंज्ञश्च[2] वमनविरेचनैः शोधनं कार्यम् । संसर्जनक्रमेण भुक्तपथ्यश्च मूर्च्छोन्मादमदापस्माराधिकारोक्तैर्भेषजैः समुपाचरेत्, विशेषतश्च जीर्णस्य घृतस्य पानं प्रशस्यते ।

मूर्च्छामयस्य पित्तप्राधान्यात्तदुपशमनार्थञ्च पैत्तिकज्वरस्य रक्तपित्तस्य च चिकित्साक्रमः समुपयोज्यः । विषजायाञ्च[2]—विषमोहप्रशमनं नस्याञ्जनादिकमगदञ्च प्रयोज्यम् ।

## अपस्मारामयस्यावस्थिकी चिकित्सा

नूतनापस्मारे—ताप्यादिलौहः, मात्रा, १–३ गुञ्जा ब्राह्मीरसेन मधुना च सह प्रातः सायं प्रयोज्यः । सहसा मोहे, फेनोद्गमे, हस्तपादादिविक्षेपे, बीभत्सचेष्टासु च शारीरदोषजापस्मारे च विशेषेण लाभप्रदो भवति ।

योगेन्द्ररसः–मात्रा, १-२ गुञ्जा, यवास-ब्राह्मी-वच-मांसीनां क्वाथेन, सारस्वतारिष्टेन सह वा प्रयोज्यः । हृद्दौर्बल्ये मनोऽवसादे च बलाधायकः ।

योगराजरसः—मात्रा, १ ग्राममिता प्रातः सायं मधुना देयः ।

अमरसुन्दरीवटी–मात्रा, २-४ गुञ्जा तुलसीस्वरसेन मधुना च ।

रौप्यभस्म–१ गुञ्जा मात्रया प्रातः सायं गोदुग्धेन, धात्रीरसेन, ब्राह्मी-वचा-शंखपुष्पीरसेन वा प्रयोज्यम् ।

वातकुलान्तकरसः-मात्रा २ गुञ्जा प्रातः सायं मांसीक्वाथेन ।

कस्तूरीभैरवो रसः—मात्रा १ गुञ्जा त्रिवारं दिवसस्य मधुना । इदं रसायनं बालेभ्योऽवरसत्त्वेभ्यश्च निर्भीकं प्रयोज्यम् । अस्य प्रयोगेण हृदयं सबलं भवति, वातजाश्चोपद्रवाः प्रशमं यान्ति ।

उन्मादगजकेसरीरसः—मात्रा २-४ गुञ्जा नवनीतेन सितया च सह । रसायनमिदं योषापस्मारे विशेषतो हितावहं भवति । मन-इन्द्रियाणि बुद्धिश्च प्रीणाति । निद्रानाशे बुद्धिविभ्रंशे च ब्राह्मीस्वरसेन सह प्रयोज्यः ।

भूतभैरवो रसः—मात्रा २-४ गुञ्जा प्रातः सायं गोघृतेन । मनोव्याघातजेऽपस्मारे, योषापस्मारे, भूतोन्मादे च निद्राप्रदानेन सफलो भवत्यस्य प्रयोगः ।

---

१. सु० सं० उ० त० ४६।२३-२४ ।

२. सु० सं० कल्पस्था० द्रष्टव्यम् ।

स्मृतिसागररसः--मात्रा १ गुञ्जा नवनीतेन सह प्रातः सायम्। इदं रसायनवरमपस्मारमपाकरोति । सर्वविधेऽपस्मारे संन्यासेऽपतानके, सार्वाङ्गिके चाक्षेपे, स्मृतिभ्रंशे मूर्च्छायां बालग्रहेषु च लाभप्रदो भवति ।

पुराणापस्मारे—अभ्रकभस्म--मात्रा १-२ गुञ्जा मधुना प्रातः सायम् । मनोदौर्बल्यजापस्मारे, उन्मादे हृद्रोगे चेदमुपयुज्यते । स्मृत्यपाये, बुद्धिविभ्रंशे क्लमे च हितावहम् ।

अष्टमूर्तिरसायनम्—रसायनमिदमोजस्करं हृद्यमाक्षेपघ्नं वातवहनाडी-चक्रेषु च विशिष्टं प्रभावं दर्शयति । एवञ्चापस्मारेऽपतन्त्रके भूतोन्मादे मूर्च्छायां संन्यासे च साफल्येन प्रयुज्यते ।

मल्लसिन्दूरः--भ्रमेऽपस्मारे जाड्ये मोहे चायमतीवोपयुज्यते ।

सूतराजरसः—उन्मादेऽपस्मारे सर्वेषु च वातामयेषु रसायनोऽयमुपयुज्यते ।

सारस्वतारिष्टः--अयं बल्यो हृद्यः, बुद्धिस्मृतिप्रदश्चित्तप्रसदनश्च । विशेषतश्चापस्मारे स्मृत्यपाये च प्रयुज्यते ।

एवञ्च पञ्चगव्यघृतम्, ब्राह्मीघृतम्, कल्याणघृतञ्चापस्मारे योषापस्मारे च नूनं कार्यकरं भवति ।

## उन्मादरोगस्यावस्थिकी चिकित्सा

वातोन्मादे—रौप्यभस्म—१-२ गुञ्जा धात्रीचूर्णेन मधुना च प्रातः सायम् । कस्तूरीभैरवः--१-३ गुञ्जा मधुना अवस्थानुसारमनुपानम् । अश्वगन्धारिष्टः-- २ तोलकं समानजलेन भोजनोत्तरं द्विवारम् । पञ्चगव्यघृतम्--रोगिबलानुसार-मनुयोज्यम् ।

पित्तोन्मादे--सुवर्णभस्म, प्रवालपिष्टी, मौक्तिकपिष्टी, कामदुघारसः, सूत-शेखररसः, सुवर्णमाक्षिकभस्म, सारस्वतारिष्टः, ब्राह्मीघृतञ्च प्रयोज्यम् ।

कफोन्मादे—मल्लसिन्दूरः, समीरपन्नगः, मल्लसिन्दूरबटी च देया ।

मनोव्याघातजोन्मादे—स्मृतिसागररसो देयः ।

गर्भाशयविकारजे--ब्राह्मीवटी, लक्ष्मीविलासरसश्च देयः ।

शुक्रक्षयजे—पूर्णचन्द्ररसः, अभ्रकभस्म च देयम् ।

भूतोन्मादे-शिलासिन्दूरः, सूतराजरसः, पञ्चगव्यघृतम्, कल्याणघृतञ्च देयम् ।

निद्रानाशे—सर्पगन्धादिवटी, विजयावलेहश्च देयः ।

बाह्योपचारे—उन्मादभंजनीवटी, प्रचेतानामगुटिका, दशांगधूपश्च प्रयोज्यः ।

मूर्च्छायां संन्यासे च—वातप्राधान्ये—कस्तूरीभैरवरसः । पित्तप्राधान्ये--काम-दुघारसः मौक्तिकपिष्टी च । कफाधिक्ये-पञ्चसूतरसः । रक्तजायाम्-ताप्यादिलौहः, चन्द्रकलावटी च । अञ्जनार्थम्-प्रचेतानामगुटिका उन्मादभंजनी च । नस्यार्थम्-श्वासकुठाररसः प्रयोज्यः ।

## उन्मादे चिकित्सासिद्धान्तस्य क्रमः—

वातजोन्मादे—निरावरणे वाते, स्नेहपानं प्रयुञ्जीत। सावरणे तु स्नेहपानं निषिद्धमेव।[1] तत्र हि ईषत्स्नेहयुक्तं मृदुशोधनं प्रयोज्यम्। पित्तजोन्मादे—विरेचनं देयम्। कफजे च वमनं दद्यात्। वमनविरेचनयोरादौ यथाविधि स्नेहनस्वेदनौ विधेयौ। अन्ते च शोधने जाते विधिवत् संसर्जनक्रमं[2] समाचरेत्।

रोगिणो बलानुसारं यथादोषं निरूहवस्तिं, अनुवासनवस्तिं, शिरोविरेचनञ्च प्रयुञ्ज्यात्। सत्यावश्यके भूयो दद्यात्। प्रायेण वातजे स्नेहवस्तिः, पित्तजे निरूहवस्तिः, कफजे च शिरोविरेचनं विहितमास्ते।

एवञ्च[3] वमनादिकर्मभिः हृदयमिन्द्रियाणि शिरः कोष्ठञ्च संशुद्ध्यन्ति। मनश्च प्रसन्नतामनुभवति, धृतिः स्मृतिः बुद्धिश्च प्रस्फुरन्ति, विवेको वर्धते, कार्याकार्यपर्यालोचनशक्तिरुदेति। तथा च सत्युन्मादागमो मुञ्चति। कृतेऽपि संशोधने यदि चेद् रोगी न विनीतो भवति, न चात्महितमवेक्षते, न विमृशति हिताहितमात्मनः, समुद्धतो भवत्युत्पातमाचरति, तदा तीक्ष्णं नस्यमञ्जनञ्च प्रयोज्यम्। मनसो बुद्धेश्शरीरस्य चोद्विग्नताजनकं कपिकच्छूप्रभृतिफलानामवघर्षणं गात्रेषु कुर्यात्। लगुडादिभिश्च मर्मसु ताडयेत्।

यदि चेदुन्मादी समुद्धतोऽविधेयो भवेत्तदा दृढैः पट्टबन्धनैर्नातिकष्टप्रदैः स्तम्भेऽन्धकारमये[4] गृहेऽपसार्यघातककाष्ठलौहमयानि वस्तूनि, निरोधयेत्। एकान्ते गृहे सम्यङ् निगडितञ्च कशाभिस्ताडयेत्। तञ्च[5] महाभीमाकारैर्नरैः भीषयेत्। उद्धृतदन्तैः सर्पभयं प्रदर्शयेत्। भयोत्पादकानां सिंहानां हस्तिनां वा समक्षमुपस्थाप्य भीषयेत्। शस्त्रपाणिभिः राजपुरुषैर्वधभयेन भीषयेत्। भयङ्कराकृतीन् तस्करान् शत्रून् वा समक्षं सम्प्रेष्य भयमुपजनयेत्। जलसमीपं नीत्वा निमज्जनभयं प्रदर्शयेत्। अग्निं प्रज्वाल्य दाहभयमालपेत्। तप्तलोहेन[6] तप्तजलेन च स्पृशेत्। सर्षपतैलाभ्यक्तं तीक्ष्णातपे न्यसेत्। तीक्ष्णाग्रया शलाकया वा तुदेदस्य गात्रम्।

एवञ्चास्य विभ्रान्तञ्चेतः स्थिरीभवति। शाम्यति चौद्धत्यमुपजायते चात्मसंवेदः। स्मृतिरुदेति। अलाभे तु—इष्टजनविनाशं वा ब्रूयात् किमप्यद्भुतं दृश्यं प्रदर्शयेत्।[7] हर्षयेदाश्वासयेच्चैनम्। शारीरिकदुःखोत्पादनेन भयसञ्जननेन समीहितसामग्रीसमवाप्त्या वा विस्मृतं मनः प्रकृतिभावं भजति। तथा च तारस्वरेण वाचा भयादोहनं ( तर्जनं ), राजपुरुषैर्दस्युभिर्वा प्राणभयोपस्थापनम्

---

१. भेदः कफाभ्यामनिलो निरुद्धः शूलाङ्गसुप्तिश्वयथून् करोति। स्नेहं नियुञ्जन्नबुधस्तु तस्मै संबर्धयत्येव हि तान् विकारान्॥ (च० सि० अ० १)

२. च० सू० अ० १५; ३. च० चि० अ० ९।

४. च० चि० अ० ९; ५. सु० सं० उ० त० अ० ६२।

६. यो० र० उन्माद०; ७. अ० हृ० उ० अ० ६।

(त्रासनं), अभीप्सितपदार्थप्रदानं (दानं), यथाकथञ्चित् प्रहर्षणं (हर्षणं) समाक्रान्तभयनिर्मूलनपूर्वकं सुखदमाश्वासनं (सान्त्वनं), पूर्वोक्तप्रकारेण भयोत्पादनं, चमत्कारप्रदर्शनञ्चेति, तैश्चोपायैरस्य मनो विस्मार्य पूर्वभयहेतून् स्वास्थ्यं व्रजति।

सत्यपि[1] प्रकृतिं ते मनसि धीविभ्रमं, मनःक्षोभं, पर्याकुलत्वं सततपरिसरणादिव्यतिक्रमोपशमनार्थं याथार्थ्येनात्मेन्द्रियमनसां प्रसन्नतानयनार्थं मनोहराणां लेपानामुत्सादनानाञ्च प्रयोगो विधेयः। शास्त्रोक्तविधिना यथादोषमभ्यञ्ज्यात्, धूपनञ्च कुर्यात्। भेषजसिद्धघृतादीनाञ्च पानार्थं प्रयोगमाचरेत्।

न च सर्वथा समेषामेवोन्मादिनां कृते प्रतिकूलाचरणं प्रशस्यते। सत्यपि तर्जनादिके मध्ये समाश्वासेन हर्षणेनानुकूलाचरणेन यथेष्टाहारविहारेण च समाश्वसनीयः। वयस्यैः सुहृद्भिराश्वासनं, हर्षणं प्रीतिश्च शस्यते। धार्मिकैराचारैः कथाभिश्चित्राभिरस्य मनः प्रसादमाचरेत्।

यदि चेत् प्रियविप्रयोगात् प्रियवस्तुविनाशाद्वा कस्यचन मन उपहन्यते, तदाऽऽघातजं संक्षोभं सोढुं न प्रभवति, तदा तत्सदृशवस्तुप्रदानेन, समीहितावाप्तिविषयकाश्वासनेन च सान्त्वनीयः। एवमेव कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवोन्मादेषु ये भावाः यस्य भावस्य प्रतिद्वन्द्विनः सन्ति, तैस्तैस्ते भावाश्शमनीयाः। यथा कामजं हर्षोत्पादनेन, भयजमुन्मादं क्रोधेन, क्रोधजमुन्मादं शोकजनकसमाचारेण, ईर्ष्योन्मादे प्रीत्युत्पादनेन, शोकजं इष्टलाभेन शमयेत्। एभिश्च कर्मभिर्विकृतं मनः प्रकृतिं भजते। क्वचिच्चेष्टवस्तुविनाशसूचनात्, क्वचिदद्भुतघटनाप्रदर्शनात्, क्वचिद् विस्मयोत्पादकप्रसङ्गात् सहसा मनः समाकर्षणात् रोगेऽस्मिन् लाभो जायते। औषधव्यवस्था--[2]ब्राह्मीस्वरसः २ द्वितोलकः, मधुरकुष्ठचूर्णम् १ ग्राममितं, ८ ग्राममितेन मधुना सह त्रिवारं दिवसस्य प्रदेयम्। एवमेव कूष्माण्डफलस्वरसः, शंखपुष्पीस्वरसः, मधुरवचास्वरसो वा पूर्वोक्तानुमानेन प्रयोज्यः। कूष्माण्डबीजजिह्विका निष्कास्य पिष्ट्वा १ तोलकं मधुना सह च देयम्। उग्रौन्मादेऽपि लाभो भवति। कोकिलामांसं संभोज्य निवाते स्थाने सुखं स्वापयेत्, तेन च बुद्धिस्मृतिभ्रमं नश्यति, रोगी च प्रवुद्धो भवति। अपक्वं चटकामांसं पिष्ट्वा गोदुग्धेन सह देयम्, तेनोन्मादः शाम्यति। तालशाखजः (ताड़ी) रसः केवलो मधुना वा सह पेयः।

---

१. चरक० चि० अ० ९।

२. ब्राह्मीरसः स्यात् सवचः सकुष्ठः सशंखपुष्पः ससुवर्णचूर्णः।
उन्मादिनामुन्मदमानसानामपस्मृतेर्भूतहतात्मनां हि॥
नस्येऽञ्जने पानविधौ च शस्तो ब्राह्मीरसोऽयं सवचादिचूर्णः।
(वीरसिंहावलोकः)

## भूतविद्यायां मानसामयेषु प्रयुज्यमानाः काष्ठौषधयः—

शंखपुष्पी— मेधाकृत्, ग्रहभूतदोषघ्नी, अपस्मारोन्मादभ्रमानिद्रानाशिनी-राजनिघण्टुः। मानसरोगहृत् भा० प्र०

ज्योतिष्मती— मेधाप्रज्ञाबुद्धिवर्धिनी–राजनि०।

मण्डूकपर्णी— मेध्या, रसायनी–चरक० चि० अ० १ पाद ३, ३०।

अहिफेनम्— मुहुर्मोहकरम्–भा० प्र० नि। मोहदं–राजनि०।

विजया— मोहमदवाग्वर्धिनी–भा० प्र० नि०।

वचा— मेध्या, अपस्मारकफोन्मादभूतजन्त्वनिलान् जयेत्–भा० प्र० नि० कुमाराणां वपुर्मेधाबलबुद्धिविवर्धनम्–सुश्रुत शा० अ० १०। कुर्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम्—भैषज्यर०।

जटामांसी— मेध्या–भा० प्र० नि०। भूतबाधापहा–नि० स०।

हिङ्गु— मूर्च्छापस्मारहृत् परम्–भा० प्र० नि०।

शालः— क्रिमिघ्नः–भा० प्र० नि०,

पारसीकयवानी— मोहिनी–भा० प्र० नि०। मादिनी–राजनि०।

अङ्कोटः— भूतग्रहापहा–ध० नि०।

तगरम्— भूतमदापस्मारनाशनम्–कै० नि०।
भूतापस्मानारशम्—ध० नि०।

पलाण्डुः— मेध्यः—भा० प्र० नि०।

जीवन्ती— भूतद्राविणी—राजनि०।

शल्लकी— ग्रहनाशिनी—भा० प्र० नि०।

बीजपूरः— मेध्यः—सुश्रुतसू० अ० ४६।

इङ्गुदी— भूतग्रहापहा—कै० नि०।

धन्वयासः— मदभ्रान्तिजित्—भा० प्रा० नि०।

कार्पासी— भ्रान्तिमूर्च्छाहरी—राजनि०।

पर्पटः— मदभ्रमविनाशनः—ध० नि०।

गुडूची— भ्रमहारिणी—रा० नि०। भूतघ्नी—ध० नि०।

कृष्णजीरकम्— मेध्यं—भा० प्र० नि०।

भूर्जपत्रम्— भूतरक्षाकरं—राजनि०।

चन्द्रशूरम्— बुद्धिविवर्धनम्—भा० प्रा० नि०।

अश्मन्तकः— भूतबाधां विनाशयेत्—राज० नि०।

वाकुची— मेधावर्धिनी—ध० नि०।

काश्मरी— मेध्या—सुश्रुतसू० अ० ४६।
मेध्या—कै० नि०।

आमलकी— स्मृतिबुद्धिप्रमोहहरा—चरकचि०अ० १।

नागदन्ती— मेधाकरी—रा० नि०।

शतावरी— मूर्च्छापहा—ध० नि०। मेध्या—सुश्रुतसू० अ० ४६।

मुस्तकम्— मेध्यं—रा० नि० ।
खर्जूरम्— मदकरं परम्—कै० नि० । मदमूर्च्छामद्योद्भूतगदान्तकृत्—
—भा० प्र० नि० ।
द्वीपान्तरवचा— अपस्मारमुन्मादश्च व्यपोहति—भा० प्र० नि० ।
रसोनः— मेधाकरः—सु०सू० ४६ ।
उदुम्बरः— मूर्च्छापहः—ध० नि० ।
कदली— भ्रमहरा—कै० नि० ।
तण्डुलीयकः— भ्रमापहः—रा० नि० ।
स्थौणेयकम्— मेधाकरं—भा० प्र० नि० ।
शतपुष्पा— मेध्या—कै० नि० ।
देवदारु— तन्द्राजित्—कै० नि० ।
पिप्पली— मेधावर्धिनी—भा० प्रा० नि० ।
जयन्ती— भूतापहा—रा० नि० ।
जातीफलम्— आक्षेपनुत्—आयु० सं० ।
हिज्जलम्— भूतनिरोधकारि, भ्रान्तिविरोधकारि, भूतनाशनम्,
नानाग्रहसंचारदोषजित्—रा० नि० ।
बिम्बीफलम्— मेध्यं—कै० नि० ।
चंचुः— मेध्या—भा० प्र० नि० ।
ब्राह्मी— मेध्या, स्मृतिप्रदा—भा० प्र० नि० ।
मौचकः— प्रज्ञासिद्धिदः—रा० नि० ।
शरः— भ्रान्तिमदापहरः—ध० नि० ।
कट्फलम्— वेदनास्थापनम्—च० सू० अ० ४ ।
त्वक्— आक्षेपनाशम्—आ० सं० ।
कर्पूरम्— मदकारकम्—ध० नि० ।
बन्दाकः— माङ्गल्यः—भा० प्र० नि० ।
तिलः— मेधाजननः—सु०सू०अ० ४६, मेधावर्धनः—च० सू० अ० २७ ।
वृद्धदारुकः— मेधाकरः—कै० नि० भा० प्रा० नि० । मतिमान् जायते नरः,
स्मृतिश्च वर्धते—भै० र० ।
त्रायमाणा— भ्रमप्रणुत्—भा० प्र० नि० ।
सर्पगन्धा— रक्षाकरी, मानसामयप्रशमनी—सु० उ० ६० ।
मुण्डिका— अपस्मारनाशिनी—ध० नि० । मेध्या, अपस्मारहृत्—
भा० प्र० नि० ।
दाडिमम्— मेधावहम्—भा० प्र० नि ।
विभीतकः— मदकरः—सु० सू० अ० ४६ ।
हरीतकी— स्मृतिबुद्धिप्रमोहं च जयेच्छीघ्रं—च० चि० ।
मेध्या—सु० सू० अ० ४६ ।

गन्धप्रियङ्गुः-- मोहविनाशिनी—ध० नि० मोहघ्नी—भा० प्र० नि०।
पद्मकम्-- भ्रन्तिशान्तिकृत्—ध० नि०।
करञ्जः— भूतघ्नः--ध० नि०।
रक्तचन्दनम्-- भ्रान्तिहरम्--रा० नि०।
यवासकः-- भ्रान्तिजित्--रा० नि०।
नीलिनी-- मोहभ्रमापहा--भा० प्र० नि०।
गुञ्जा— हन्ति रक्षोग्रहादिकान्—कै० नि०।
अपराजिता— मेध्या, स्मृतिबुद्धिदा--भा० नि०।
भल्लातकः— मेधाविवर्धनः--च० चि० १।
एरण्डम्— मेधास्मृतिकरम्--सु० सू० अ० ४६।
केतकम्— मदनोन्मादवर्धनम्—आ० स०।
द्राक्षा— मदात्ययं व्यपोहति--च० सू० अ० २७।

## मानसामयेषु प्रयोज्यानि भैषज्याङ्गानि

विषमुष्टि बीजमज्जा— नाडीवलप्रदः, अनिद्राहरश्च।
अश्वगन्धा मूलम्— मूर्च्छाभ्रमानिद्रानाशनम्, बल्यम्।
केशरः पुष्पं-- नाडीवलप्रदम्।
कुलिञ्जनः (मूलम)—नाडीवलप्रदम्।
उस्तखद्दूसः ( पुष्पं ) मेध्यं, नाडीबल्यम्, उन्मादापस्मारहरम्।
गाजवां पत्रं पुष्पं— मस्तिष्कबल्यम् उन्मादापस्मारहरम्।
अक्षोटः ( अखरोट )--फलमज्जा नाडीबलप्रदम्।
कासनीबीजम्-- निद्राप्रदम् मस्तिष्कविकारहरम्।
शोभाञ्जम् त्वक् बीजञ्च-- नाडीबल्यम्, अपस्मारनाशनम्।
सारिवाँमूलम्-- अपस्मारहरम्।
कासमर्दः पंचाङ्गम्-- आक्षेपघ्नः, अपस्मारहरः।
सिताबम् पंचाङ्गम्--आक्षेपहरं, नाडीबल्यम्, योषापस्मार-बालापस्मारहरम्।
अजगन्धा--बीजं पत्रं च--बालाक्षेपहरम्।
कटुतुम्बी--फलं बीजञ्च—भ्रमनाशम्।
वासामूलम्-- अपस्मारनाशनम्।
आकारकरभः—( मूलम् )-- नाडीबल्यम् अपस्मारविनाशनम्।
अफसन्तीनः- पंचाङ्गम्-- मेध्यम्, मस्तिष्कशक्तिदं, अपस्मारघ्नम्।
कूष्माण्डम्—स्वरसः, पत्रं बीजञ्च--मेध्यं, स्मृतिप्रदं अपस्मारहरम्।
बिल्वम्—मूलम्-- अनिद्रोन्मादहरम्।
भारंगी--मूलम्-- अपस्मारनाशनम्।
काहू—पंचाङ्गम्— निद्राकरम्, उन्मादनाशनम्।
रुद्राक्षः--फलम्-- नाडीदौर्बल्यहरम्।
सुवर्चला ( हुरहुर ) मूलं पुष्पं बीजञ्च--मूर्च्छाहरम् नाडीबल्यम् उन्मादापस्मार-नाशनम्।

## भूतविद्यासम्बन्धिरोगेषु प्रसिद्धयोगाः

| | औषधिनाम | ग्रन्थसंकेतः | अधिकारः |
|---|---|---|---|
| चूर्णाः | कल्याणचूर्णम् | यो० र० | अपस्मारः |
| | सारस्वतचूर्णम् | भै० र० | उन्मादः |
| | वचाचूर्णम् | भै० र० | अपस्मारः |
| | श्रीखण्डादिचूर्णम् | भै० र० | तत्त्वोन्मादः |
| | अभयादिचूर्णम् | भै० र० | स्मरोन्मादः |
| | यवान्यादिचूर्णम् | भै० र० | उन्मादः |
| वट्यः | सर्पगन्धाघनवटी | सि०यो०सं० | उन्मादः |
| | उन्मादभञ्जिनी | भै र० | उन्मादः |
| | इन्द्रब्रह्मवटी | भै० र० | अपस्मारः |
| | उन्मादगजकेसरी | भै० र० | उन्मादः |
| | भूतभैरवरसः | यो० र० | उन्मादः |
| तैलम् | गन्धराजतैलम् | भै० र० | गदोद्वेगः |
| | पलङ्कषाद्यतैलम् | भै० र० | अपस्मारः |
| | त्रिफलादितैलम् | च० सं० | अपस्मारः |
| स्वरसः | ब्राह्मीस्वरसः | शा० सं० | उन्मादः |
| कल्कः | ब्राह्मीयोगः | वीर० मि० | उन्मादः |
| | लशुनकल्कः | भै० र० | अपस्मारः |
| घृतम् | कल्याणघृतम् | च० र० | अपस्मारः |
| | हिङ्गुघृतम् | च०सं० | उन्मादः |
| | महापैशाचघृतम् | च० सं० | उन्मादः |
| | लशुनाद्यघृतम् | च० सं० | अपस्मारः |
| | हिंग्वादिघृतम् | च० सं० | अपस्मारः |
| | पन्चगव्यं घृतम् | च० सं० | अपस्मारः |
| | महापञ्चगव्यं घृतम् | च० सं० | अपस्मारः |
| | ब्राह्मीघृतम् | च० सं० | उन्मादः |
| | सैन्धवादिघृतम् | च० सं० | अपस्मारः |
| | सिद्धार्थकं घृतम् | अ० हृ० | उन्मादः |
| | त्रिकटुकादिघृतम् | अ० हृ० | उन्मादः |
| | नतादिघृतम् | अ० हृ० | उन्मादः |
| | ब्राह्मीघृतम् | अ० हृ० | उन्मादः |
| | कूष्माण्डघृतम् | वृ० मा० | अपस्मारः |
| | स्वल्पचैतसघृतम् | च० सं० | अपस्मारः |

| | | | |
|---|---|---|---|
| | शिवाघृतम् | भै० र० | उन्मादः |
| धूपनम् | शल्लकादिधूमः | च० सं० | उन्मादः |
| | पलङ्कषादिधूमः | च० सं० | उन्मादः |
| | पिप्पल्यादिधूमः | च० सं० | उन्मादः |
| | नकुलादिधूमः | च० सं० | उन्मादः |
| | ऋक्षादिधूमः | वृ० मा० | उन्मादः |
| | माहेश्वरधूमः | यो० श० | उन्मादः |
| | अजरामादिधूमः | सु० सं० | अमानुषोपसर्गः |
| | निम्बपत्रादिधूमः | भि० क० सि० | उन्मादः |
| वर्तिः | उन्मादसूदनीवर्तिः | अ० हृ० | उन्माद |
| | त्र्यूषणादिवर्तिः | वृ० मा० | अपस्मारः |
| | शिरीषादिवर्तिः | वृ० मा० | अपस्मारः |
| | कायस्थादिवर्तिः | च० सं० | अपस्मारः |
| अञ्जनम् | श्वपित्ताञ्जनम् | चि० मा० | अपस्मारः |
| | मनोह्वाद्यञ्जनम् | वृ० मा० | अपस्मारः |
| | शिरीषाद्यञ्जनम् | च० सं० | अपस्मारः |
| | अपामार्गाद्यञ्जनम् | च० सं० | उन्मादः |
| | मरिचाद्यञ्जनम् | भै० र० | अपस्मारः |
| | कृष्णाद्यञ्जनम् | भै० र० | अपस्मारः |
| नस्यम् | निर्गुण्ड्यादिनावनम् | यो० त० | उन्मादः |
| | यष्ट्यादिनावनम् | चि० सा० | अपस्मारः |
| | कुष्ठादिनस्यम् | च० सं० | अपस्मारः |
| | शल्यकादिनस्यम् | च० सं० | उन्मादः |
| | भारंग्यादिनावनम् | च० सं० | उन्मादः |
| | सिद्धार्थागदः | चि० सा० | अपस्मारः |
| रसाः | स्मृतिसागररसः | सि० यो० सं० | उन्मादः |
| | अपतन्त्रकादिवटी | सि० यो० सं० | अपतन्त्रकः |
| | चतुर्भुजरसः | सि० यो० सं० | उन्मादः |
| | अपस्माराररसः | सि० यो० सं० | अपस्मारः |
| | अपस्मारहररसः | सि० यो० सं० | अपस्मारः |
| | वातकुलान्तकरसः | सि० यो० सं० | अपस्मारः |
| | वृहद्वातचिन्तामणिः | सि० यो० सं० | वाताव्याधिः |
| | मूर्च्छान्तकरसः | सि० यो० सं० | मूर्छा |
| अरिष्टः | अश्वगन्धारिष्टः | भै० र० | अपस्मारः |
| | सारस्वतारिष्टः | भै० र० | अपस्मारः |
| | दशमूलारिष्टः | भै० रः | वातव्याधिः |

**मूर्च्छायां पथ्यानि**—शतधौतघृतम्,[१] वर्षाजलं, घनच्छाया, मृदवस्तिक्ताश्च पदार्थाः, लाजमण्डः, लोहितशालयः (अगहनी चावल), पुराणो यवः, दशवर्षस्थितं घृतम्, मुद्गकलाययूषः, जाङ्गलमांसरसः, रागाषाडवाः, गोदुग्धः, सिता, पुराणः कुष्माण्डः, पटोलः, कदलीफलम्, हरीतकी, नारिकेलम्, दाडिमफलम्, अत्युच्चध्वनिः, उच्चैर्गीतं वाद्यञ्च, इष्टस्मरणम्, चिन्तनम्, आत्मज्ञानम् धैर्यञ्चेति पथ्यानि भवन्ति ।

मूर्च्छावस्थायाञ्च नासामुखद्वारनिरोधः, यथावश्यकं लंघनं, वमनं, विरेचनञ्च प्रयोज्यम् । क्रोधोद्भावनम्, भयोद्भावनम्,, असुखाशय्या, विचित्राः कथाः, अद्भुतदृश्यदर्शनम्, मधूकपुष्पाणि, ताण्डुलीयकशाकं लघूनि चान्नानि, श्वेतचन्दनानुलेपनं, कर्पूरवासितजलसेवनं, शीतलवालुकाषूपवेसनञ्च पथ्यम् ।

**अपथ्यानि**—ताम्बूलं, क्रमुकं, सर्षपादिपत्रशाकं, कठिनदन्तघर्षणपूर्वकं दन्तधावनं, आतपं, विरुद्धाशनम्, व्यवायः, स्वेदनं, कटुपदार्थसेवनं, निद्राविनिग्रहः, तृष्णानिग्रहः, तक्रं च मूर्च्छायामपथ्यं भवति ।

**प्रशस्तपथ्यम्**

सेकावगाहा मणयः सहाराः
शीताः प्रदेहा व्यजनानिलाश्च ।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छास्वनिवारितानि ।।
सिद्धानि वर्गे मधुरे पयांसि
सदाडिमा जांगलजा रसाश्च ।
तथा यवा लोहितशालयश्च
मूर्च्छासु शस्ताश्च सतीनयूषाः ।। (चक्रदत्तः मूर्च्छा०)

**मदात्यये पथ्यानि**—संशोधनं[२], संशमनं, निद्रा, लंघनं परिश्रमः,[३] वर्षोषिताः शालयः षष्टिकाः, मुद्गः, माषः गोधूमः, कलायः, रागषाडवौ, एणतित्तिरिलावमांसरसः, अजादक्षवर्हिशशानामामिषम्, वेसवारः[४], हृद्यं मद्यं, पयः, सिता, तण्डुलीयं, पटोलं, मातुलुङ्गं, परूषकम्, धारागृहं, चन्द्रिका, मणिधारणं, मित्रसंगमः, क्षौमवस्त्रं, प्रियालिङ्गनम्, उच्चैर्गीतं वादित्रञ्च, शीतलाम्बु, चन्दनानुलेपः स्नानञ्च समाचरणीयम् ।

---

१. भै० र०—मूर्च्छा० ।

२. भै० र० मदात्यय० तथा यो० र० मदात्यय० ।

३. सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः ।
जम्बूफलरसैर्युक्तो रागो राजिकया कृतः ।।
षाडवो मधुराम्लादिरससंयोगसंभवः ।

४. वेसवारः—शुण्ठीमरिचपिप्पल्यो धान्यकाजाजिदाडिमम् ।
पिप्पलीमूलसंयुक्तं वेसवार इति स्मृतिः ।। (यो० र०)

तत्रैनमम्बुरुहपत्रसमैः स्पृशन्त्यः
शीतैः करोरुवदनैः कठिनैः स्तनैश्च ।
तोयावगाहकुशला मधुरस्वभावाः
संहर्षयेयुरबलाः सुकलैः कलापैः ॥
धारागृहे प्रगलितोदकदुर्दिनाभे
क्लान्तः शयीत सलिलानिलशीतकुक्षौ ।
गन्धोदकैः सकुसुमैरुपसिक्तभूमौ
पत्राम्बुचन्दनरसैरुपलिप्तकुडचे ॥
जात्युत्पलप्रियककेशरपुण्डरीक-
पुन्नागनागकरवीरकृतोपचारे ।
तस्मिन् गृहे कमलरेण्वरुणे शयीत
यत्नाहृतानिलविकम्पितपुष्पदाम्नि[1] ॥

**अपथ्यम्**

स्वेदोऽञ्जनं धूम्रपानं नावनं दन्तघर्षणम् ।
ताम्बूलं चेत्यपथ्यं स्यान्मदात्ययविकारिणाम्[2] ॥

**उन्मादे पथ्यानि**—गोधूमः[3], मुद्गः, लोहितशालिः, धारोष्णं पयः, शतधौत-घृतम्, नवीनं घृतं भोजने, पुराणञ्चौषधार्थं, कूर्मामिषं, जाङ्गलपशुमांसरसः, पुराणकुष्माण्डफलं, पटोलं, ब्राह्मीदलं, वास्तुकं, तण्डुलीयम्, खराश्वयोर्मूत्रं, वर्षाम्बु, हरीतकी, सुवर्णभस्म, नारिकेलं, द्राक्षा, कपित्थफलं पनसफलञ्चेति पथ्यानि भवन्ति ।

वातजे स्नेहपानं, पैत्तिके विरेचनं, कफजे च वमनं प्रयोज्यम् । वस्तिकर्म संतर्जनं ताडनं, अञ्जनञ्च यथास्वं प्रयोज्यम् । आश्वासनं, त्रासनं, बन्धनं, भयोत्पादनम्, दानं, हर्षणम्, धूपदानं, दमः, विस्मारणं, प्रदेहः, सिराव्यधः, अद्भुतशब्द-श्रावणं दृश्यदर्शनं वा धैर्यं, बुद्धेः स्थिरीकरणं, मनसः प्रहर्षणं आत्मावबोधनञ्च प्रशस्तम् ।

**कामादिजोन्मादे**

कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्त्या सान्त्वायासैश्च तं जयेत् ॥

**देवादिजे च**

पूजाबल्युपहारशान्तिविधयो होमेष्टमन्त्रक्रिया
दानं स्वस्त्ययनं व्रतानि नियमः सत्यं जपो मङ्गलम् ।
प्रायश्चित्तविधानमञ्जनविधी रत्नौषधीधारणम्
भूतानामनुरूपमिष्टचरणं गौरीपतेरर्चनम् ॥

---

१. सुश्रुत० उ० त० ४७।६०–६२; २. भै० र० मदात्यय० ।
३. भै० र० उन्माद० तथा यो० र० ।

ये च स्युर्भुवि गुह्यकाश्च प्रमथास्तेषां समाराधनम् ।
देवब्राह्मणपूजनं च शमयेदुन्मादमागन्तुकम् ।।

**अपथ्यानि**—मद्यं, विरुद्धाशनम्, उष्णभोजनं, निद्रानिग्रहः, क्षुत्तृड्वेग-निग्रहः, व्यायामः, कारवेल्लकं, पत्रशाकानि, तिक्तद्रव्याणि बिम्बीफलञ्चापथ्यम् ।

**स्मरोन्मादे पथ्यम्**—

वातानुलोमनं यच्च सुपचं वह्निदीपनम् ।
अन्नान्नं वितरेत् प्राज्ञो विपरीतं विवर्जयेत् ।। (भै० र०)

**अपस्मारे पथ्यानि**—नस्यं, शिराव्यधः, दानं, त्रासनं, भयसंजननं, त्रासनं, ताडनं, हर्षः, धूम्रपानं, विस्मयोत्पादनम्, बुद्धिधृतिस्मृतिजागरणं, स्नानं, अभ्यंगः, लोहितशालयः, मुद्गाः, कलायः, पुराणसर्पिः, कूर्मामिषं, जांगलमांसं, गोदुग्धं, ब्राह्मी-वचा-शंखपुष्पी-शोभाञ्जनप्रयोगः, पटोलं, पुराणकुष्माण्डफलं, वास्तूकं, स्वादुदाडिमम्, द्राक्षा, धात्री, परूषकम् खरमूत्रम्, अश्वमूत्रम्, वर्षाम्बु, हरीतकी चेति पथ्यानि ।

**अपथ्यानि**—चिन्ता, शोकः, भयं, क्रोधः, अशुचिभोजनम्, मद्यम् मत्स्यं, विरुद्धभोजनम्, तीक्ष्णोष्णगुरुभोजनम्, अतिव्यवायः, अत्यायासः, पूज्यपूजा-व्यतिक्रमः, पत्रशाकानि, बिम्बीफलम्, क्षुत्तृण्निद्रावेगनिग्रहः, इत्यपथ्यानि भवन्ति ।

**भूतग्रहेषु च**—देवादिप्रकोपजोन्मादवत् पथ्यापथ्यमवगन्तव्यम् । तथा च दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराण्यनुचिन्त्य यथास्वं घृतपानं, तन्त्रमन्त्रप्रयोगः, देवादीनामपचितिः, बलिप्रदानं, उपहारः, यज्ञं, जपः, शौचम्, स्वस्तिवाचनं, मृद्वञ्जनं, रत्नधारणं, औषधिधारणं, दानं, व्रतोपवासौ, नस्यादिकञ्च यथाविधि प्रयुक्तं पथ्यं भवति ।

**आरोग्यलक्षणम्**—यदा च प्राणोदानसमानव्यानापानात्मको वायुरखिलदेह-प्रसृतासु सिराधमन्यादिषु हृदयादिषु च सामर्थ्यमादधाति स्वस्वकार्यसम्पादनाय, चेष्टावहनाडीपथा पेश्यादिषु गतिमातनोति, असमीहिते विषये प्रवृत्तञ्चेतो नियमयति, समीहिते चार्थे विनियुङ्क्ते करणानि चोदयति विषयग्रहणाय, शब्दादिकांश्चार्थान् संज्ञावहनाडीमुखेन मस्तिष्कादिष्वभिमुखीकरोति, शरीरधा-तूंश्च यथास्वं सन्निवेशयति, सन्दधाति च देहं, शब्दसंयोजनादिमानसव्यापार-पूर्वकं वागिन्द्रियञ्च प्रवर्त्तयति वाचां प्रवृत्तये, श्रवणेन्द्रियं स्पर्शेन्द्रियञ्च शब्दस्पर्श-योर्ग्रहणे सामर्थ्यं प्रददाति, अग्निञ्च समुदीरयति, स्वेदमूत्रपुरीषांश्च बहिः क्षिपति, शुक्रशोणितसंयोगजस्य एकस्य पिण्डस्यानेकशः विभाजनेन परस्परं संयोजनेन च स्थूलानामणूनाञ्च स्रोतसां निर्मितिमारचयति शरीरोत्पत्तिकाले गर्भशरीराकृतिञ्च करोति, प्रतिक्षणं शीर्यमाणस्य शरीरस्याभिनवनिर्माणपरम्प-रयायुः सन्तानञ्च विदधाति । पित्तं रसरञ्जनात्, आहारपाचनाद् हृदि चोजः सन्निधानादालोचनादरूपस्य, ग्रन्थधारणसामर्थ्यदानादूष्मसंजननाच्च रञ्जकपाचक-साधकालोचकभ्राजकभेदेन क्षुत्तृष्णादेहमार्दवप्रमाभिरनुगृह्णाति कायम् ।

श्लेष्मा च सन्धिसंश्लेषणात्, स्नैग्ध्यप्रदानात्, व्रणादीनामारोपणाद्देहस्य बन्धनाद् दार्ढ्यकरणाद् गौरवापादनान्मनसः नियमनाच्च श्लेष्मकक्लेदकबोधकतर्पकावलम्बकभेदेनामाशयोरःशिरःकण्ठसन्ध्यादिषु सामर्थ्यदानेन शरीरमुपकरोति।

यदा च पुरुषः पृथिव्यादिभूतद्रव्यभेदेन पाञ्चभौतिकं पेयलेह्यभोज्यभक्ष्यभेदेन चतुर्विधं मधुरादिरसभेदेन[1] षड्रसं शीतोष्णभेदेन द्विविधवीर्यं, शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णभेदेनाष्टविधवीर्यं, गुरुलघ्वादिगुणभेदेन विंशतिगुणं स्वाभीप्सितगन्धवर्णरसस्पर्शं सर्वाण्याहारविधिविशेषायतनानि हिताहितत्वेन विचार्य स्वास्थ्यवृत्तीयद्वादशाशनप्रविचारमपेक्ष्य,[2] इन्द्रियोपक्रमणीयोक्तं[3] रसविमानोदितञ्चाहारविधिविधानं सम्यक् सम्प्रधार्य, सकलप्राणिप्राणहेतुकं, सौस्वर्यप्रतिभाप्रज्ञाप्रदं, तुष्टिपुष्टिकरं, ऐहिकामुष्मिकापवर्गश्रेयःसम्पादनपरं विविधमाहारजातमुपयुङ्क्ते, तदा जाठरश्च भगवानग्निस्तमशनं यथाकालं सम्यग्विपाच्य रसादिरूपतां प्रापयति, स च रसः बालमध्यस्थविरान् सर्वानेव प्रीणयति, तर्पयति, वर्धयति, धारयति, यापयति च चरीरं, शारीरेषु च भावेषु यथास्वं योगक्षेममावहति।

एवञ्चाग्निः शरीरेऽकुपितः सन् शुभाशुभानि करोति, अग्निमूलमेव च प्राणिनां बलमारोग्यमायुश्च। धातवश्च स्वेषां प्राकृतकर्मणां सौष्ठवापादनेन शरीरमनुगृह्णन्ति। तद्यथा–रसस्तोषयति, प्रीणयति, शोणितस्य च पुष्टिं विदधाति। रक्तं अवदातवर्णतां मांसपुष्टिं जीवनक्षमत्वञ्चापादयति। मांसं पुष्टिं शरीरस्य मेदसश्च। मेदः स्नेहनं स्वेदनमस्थ्नां दार्ढ्यञ्च। अस्थीनि देहं धारयन्ति मज्ज्ञः पुष्टिञ्च कुर्वन्ति। मज्जा प्रीतिर्बलं शुक्रपुष्टिं अस्थ्नां च पूरणं करोति। रेतश्च धैर्यं प्रीतिं देहबलं प्रमदासु हर्षं च्यवनञ्च करोति बीजार्थेऽश्च प्रभवति।

एवञ्च पुरीषं निःसारमप्याशयबलकारितया वाय्वग्निधारणमवष्टम्भं च करोति। मूत्रं मूत्राशयं पूरयति आर्द्रत्वञ्च विदधाति। स्वेदश्च देहं क्लेदयति त्वचश्च सौकुमार्यमाधत्ते।

यदा चोच्छ्वासनिःश्वसौ, निमेषोन्मेषाद्याश्च प्रेक्षणाविशेषा यथायथं प्रभवन्ति, शरीरजीवयोर्योगश्चाव्यापन्नः, मनसश्च गतिरतिरस्कृता, मनसश्च कञ्चनेन्द्रियं परित्यज्येन्द्रियान्तरसञ्चरणमबाधं प्रेरणधारणादिकञ्चातिरोहितं, स्वप्ने च क्वचनापि देशे व्रजनं, वामेन चक्षुषाऽवलोकितस्य वस्तुनो वामेतरे-

---

१. च० सू० २५। २. सु० सं० उ० त० ६४।
३. च० सू० ८। ४. च० वि० १।

णानुगमः, सातिशयोऽर्थाभिलाषः, रागद्वेषाभिनिवेशाऽहंकारादयश्च यथास्वमुपतिष्ठन्ते ।

यदा च कायवाङ्मानसेषु समस्तेष्वपि व्यापारेषु सामर्थ्यमप्रतिहतं, बाह्यानामिन्द्रियाणां वाक्पाणिपायूपस्थानां स्वेषु वचनादानगमनविसर्गानन्देषु सम्यक्प्रवृत्तिः, आभ्यन्तराणाञ्चेन्द्रियाणां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मकर्मसु शब्दस्पर्शरूपरसगन्धेषु स्वकार्यसम्प्रत्ययो भवति ।

यदा चेन्द्रियानुग्राहकं मनःकर्तव्याकर्त्तव्यतया चिन्तयति, याथार्थ्यायाथार्थ्याभ्यां विचारयति, ऊह्यञ्चावगाहते, ध्यायति ध्येयं, संकल्पयति शिवमशिवं वेति, इन्द्रियेषु चाधितिष्ठति, अवाञ्छितेषु प्रसक्तं मनःस्वयमेव नियन्त्रयति, आलोचनप्रत्यालोचनाभ्यां हेयोपादेयतया विकल्पयति च ।

एवञ्चाव्याहतप्रसरं मनः यथास्वं स्वविषयग्रहणे यदा प्रवर्तते तदाऽऽरोग्यमिति व्यवस्येत् । तथा च—

प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥

( च० च० ९।१०४ )

## उपसंहारः

भूतविद्या नामायुर्वेदस्यान्यतममङ्गम् । अष्टांगायुर्वेदपर्यालोचने प्राधान्येन कायचिकित्सांगमेव पुनर्वस्वात्रेयाग्निवेश-भेड-जतूकर्ण-पराशर-हारीत-क्षारपाणि-प्रभृतिभिराप्तैराचार्यैर्विचारशाणनिघर्षणेनोज्ज्वलीकृतमिति समुपलब्धायुर्वेद-तन्त्र-दर्शनेनावगम्यते । शल्याङ्गञ्च धन्वतरि-सुश्रुत-औपधेनव-औरभ्र पौष्कलावत-करवीर्य-गोपुररक्षितप्रभृतिरभिन्दनीयैराचार्यैःसर्वप्राथम्यगौरवदृशा प्रतिष्ठामाप । शालाक्यम् अगदतन्त्रम्, कौमारभृत्यम् रसायनम् बाजीकरणञ्च यद्यपि न स्वातन्त्र्येण विकासपथमानीतास्तथा निमि-दारुवाह-चरक-माण्डव्याग्निवेशप्रमुखैर्यथास्वं स्वतन्त्रेषु उपादेक्ष्यन्त ।

आयुर्वेदविज्ञानप्रवाहो वेदब्रह्मणोपनिषत्सूत्र-भाष्य-तन्त्रायुर्वेदसंहिताप्रकीर्णसाहित्यरूपेणानेकशाखाभिः प्रवहन् परवर्तिमनीषिवर्याणां विचारधाराभिरुपबृंह्यमाणो मानवक्षेत्रं सरसीकरोति । तस्य विज्ञानस्य प्रविभागास्तत्तद्विषयाचार्यैरविश्रान्तप्रवर्तितैर्विचारैः परिष्करणैर्नवनवप्रयोगानुभवैरुन्नतिपदवीमारूढाः । परम् आद्यविज्ञानकल्पतरोरायुर्वेदस्य 'भूतविद्या' शाखा विच्छिन्नविकलांगभावमापद्यमाना दृष्टिपथातीतां दशां गमितेति स्मारं स्मारं चेतो दूयते ।

एषा च विद्या वेदब्राह्मणोपनिषदादिषु क्वचित्क्वचिदुल्लिखिताऽपि स्वातन्त्र्येण एका 'विद्या' समाम्नाता । अथर्ववेदे चैषा विद्या परां समुन्नतिमाप । ते च विचाराः कालक्रमेण कारुणिकैः महर्षिभिः संवर्धनेनानुगृहीता अथापि विद्यानुरागिणां मनः प्रीणयन्ति ।

ये चाद्यत्वे समुपलभ्यन्ते सद्ग्रन्थास्तेषां गवेषणेन गुणग्राहिभिर्विपश्चिद्वर्यैः शतशः प्रयत्नैः प्राकाश्यमानेया भूतविद्या ।

अनभिमतं भूतविद्याङ्गविलोमं प्रतिरोद्धुं केचन आचार्या सद्विचाररत्नैर्विषयममुं समुज्जृम्भयितुं कृतप्रयत्ना अदृश्यन्त । तत्र च काशी-हिन्दू-विश्वविद्यालयस्थस्य आयुर्वेदमहाविद्यालयस्य भू० पू० प्राचार्यैः स्व० बालकृष्ण-अमरनाथजीपाठकमहोदयैः 'मानसरोग-विज्ञान' ग्रन्थलेखनेन विषयेऽस्मिन् प्रभूतं प्रकाशमधिक्षिप्तमिति तेषामयं प्रयासोऽभिनन्दनीयः। यैश्च पूर्वाचार्यैर्भूतविद्याविषये यत् किमप्यभिमतं प्राकाश्यमनीयन्त, तत्सर्वमत्र निबन्धे यथास्थलमाकलितम् ।

केनाप्यंशेनाद्ययावद् भूतविद्यासम्बन्धिविचारजातमाचार्यैः स्फुटीकृतम्, तदत्र यथामति पर्यालोचितम् । 'भूतविद्या' विषयेऽतिपूर्वकालादारभ्यानुवृत्तानां तदीयविषयाणां परिज्ञानाय अनुसन्धेयपुरातनेतिवृत्तपरिगणनपुरःसरमैतिहासिकं विवरणमुपस्थापितम्, येन प्राचीनभारतीया भूतविद्या तदालोकेन स्फुटीभावं लभेत् । एतदर्थमत्र वेद-ब्राह्मण-उपनिषत्-सूत्रग्रन्था आलोचिताः, चरक-सुश्रुत-वाग्भट-काश्यप-भेलसंहिता गवेषिताः, प्रकीर्णवाङ्मयञ्चाधीतम् । रामायण-महाभारत-पुराण-जैनग्रन्थ-ज्योतिषशास्त्रग्रन्थाश्चानुशीलिताः । तेषु च भूतविद्यायाः समुपलभ्यमानाः सन्दर्भाः स्वीयबुद्ध्या समालोचिताः । भारतीयञ्च दर्शनक्षेत्रमाकलितम् ।

भूतविद्यायां येषाञ्च देवासुरादीनामुल्लेखः कृतो वर्तते, तेषां निर्वचनम् । पारिभाषणं, भूतविद्यायाः क्षेत्रमप्यत्राकलितमास्ते । भूतविद्याधिकरणभूता आत्म-मनः-प्रकृति-गुणाश्च विवेचिताः ।

भूतविद्यासम्बन्धिरोगाणां निदानं सोपपत्तिकमाख्यातम्, सैद्धान्तिकी चिकित्सा, चिकित्सासूत्राणि विशिष्टा च चिकित्सा समाकलिता वर्तते । वैशद्येन चात्र यौगिकी चिकित्सा सपुपबृंहिता, मन्त्र-यन्त्रप्रयोगाश्चात्र वर्णिता । युक्तिव्यपाश्रयचिकित्सा, आवस्थिकी चिकित्सा, पथ्यापथ्यादिकञ्च समुपवर्णितम् ।

भूतविद्याविषये यद्यपि नैवोपलब्धुं शक्यते क्वचिदेकत्र प्रभूता सामग्री, तथापि विवेचकनां पुर एतदुपधारयितुं महत् सन्तोषस्थानं दृश्यते, यत् सुदीर्घकालादारभ्य सम्प्रति यावत् भूतविद्यासम्बन्धिनः सहस्रशः प्रतीका गृहे गृहे प्रसरन्ति। अप्रकाशिताऽपि भूतविद्या सर्वसाधारण्येन लब्धावकाशा प्रसृता । विश्वस्मिन् येन केनापि रूपेणाद्यापि भूतविद्या लब्धप्रसरा प्रचलिता च वरीवर्ति ।

अस्य निबन्धस्य प्रकाशनेन अनधिगतार्था, अनिश्चीयमाना अप्रकाशा च भूतविद्या प्रकाशपथमारोढुकामा स्यात् कदाचिदित्याशासे ।

ईदृशे गहने विमर्शे न केवलमायुर्वेदीयग्रन्थानां परिशीलनं पर्याप्तं भवति, अपितु समस्तानां संस्कृतग्रन्थान्तराणां देशान्तरीयेतिवृत्तसूचकानां नानाभाषात्मकानां ग्रन्थानां प्राच्यानां पाश्चात्त्यानां च विपश्चितां विचाराणां पर्यालोचनमपेक्ष्यते ।

मादृशस्य दुर्बलबुद्धेर्जनस्य भूतविद्याकान्तारस्य विषमे पथि सञ्चरितुकामस्य भूतविद्यारहस्योद्घाटनप्रयासः साहसमात्रमेव, तथापि प्राचामाचार्यचरणानामाप्तवचनप्रदीपैरुद्भासिते पथि सञ्चरितुं कृतसाहसस्य मम कतिपये पदन्यासा यथाकथञ्चनाभिलक्षितस्थानस्य प्राप्तये प्रभवेयुरिति विश्वसीमि। निबन्धोपनिबद्धसाधनैर्भूतविद्याविषये तादृशानि साधनानि प्राकाश्यं नीतानि, यानि भूतविद्यापथि सञ्चरिष्णून् अग्रे गमयितुं पारयिष्यन्तीति।

अस्य निबन्धस्य लेखने यथावसरलाभमायुर्वेदीया इतरे च ग्रन्थनिकराः दृष्टिपथमानीतास्तानभिसमीक्ष्य स्वबुद्धिबलोदयेन विषयेऽस्मिन् वाग्विनियोगमाचरन् वाग्देव्याः परिचर्यां मन्यमानो यत्किमपि मनसि प्रतिभातं तदुपन्यस्य भ्रान्तिषु च क्षमामभ्यर्थयन् विद्याव्यसनिनां विपश्चितां समक्षममुं 'भूतविद्यायाः संवीक्षणात्मकमध्ययनम्' समुपस्थापयामि।

॥इति "आयुर्वेदशास्त्रे भूतविद्यायाः संवीक्षणात्मकमध्ययनम्"॥

। सप्तमं काण्डं समाप्तम्।

परिशिष्टम्

# आधारग्रन्थसूची

| संकेतसारिणी | वेदः |
|---|---|
| ऋ० वे० | ऋग्वेदसंहिता |
| य० तै० सं० | यजुर्वेदीया तैत्तिरीयसंहिता |
| अ० वे० | अथर्ववेदः |
| दै० सं० | दैवतसंहिता |
| गो० ब्रा० | गोपथब्राह्मणम् |
| शत० ब्रा० | शतपथब्राह्मणम् |
| ए० ब्रा० | ऐतरेयब्राह्मणम् |
| साम० वि० ब्रा० | सामविधानब्राह्मणम् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० आ | तैत्तिरीयारण्यकम् |
| बृह० उप० | बृहदारण्यकोपनिषद् |
| छा० उप० | छान्दोग्योपनिषद् |
| कठ० उप० | कठोपनिषद् |
| तै० उप० | तैत्तिरीयोपनिषद् |
| नृ० उ० | नृसिंहपूर्वतापिनीउपनिषद् |
| ई० उप० | ईशावास्योपनिषत् |
| गीता | श्रीमद्भगवद्गीता |
| | सूत्रग्रन्थाः |
| कौ० सू० | कौशिकसूत्रम् |
| आ० श्रौ० सू० | आश्वलायनश्रौतसूत्रम् |
| आ० गृ० सू० | आपस्तम्बगृह्यसूत्रम् |
| बो० गृ० सू० | बोधायनगृह्यसूत्रम् |
| शा० गृ० सू० | शाङ्खायनगृह्यसूत्रम् |
| गो० गृ० सू० | गोभिलीयगृह्यसूत्रम् |
| खा० गृ० सू० | खादिरगृह्यसूत्रम् |
| मा० गृ० सू० | मानवगृह्यसूत्रम् |
| हि० गृ० सू० | हिरण्यकेशिगृह्यसूत्रम् |
| बो० धर्म० सू० | बोधायनधर्मसूत्रम् |
| आ० गृ० का० | आश्वलायन गृह्यकारिका |

आयुर्वेदग्रन्थाः

| | |
|---|---|
| च० सं० | चरकसंहिता |
| सु० सं० | सुश्रुतसंहिता |
| आ० दी० | आयुर्वेददीपिका (चरकटीका) |
| नि० सं० | निबन्धसंग्रहः (सुश्रुतटीका) |
| अ० हृ० | अष्टाङ्गहृदयम् |
| का० सं० | काश्यपसंहिता |
| भे० सं० | भेलसंहिता |
| हा० सं० | हारीतसंहिता |
| शा० सं० | शाङ्र्गधरसंहिता |
| च० द० | चक्रदत्तः |
| र० र० स० | रसरत्नसमुच्चयः |
| म० कौ० | मधुकोषः (माधवनिदानटीका) |
| यो० र० | योगरत्नाकरः |
| भै० र० | भैषज्यरत्नावली |
| भा० प्र० | भावप्रकाशः |
| आ० वि० | आयुर्वेदविज्ञानम् |
| प्र० शा० | प्रत्यक्षशारीरम् (उपोद्घातः) |
| कै० नि० | कैयदेवनिघण्टुः |
| रा० नि० | राजनिघण्टुः |
| नि० र० | निघण्टुरत्नाकरः |
| | **आधुनिका आयुर्वेदग्रन्थाः** |
| वे० आ० | वेदों में आयुर्वेद |
| र० यो० सं० भू० | रसयोगसंग्रह भूमिका |
| मा० रो० वि० | मानस रोगविज्ञान |
| सं० रो० वि० | संक्रामकरोग विज्ञान |
| भि० क० सि० | भिषक्कर्मसिद्धिः |
| र० त० सा० | रसतन्त्रसार |
| आ० बृ० इ० | आयुर्वेद का बृहत् इतिहास |
| औ० रो० | औपसर्गिक रोग |
| | **ज्योतिषग्रन्थाः** |
| बृ० सं० | बृहत्संहिता |
| भी० वि० | भीमविनोदः |
| वी० सि० | वीरसिंहावलोकः |
| | **काव्यग्रन्थाः** |
| वा० रा० | वाल्मीकिरामायणम् |
| म० भा० | महाभारतम् (शान्तिपर्वणि) |

